॥ श्रीः ॥

चौखम्बा संस्कृत ग्रन्थमाला

ग्रन्थाङ्काः ४९३, ४९४, ४९५, ४९६

( ग्रन्थ संख्या ९२ )

॥ श्रीः ॥

# कामकुञ्जलता

सम्पादकः

पण्डितराज ढुण्ढिराजशास्त्री

चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

१९६७

THE

CHOWKHAMBA SANSKRIT SERIES

A

Collection of Rare & Extraordinary Sanskrit Works.

Nos. 493, 494, 495 & 496

( Work No. 92 )

# KĀMAKUNJALATĀ

( A Collection of Old and Rare works on

Kāma Śāstra )

*Edited by*

PANDITRAJ DHUNDHIRĀJA ŚĀSTRI

THE

CHOWKHAMBA SANSKRIT SERIES OFFICE

VARANASI-1 ( India )

1967

# कामकुञ्जलतान्तर्गतग्रन्थाः तत्प्रणेतारश्च

१. पौरूरवसमनसिजसूत्रम् (सटीकं) श्रीजयकृष्णदीक्षितकृतम्
२. स्मरदीपिका श्रीमीननाथप्रणीता
३. कादम्बरस्वीकरणसूत्रम् (सटीकम्) राजर्षिपुरूरवःप्रणीतम्
४. कादम्बरस्वीकरणकारिका श्रीराजर्षिभरतप्रणीता
५. पञ्चसायकम् श्रीज्योतिरीश्वरविरचितम्
६. नर्मकेलिकौतुकसंवादः (सटीकः) कविराजमुकुटदण्डिप्रणीतः
७. रतिमञ्जरी श्रीजयदेवकविविरचिता
८. बाभ्रव्यकारिका ( सव्याख्या ) श्रीबाभ्रव्यमुनिप्रणीता
९. रतिरत्नप्रदीपिका श्रीप्रौढदेवराजविरचिता
१०. रतिकल्लोलिनी श्रीदीक्षितसामराजविरचिता
११. शृंगाररसप्रबन्धदीपिका कुमारहरिहरनामाङ्कनप्रणीता
१२. कामतन्त्रकाव्यम् ( सटीकम् ) श्रीदैवज्ञसूर्यवर्यकृतम्

# उद्बोधः

## ( १ ) रतिशास्त्रम्

सर्वगं मन्मथं कान्तं रतिकामप्रवर्धनम् ।
वन्दे भुवनविख्यातं क्रोडीकृतजगत्त्रयम् ॥

इह खलु भगवता सृष्टिकर्त्रा निखिलभुवनकार्यसम्पादनाय वैष्णवीं मोहमयीं मायामङ्गीकृत्य भुवनविख्यातं रतिशास्त्रं प्रवर्तितम् । अन्यथा विना तां मायां जगत्संभारसृष्टिरचनाऽनुपपत्त्या मिथुनजन्या सृष्टिर्न विस्तृतिमुपगच्छेत् । भुवनं च पण्ढवद् अग्रे विस्तृतिं न यायात् । अतः सृष्टिकर्त्रा भुवनविस्तृतये इदं रतिशास्त्रमपि सकलशास्त्रवद् रचितम् । इदन्तु महर्षिभिरपि सेव्यम्, अन्यथा पण्ढत्वात् सृष्टिवैयर्थ्यं स्यात् । अतो भगवता सृष्टिकर्त्रा जगत्प्रसूतये इदमपि रतिशास्त्रं मैथुनसृष्टिपरम्पराद्वारा भुवनोपकाराय विनिर्मितमस्मिंश्च सकलभुवनमण्डलं स्थापितम् । येन सकलभुवनोपभोगोऽनायासेन मैथुनसृष्ट्या वृद्धिमुपगच्छेत् । इति तावत् सृष्टिकर्तुराशयः । इदमेवाभिप्रेत्य रतिशास्त्रमपि त्रिभुवनमण्डले विस्तृतमभूत् । अन्यथा सर्वा सृष्टिः पण्ढवत् विफला भवेत् । न भवेच्चादिराजमनुशतरूपावद् मैथुनी सृष्टिः किन्तु अग्रे भुवनमन्धकारमयं स्यात् । एवं चानेनाशयेनैव योगिराजपार्वतीसहितशम्भुनेदं रतिशास्त्रमपि प्रवर्तितम् । रतिशास्त्रस्यास्याभूङ्गानि विस्तृतानि सकलेषु रतिशास्त्रेषु भिन्नरूपाणि वर्णितानि सन्ति । तानि च स्वयं

योगिराजाऽन्तेवासितां प्राप्य गुरुदयया लब्धव्यानि। तेषामाचारश्च तेभ्यः सकाशाल्लब्धव्यः। रतिशास्त्रमिदमतिविस्तृतमपि श्रीगुरुचरणलब्धशेमुषीबलात् पाठकैः प्राप्तव्यम्। एवं मयापि गुरुदेवताकृपालब्धं रतिशास्त्रं जिज्ञासूनां कृते रचितं रतिशास्त्राम्बुधौ विहर्तुं तद्रसिकैर्ग्रहीतव्यम्। विस्तरस्त्वस्यापि शिवपार्वतीसंवादात्मके रतिशास्त्रे द्रष्टव्यः।

## ( २ ) योनितन्त्रम्

अत्रेदमुच्यते—यथा सत्त्वरजस्तमसां साम्यावस्था मूलप्रकृतिश्चुम्बकलोहवत् पुरुषसान्निध्यमात्रेण जगतः संक्षिप्तस्य चतुर्विधस्य तथा विस्तृतस्य पञ्चविंशतिप्रकारस्य मूलकारणन्तथात्र मत्स्यमांसमदिरामैथुनभेदेन चतुर्विधस्य तथा योनिमैथुन-गुदमैथुन-हस्तमैथुनान्योन्यमैथुनभेदेन चतुर्विधस्य मूलकारणं योनिरेवोच्यते। तत्र यथा संक्षिप्तचतुर्विधरूपस्य (१ मूलप्रकृतिरूपस्य, २ महदादिसप्तविधप्रकृतिविकृतिरूपस्य, ३ महत्तत्त्वादिभेदेन प्रकृतिविकृतिरूपस्य, ४ प्रकृतिविकृतिभिन्नस्य पुरुषरूपस्य) एवं विस्तृतस्य पञ्चविंशत्यात्मकस्य सकलस्य जगत्कार्यस्य हेतुस्तथोक्तस्य सर्वस्य मैथुनस्यापि कारणं योनिरेवेति समालोचनीयम्। अत्रेदमपि विचार्यम्। यथा केवलं पुरुषसान्निध्यमात्रेण मूलप्रकृतिस्सकलं जगत्कार्यं प्रसूते तथोक्तमैथुनं सकलमपि पूर्वोक्तं संक्षिप्तं विस्तृतं च जनयति। एवञ्चोक्तविधसंक्षिप्तविस्तृतजगल्लोपस्यैवोक्तविधसंक्षिप्तविस्तृतं मैथुनं च जनयति। इदमप्यत्र समालोचनीयं यत् भगवता सृष्टिकर्त्रा जगतः पाण्ड्यनिरासार्थं सत्त्वरजस्तमसां त्रिकूटमिव रचितस्य सकलस्यैव मैथुनस्येदं मूलकारणं योनिरेवेति। तत्र च मूलकारणं यत् कस्यापि न कार्यं प्रधानमुच्यते

तथोक्तस्य सकलस्योक्तस्य मैथुनस्य हेतुर्योनिरेव । एवं महत्तत्त्वा-हङ्कार-पञ्चतन्मात्रारूपस्य सप्तविधस्य प्रकृतिविकृतिरूपस्य कारणमपि प्रधानमेव । पुरुषस्तु यथा न प्रकृतिरूपः न विकृति-रूपस्तस्य सर्वस्य कार्यस्य कारणं योनिरेव न तु सान्निध्यमात्रेण कार्यप्रवर्तकस्तन्नियामकश्च योगिराजो भूतभावनकर्त्तेति विभा-वनीयम् । एवं च सांख्यशास्त्रोक्तदृष्टान्तेनोक्तविधेन कारणं योनिरेवेति बोध्यम् । अत्रेदमपि विभावनीयम् यदस्मिन् योनि-तन्त्रे यदुक्तं पूर्वं तत्र यथार्थदृष्ट्या सांख्यशास्त्रमेव द्रोह्यस्यो-पाय इति ।

## ( २ ) कन्दर्पचूडामणिः

तत्रादौ 'कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः' इति अभिधानकोषबलाद्यदा तारकासुरं विजेतुं शिवपार्वतीसुतो भविष्यति तदा तस्य नाशो भविष्यतीति ज्ञात्वा शिवपार्वती-समागमार्थं तद्विवाहकाले ब्रह्मणः शिवपार्वतीचरणौ दृष्ट्वा यो व्यामोहोऽभूत्तेन षष्टिशतसहस्राणि वालखिल्याः सञ्जाता इति हेतोस्तस्य सृष्टिकर्तुर्व्यामोहजनकत्वात् कन्दर्प इति नाम प्रथमं बभूवेति स कन्दर्प इत्युच्यते इति प्रतिभाति । ततश्चोक्ताहङ्कार-रूपदर्पकरणात् स एव 'दर्पक' इत्युक्तः शिवेन च स्वतपोविना-शार्थमुद्युक्तस्य कामस्य दाहकरणात् सोऽनङ्गः इत्युक्तः । तेन च कामेन पञ्च शरानादाय शिवतपोविनाशायोद्योगः कृतः । शिवेनैतद् दृष्ट्वा कामो दग्ध इति स स्मृतिमात्रत्वात् 'स्मर' इत्युच्यते इति । एवमुक्तानाम् अभिधानशब्दानां व्युत्पत्तिरिति प्रतिभाति ।

एवं च स एव कन्दर्प उक्तरीत्या सकलानां कन्दर्पाख्या-नामुक्तानां चूडामणिरभूत् इति प्रतिभाति ।

इदं चोपर्युक्तविषयत्रयं चौखम्बा संस्कृतसीरीजप्रकाशकैः प्रेरितेन मया यथामति समालोच्य प्रदर्शितं विद्वद्भिः स्वयं युक्तं न वेति निर्धारणीयम् ।

अयं लण्डराजविदुषा विरचितो निबन्धः कन्दर्पचूडामणि-रिति कामशास्त्रनिबन्धेषु प्रथितोऽभूत् कन्दर्पचूडामणिनाम्नेति अलं विस्तरेण ।

वैशाखी पूर्णिमा<br>वाराणसी

विदुषां सेवकः<br>—दुण्ढिराजशास्त्री

## विषय-सूची




[ १ ] **पौरूरवसमनसिजसूत्रम् ( सटीकम् )** पृ० १–२८

[ २ ] **स्मरदीपिका** पृ० १–२६

पुंसां लक्षणप्रकरणम् २
स्त्रीणां जातिचतुष्टयप्रकरणम् ३
ध्वजलक्षणम् ६
भगलक्षणम् ,,
कामचालनप्रकरणम् ,,
बाह्यरतप्रकरणम् १०
बन्धप्रकरणम् १२
मुखरतप्रकरणम् १५
देशविशेषजरतप्रकरणम् ,,
कन्यापरीक्षणम् १६
स्त्रीसेवाकालकथनम् १७
इङ्गितपरिज्ञानप्रकरणम् १६
स्त्रीरक्षाप्रकरणम् २१
नायकलक्षणम् ,,
दूतीलक्षणम् ,,
अष्टनायिकालक्षणम् २२
मन्त्रौषध्यादिप्रकरणम् २३
वशीकरणमन्त्राः ,,
वशीकरणविधिः २४
बलिष्ठकारणम् ,,
स्तम्भनविधिः २५
द्रावणविधिः ,,
सुतोत्पत्तिविधिः ,,

[ ३ ] **कादम्बरस्वीकरणसूत्रम् ( सटीकम् )** पृ० १–१३

[ ४ ] **कादम्बरस्वीकरणकारिका** पृ० १–११

[ ५ ] **पञ्चसायकम्** पृ० १–६६

जातितिथिसमुद्देशः १
नायकलक्षणम् ,,
पीठमर्दलक्षणम् २
पद्मिनी-चित्रिणी-शंखिनी-हस्तिनी-लक्षणानि २
सुरतोचिततिथिकथनम् ३

चन्द्रकलासमुद्देशः ३
पद्मिन्यादिचन्द्रकलासमुद्देशः ४
देवसत्त्वादिलक्षणम् ८
सुरतभेदसमुद्देशः ९
शशादिजातीनां नायकानां स्वरूपनिरूपणम् १०
स्त्रीजातिस्वरूपस्वभावसमुद्देशः ११
देशविशेषनायिकालक्षणम् १२
योनिस्वरूपसमुद्देशः १६
सामान्यधर्मप्रीतिभेदसमुद्देशः १७
सगन्धौषधसमुद्देशः १९
वाजीकरणौषधिः २२
योनिसंकोचनौषधिः २४
कामिनीद्रावणौषधिः २५
ध्वजस्थूलदृढीकरणौषधिः २७
वीर्यस्तम्भनौषधिः २८
वशीकरणतिलकौषधिः २९
वशीकरणाञ्जनौषधिः ३०
वशीकरणचूर्णौषधिः ३१
वशीकरणलेपनौषधिः ३२
मोहकधूपौषधिः ३३
वशीकरणमन्त्रः ३४
स्तनोन्नतिकरणौषधिः ३८
योनिसंस्कारौषधिः ३९
रोमशातनौषधिः ”
नष्टपुष्प-पुष्पोद्भवसमुद्देशः ४०
गर्भधारण-चलितस्थापन-समुद्देशः ४१
सुखप्रसवौषधिः, तन्मन्त्राश्च ४२
बन्ध्याकरणसमुद्देशः ४४
केशसंस्कारप्रकरणम् ४५
मुखकण्टकादिहरण-योनिसंस्कार-समुद्देशः ४६
कन्यालक्षण-दूषणसमुद्देशः ४८
वरलक्षण-दूषणसमुद्देशः ४९
विवाहभेदाः ५०
परदारागमनागमनविचारः ५१
दूतीलक्षणम् ५३
कष्टसाध्य-दुःखसाध्य-त्याज्यस्त्री-समुद्देशः ”
सुरतस्थानाभिलाषसमुद्देशः ५४
आलिङ्गनभेदाः ५५
चुम्बनसमुद्देशः ५६
नखाघातसमुद्देशः ५७
दन्ताघातसमुद्देशः ५८
केशाकर्षणसमुद्देशः ५९
नाडीज्ञानसमुद्देशः ”
बन्धसमुद्देशः ६०
सीत्कृतादिसमुद्देशः ६३
अष्टनायिकासमुद्देशः ६४

[ ६ ] **नर्मकेलिकौतुकसंवादः ( सटीकः )** पृ० १–६

[ ७ ] **रतिमञ्जरी** पृ० १–६

पद्मिन्यादिनायिकालक्षणम् १
कामकलावर्णनम् २
सम्भोगसामान्यप्रकारः ३
नायिकारतिविशेषवर्णनम् ”

भगलिङ्गगुणदोषवर्णनम् ४ | षोडशबन्धनिरूपणम् ४
नायकलक्षणप्रकरणम् ,,

## [ ८ ] बाभ्रव्यकारिका ( सव्याख्या ) पृ० १–३३

साधारणमधिकरणम् १
सुरतभेदाः ४
चुम्बनप्रकाराः ७
नखक्षतानि ८
दन्तक्षतम् ६
चित्ररतानि ११
चपेटाख्यं कलहरूपं रतम् १२
पुरुषायितम् १४
औपरिष्टकम् १५
रतावसानम् १७
साम्प्रयोगिकम् १८
कन्याविश्रम्भणम् २०
इङ्गिताकारसूचनम् २१
कन्याप्रतिपत्तिः ,,
भार्याधिकारिकाधिकरणम् २२
पारदारिकप्रकरणम् २४
वैशिकाधिकरणम् २७
औपनिषदिकम् ३१

## [ ९ ] रतिरत्नप्रदीपिका पृ० १–४०

गोणीपुत्रमतेन स्त्रीजातिवर्णनम् १
कामकलावर्णनम् ३
वात्स्यायनीय-स्त्रीजातिवर्णनम् ६
वात्स्यायनीय-पुरुषजातिवर्णनम् ८
आलिङ्गनाधिकारः १३
चुम्बनाधिकारः १५
नखक्षताधिकारः १७
दन्तक्षताधिकारः १८
आभ्यन्तररतिनिरूपणाधिकारः १६
आभ्यन्तररतौ करणनिरूपणम् २४
नन्दिकेश्वरमते औपरिष्टादिरत-भेदनिरूपणम् २६
सर्वसुरताधिकारः ३३

## [ १० ] रतिकल्लोलिनी पृ० ४१–६९

कन्यालक्षणदूषणप्रकरणम् ४१
पुरुषनायकलक्षणदूषणप्रकरणम् ४३
परस्त्रीगमनागमनादिप्रकरणम् ४५
योनिलिङ्गनिरूपणम् ५१
योनिसंकोचनम् ५६
लिङ्गदृढीकरणम् ५७
स्त्रीद्रावणम् ५८
वराङ्गोपस्कारः ,,
रोमशातनम् ,,
नष्टपुष्पलब्धिः ५९

| | | | |
|---|---|---|---|
| पुष्पाधिक्यनिवारणम् | ५६ | कुचसंस्कारः | ६१ |
| गर्भाधानविधिः | ,, | वशीकरणादिः | ,, |
| वन्ध्याकरणविधिः | ,, | अङ्गादिसुगन्धिः | ६३ |
| केशोद्धर्व रञ्जनम् | ६० | हेयस्थानादीनि | ,, |
| श्वेतीकरणम् | ,, | उदितस्थानानि | ,, |
| मुखकण्टकहरम् | ,, | बाह्यसंभोगाः | ६४ |
| नीलीहरणम् | ,, | संभोगप्रकाराः | ६६ |

[ ११ ] **शृङ्गाररसप्रबन्धदीपिका** पृ० ७०–१०४

| | | | |
|---|---|---|---|
| कामिनीभेदवर्णनम् | ७० | पञ्चतन्त्रवर्णनम् | ८४ |
| कामिन्यवस्थावर्णनम् | ७४ | संस्कारतन्त्रस्थानवर्णनम् | ८५ |
| हस्तिन्यादिलक्षणम् | ७८ | नायकवर्णनम् | ८६ |
| भद्रादिपुरुषलक्षणम् | ८० | द्रावकलक्षणम् | ८९ |
| रतिभेदवर्णनम् | ,, | बन्धनिरूपणम् | ९० |
| दृष्टिभेदवर्णनम् | ८२ | सुरतप्रशंसा | ९१ |
| अनिच्छाव्यापारवर्णनम् | ,, | बन्धलक्षणानि | ९२ |
| कलास्थानवर्णनम् | ८३ | वशीकरणमन्त्रौषधयन्त्राणि | १०२ |
| कामोद्दीपने दशसंस्कारवर्णनम् | ८४ | | |

[ १२ ] **कामतन्त्रकाव्यम् ( सटीकम् )** पृ० १०५–१३८

श्रीगणेशाय नमः

# कामकुञ्जलतायां

## पौरूरवसमनसिजसूत्र( १ )मञ्जरी ।

नत्वा श्रीपितृपादाब्जं सर्वापत्तिनिवारकम् ।
पौरूरवससूत्रस्य व्याख्याने कृतमानसः ॥ १ ॥
श्रीकृष्णदीक्षितसुतः जयकृष्ण इति श्रुतः ।
यथामति समारेभे सूत्रव्याख्यानदीपिकाम् ॥ २ ॥
रतिशास्त्रपरिज्ञाने ये विहीना नराधमाः ।
तेषां रतिः श्वानवत्स्यात् न रतेः सुखमश्नुते ॥ ३ ॥
रतेः सुखस्य ज्ञानार्थं कामशास्त्रं समभ्यसेत् ।
ज्ञात्वा कर्माणि कुर्वीत तत्रानन्दो भवेद्ध्रुवम् ॥ ४ ॥
अन्यथा पशुवत्तेषां रतिकर्म सुनिष्फलम् ।
न चानन्दो न च सुखं दुःखस्यैव तु कारणम् ॥ ५ ॥
तस्माद्रतिसुखार्थं वै एतच्छास्त्रं समभ्यसेत् ।
अधीते रतिशास्त्रे तु तात्पर्यज्ञानपूर्वकम् ॥ ६ ॥
तत्कर्मण्यधिकारी स्यान्नान्यथा वृषवद्भवेत् ।

**अथातः पौरूरवसं मनसिजसूत्रं व्याख्यास्यामः ॥ १ ॥**

अथातः पौरूरवसं मनसिजसूत्रं व्याख्यास्याम इति ।

---

( १ ) चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकं सूत्रप्रवर्तकाचार्यस्य स्मरणात्मकं मङ्गलं शिष्यशिक्षायै निबध्नन् प्रतिजानीते अथेति ।

अत्र अथशब्दस्य कारणार्थपरत्वं नानन्तयार्थकत्वम् । अतः कारणात्, अतः शब्दस्यानन्तयार्थकत्वं पङ्क्तिशर(१५)शरद उपरिष्टात् एतच्छास्त्रस्य प्रवचनसङ्ग्रहाधिकारे आधिकारिकत्वमिति फलितार्थकथनम्, न तु तत्पुरस्तात् अयोग्यत्वात्, अयोग्यत्वादेव तद्वाक्यश्रवणे अधिकाराभावाच्च। कारणार्थकत्वं सम्प्रदर्शयति ऋणश्रुतिः(१) अग्निष्वात्तादिपितॄणां ऋणनिर्मोचनकाले रतिशास्त्रपरिज्ञानस्य कारणत्वेनाभिमतत्वात् प्रजासर्जनद्वारा ऋणमोचकत्वम्, तस्मिन् प्रजासर्जने रतिशास्त्रपरिज्ञानपूर्वकमेव अभ्यनुज्ञासम्प्रदानम्, न तु चतुष्पाज्जातिविशेषवत् अभ्यनुज्ञासम्प्रदानं 'ज्ञात्वा कर्माणि कुर्वीते'ति वाक्येन कर्ममात्रे कर्मतात्पर्यार्थाभिज्ञानस्यात्यावश्यकत्वात्, तादृक्तात्पर्यार्थज्ञानवतः परमापूर्वकफलाधिकारे अपरोक्षानुभवदर्शनेन प्राधान्यतः फलभोक्तृत्वे कर्तृत्वावगमात् 'ज्ञानवतः पुरुषस्य सर्वे कामाः प्रपूर्यन्त' इति शातपथश्रुतेः। तस्मात्प्रजासर्जनाख्ये कर्मणि रतिशास्त्रपरिज्ञानस्याऽभीप्सिततमत्वेन कारणार्थपरत्वमिति निश्चितं भवति। **पौरूरवसामिति**। पुरूरवसा प्रोक्तं पौरूरवसं 'तेन प्रोक्तमि'त्येतत्सूत्राधिकारे विहितस्य प्रत्ययविधानस्याऽत्रानुशासनमनुवादकत्वम्। पुरूरवास्तु षडशीतिसहस्रसमाः ऊर्वश्या सह रतिशास्त्रं समभ्यसत्। अद्वितीयः मनसिजशास्त्रप्रवर्त्तकाचार्यो बभूव। तथाच श्रुतिः—"ऊर्वश्यसि अधरारणिमादत्ते। पुरूरवाः उत्तरारणिमादत्ते" इत्यनेन वाक्येन उभयोराधाराधेयभावेन रतिस्मरयोः स्वरूपेण च राज्ञः रति-

---

(१) 'जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् जायते' इत्यादिप्रसिद्धश्रुतिः।

शास्त्रप्रवर्तकाचार्यत्वमित्युक्तं भवति। तादृग्राजर्षिसूत्रं व्याख्यास्याम इति। व्याख्यानं नाम आभ्यन्तरीयतात्पर्यार्थं विविच्य स्तनन्धयेतराणां सुखबोधलब्धये विविच्य स्फुटीकरणम्। मनसिजसूत्रं कामशास्त्रं "शंवरारिर्मनसिज" इत्यमरः। अलुक्समासो वोद्धव्यः। ख्या प्रकथन इत्यस्माद्धातोः कर्त्तरि लोट् परस्मैपद-उत्तमपुरुषबहुवचनान्तं पदम् ॥ १ ॥

ननु "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीते"त्येतच्छास्त्रबलेन उपनयनानन्तरमध्यापनस्य अत्यावश्यकत्वेनाभिमतत्वम्, तत्र सामान्योपदेशकवाक्येन निगमाध्यापनस्यैवाभ्यर्हितत्वम्, आहोस्विदेतच्छास्त्रस्य वेतिसंशयवाक्यमुपन्यस्य तात्पर्यवाक्यानुकथनेन संशयवाक्यस्योपशमं कुर्वन्निगमाध्ययनस्यैवेप्सितार्थप्रदातृत्वेनाभिमतत्वम्, एतच्छास्त्रस्य तु कालान्तरोपदेशात् न निगमाध्ययनकालस्य विप्रतिपक्षित्वम्, कुतः? स्वकीयप्रवृत्त्युपदिष्टे काले स्वकीयप्रवृत्तेः चरितार्थत्वात्। विप्रतिपक्षं स्वीकृत्य निगमाध्ययनस्य विच्छित्तिपूर्वकमेतच्छास्त्रस्यैव प्राधान्येनाध्ययने प्राप्ते निगमाध्ययनविच्छित्तिजन्यस्यांहसः पर्यवसानं स्वस्मिन्नेव सम्भाव्येत, कुतः! अङ्गाध्ययनरूपत्वात् प्रधानाध्ययनं विना अङ्गाध्ययनं नहि विधातुं समुचितं भवति, इत्येतत् पौर्वापर्यवाक्यं मनसि आलोच्य तात्त्विकार्थवाक्यं निश्चायकत्वेन मनसि स्थिरीकृत्यानुवदति—

**तच्छास्त्रपरिज्ञाने युवावस्थायाः प्रयोजकत्वात् ॥ २ ॥**

तच्छास्त्रपरिज्ञानेति। यौवनावस्थायाः प्राप्तौ सत्यां एतच्छास्त्राध्ययने कर्तृत्वेनाधिकारिता, न त्वौपदेशिकी(१)

(१) उपदेशयोग्या बाल्यावस्थेत्यर्थः।

अवस्था, औपदेशिकव्यवस्थायास्तु एतच्छास्त्रस्य तात्पर्यार्थग्राहक-देशित्वे तादृग्मनीषायाः उत्पत्तेरभावात् । तादृग्मनीषाया उद्भवकालस्तु पौगण्डवदिष्टा(१)दौत्तरीयकः ॥ २ ॥

इदानीमङ्गप्रधानोपदेशेन सुषुप्त्यवस्थां प्राप्तस्य मनसिजस्य उद्बोधकोपायमुपदिशति--

**दर्पकोद्बोधने श्यामाधरसुधाप्राशनमौपदेशिकाङ्गम् ॥३॥**

दर्पकोद्बोधनेति । ननु किन्नामोद्बोधनम्? सुषुप्त्यवस्थां परिहृत्य औपदेशिकव्यवस्थायाः(२) सङ्ग्रहणेनावस्थानमुद्बोधनम्, सुषुप्त्यवस्थां प्राप्तस्यानन्यजस्य औपदेशिकव्यवस्थाभावे तत्र प्रसृतिं विधातुमशक्यत्वात् । जाग्रदवस्थायाः औपदेशिकाङ्गस्याङ्गत्वे साधनत्वमभीप्सिततमत्वं च । अभीप्सिततमत्वं–हेतुः कारणत्वं, औपदेशिकव्यवस्थाभावे सकलाङ्गप्रवृत्तेर्विध्वंसनापत्तेः । तत्र कर्माणि आद्यमङ्गम् । ननु किन्नामाङ्गत्वम्? सन्निपत्योपकारकत्वमाश्रयीकृत्यानन्दकार्यानुरञ्जने उपकारकत्वम् । अङ्गस्य प्रकारकत्वेन निदर्शनं–श्यामाधरसुधाप्राशनमिति । अधरे सुधावस्थाने गान्धर्वनिगमस्य प्रामाण्यम्–'योषाधरपल्लवं सुधाया औत्पत्तिकमजस्रं स्थानमि'ति । तादृक्सुधाप्राशनं प्रसुप्तस्य कामस्य प्रबोधजनकं ( यथा ) यत्किञ्चित् प्रज्वलितस्य वह्नेः अव्यभिचारेण प्रबोधकं घृतविन्दुवत् । प्राशनं नाम स्वकीयदद्भिः मन्दव्यवसायेन दंशनम्, तेन दंशनेन तत्राधरे जनितस्य अमृतोद्रेकस्य अनुगीर्णनं प्राशनमवाङ्नाभिपर्यन्तं शर्कराखण्डेन रचितं मधुरपानीयमिवेति साभिलाषप्राशने दृष्टान्तः ॥ ३ ॥

---

( १ ) षोडशवर्षादुत्तरः काल इत्यर्थः ।

( २ ) अत्र कामशास्त्रोपदेशयोग्यावस्था औपदेशिकव्यवस्था ग्राह्या ।

ननु योषया सह रतिकरणमानन्दप्रबोधार्थम् , एवंस्थिते तादृगानन्दप्रबोधे कतिसङ्ख्याकस्याङ्गस्येप्सिततमत्वमित्याशङ्क्य ईप्सिततमस्याङ्गस्य निदर्शनं स्वमुखेन विशदयति--

अङ्गचतुष्टयोपलक्षितो रत्यानन्दः ॥ ४ ॥

अङ्गचतुष्टयेति । रत्यानन्दः, तत्पुरुषः समासोऽयम् । तत्र रत्यानन्दशब्दयोः स्वरूपार्थं विवृणोति-पृथग्रूपेणावस्थितस्येन्द्रियद्वितयस्य स्वकीयाधिष्ठातृदेवतया सह साङ्कर्येण एकस्वरूपकरणं रतिः, एकस्वरूपकरणादुत्पन्नो यो आनन्दः स रत्यानन्दः । अतीव औपदेशिकस्य गुणस्य अतिरेकः वर्धनमानन्दशब्दार्थः । तादृक्रत्यानन्दः अङ्गचतुष्टयेन उपलक्षितः अङ्गचतुष्टये क्रियमाणे आनन्दः अपरोक्षानुभवदर्शनेन प्रकाशितो भवति । न ह्यङ्गजातप्रकाशं विना प्रधानकार्यस्योत्पत्तिर्भवति , प्रधानकार्यस्योत्पत्तौ अङ्गजातप्रकाशस्य प्रयोजकत्वात् । प्रकृतिपुरुषयोः ऐक्यस्वरूपेणावस्थानं परमानन्दः । रत्यानन्देऽपि शरीरद्वयस्य ऐक्यस्वरूपेणावस्थितेर्दृश्यमानत्वात् भेदज्ञानस्य विध्वंसितत्वात् स्वरूपैक्यज्ञानस्य साधकं रत्यानन्द इति निर्गलितोर्थः॥४॥

औपदेशिकाङ्गविवेचनं प्रतिपादितं 'श्यामाधरसुधाप्राशनमि- ( सू० ३ )'त्यनेन, द्वितीयाङ्गकार्यविवेचनं विस्पष्टयति—

उरसि कुचाभ्यां संश्लेषणं द्वितीयमङ्गम् ॥५॥

उरसि कुचाभ्यामिति । उरसि स्वकीयहृदयस्थले योषायाः कुचाभ्यां संश्लेषणं संयोजनं जतुकाष्ठवद् अद्वितीयरसाविर्भावेन अतीवबलवत्तरया उत्साहशक्त्या आलिङ्गने क्रियमाणे कुचयोः संश्लेषणमुपमर्दनं स्वकीयेनोरसा आच्छन्नत्वात्स्वकीयस्वरूपादर्शनं च भवतीति व्यक्तार्थस्यैवानुकथनम् ॥ ५ ॥

द्वितीयमङ्गं विविच्य तृतीयाङ्गविवेचनं विस्पष्टयति--

दोर्भ्यां कुचयोरुपमर्दनं तृतीयमङ्गम् ॥ ६ ॥

दोर्भ्यामिति । दोर्भ्यां हस्ताभ्यां "भुजबाहूप्रवेष्टोदोरि"ति कोशस्मरणात् । कुचयोरुपमर्दनं निष्पीडनं स्थूलतमामलकफलवत्, यथामलकप्रपीडनं लोके दृष्टं तथा प्रपीडनं कर्तव्यम्, ( तच्च ? ) स्वकीयेन्द्रियनाडीनां प्रफुल्लत्वे हेतुः कारणं, तथाच भारतीयं सूत्रम्-"उदंजिनाडीनां प्रफुल्लताकारकं किशोरीस्तनयोरुपमर्दनमि"ति ॥ ६ ॥

तृतीयमङ्गं विविच्य चतुर्थाङ्गं विस्पष्टयति—

जतुकाष्ठवत् संश्लेषणं तुरीयमङ्गम् ॥ ७ ॥

जतुकाष्ठवदिति । संश्लेषणस्य जतुकाष्ठवदिति निदर्शनं तु अतिदृढतरमालिङ्गनं कर्तव्यमिति द्योतनार्थम्, यथा जतुरतीव दृढत्तमेन काष्ठमाश्लिषति तादृक्संश्लेषणं रत्यानन्देऽपि कर्त्तव्यमिति प्रबोधितुं तादृङ्निर्देशः । ईदृगालिङ्गनमङ्गकार्यं रत्यानन्दप्रबोधजनकम्, आनन्दस्थितौ स्थाणुवन्निश्चलत्वेनावस्थितेर्दृश्यमानत्वादत्रापि तादृगवस्थानं संश्लेषणस्य पश्चात्परिदृश्यते । कुत ? इति चेत्, प्रकृतिस्वरूपस्य स्वस्मिन्निमग्नत्वेनानुदर्शनात् । द्वैतभ्रान्तिनिवृत्तौ यो परमानन्दः तादृगानन्देनोपमितो रत्यानन्द इत्यर्थः ॥ ७ ॥

रत्यानन्दः परमानन्देन प्रमित इति पूर्वसूत्रेण प्रतिपादितम्, ननु परमानन्दस्य स्वरूपानुभवानन्तरमपवर्गाख्यस्यानन्दस्यानुभवे जिज्ञासायां सत्यां तत्र कतमत् अङ्गजातं जिज्ञासायामुपकरणं इति वादिना शङ्किते सति शङ्कानिरासार्थमीप्सि-

ततमपङ्कजातं स्वमुखेन विस्पष्टयति—

स्वाधिष्ठानसुधाया अनुप्राशनं परमानन्दकारः ॥७॥

स्वाधिष्ठानसुधाया इति। अपवर्गशब्देन मोक्षः "मोक्षोऽपवर्गोथाज्ञानमि"ति कोशस्मरणात्। मोक्षानन्दानुभवे जिज्ञासायां सत्यां तादृगानन्दानुभवार्थं स्वाधिष्ठानसुधायाः अनुप्राशनं तादृगानन्दप्रमितौ परिज्ञाने कारणमित्यर्थः। अत्र यत्किंचित्वादी आशङ्कते—ननु सुधाया अधिष्ठानं तु युवतीनामधरपल्लवं, स्वाधिष्ठानं सुधायाः आस्थानमिति कुत्रापि नैव श्रुतमितिचेत्, मैवं, तस्यापि सुधावस्थानत्वम्, तथाच वात्स्यायनीयं सूत्रम्—उभयत्र सुधावस्थानं योषाधरपल्लवे स्वाधिष्ठानस्य मुखचूचुकाग्रे चेति। निर्लोमयोनिमुखचुंबनमपवर्गानन्दानुभवे परमसाधकम् कारणमित्यर्थः ॥ ८ ॥

अपवर्गानन्दानुभवानन्तरं ब्रह्मानन्दानुभवे जिज्ञासायां सत्यां तत्र कतमत् साधनं ब्रह्मानन्दानुभवस्येति संशयवाक्ये विचिकित्सायां सत्यां तत्र साधनमुपवर्णयन् वाक्यार्थतत्त्वं विवेचयति—

अनन्यजसद्मनि साकल्येनोदंजिप्रवेशः
ब्रह्मानन्दस्योपादानकारणम् ॥ ८ ॥

अनन्यजसद्मनीति। अनन्यजसद्मनि पंचशरमन्दिरे स्वाधिष्ठानरन्ध्रे साकल्येन कृत्स्नस्वरूपप्रवेशेन नतु पादार्धांशभागेन उदंजिप्रवेशः प्रवेशनं साकल्येन स्वकीयस्वरूपान्तर्धानं ब्रह्मानन्दस्यातिस्थूलतरत्वात्सर्वेषामानन्दानां मूर्धसु अवास्थितस्य ततः परमानन्दाभावात् तादृगानन्दानुभवस्याऽपरोक्षानुभवनमनुभवं कर्तुं प्रवेशस्य परमकारणत्वम्। कृत्स्नशिश्नप्रवेशनानन्तरं ब्रह्मा-

नन्दजन्यं सुखमनुभूयत इत्यर्थः, 'स एको ब्रह्मण आनन्द' इति श्रुतेः ॥ ८ ॥

ब्रह्मानन्दप्राप्तिकारणं विविच्य इन्द्रानन्दानुभवे कारणसाधनं प्रदर्शयति—

उदंजिसामिप्रवेशः लेखर्षभानन्दे
प्रयोजकीभूतो हेतुः ॥ ९ ॥

उदंजिसामिप्रवेश इति। सामिप्रवेशः अर्धप्रवेशः 'अर्धभागे तु सामि स्यादि"ति शब्दार्णवे, लेखर्षभः इन्द्रः, तदीयानन्दस्य कारणम्, ब्रह्मानन्ददृष्ट्या लेखर्षभानन्दस्य सूक्ष्मत्वात्तादृक्सूक्ष्मानन्दस्य प्रकाशने अर्धोदंजिप्रवेशस्य कारणत्वमित्यर्थः॥९॥

एवं प्राप्तक्रमेण आनन्दत्रयस्य प्राप्तिसाधनं विविच्य प्रकृतिस्वाधिष्ठाने अनुक्षणव्याघाते किं साधकतमं कारणमिति संशयवाक्यमुपन्यस्य साधकतमं कारणं संप्रदर्शयति—

अञ्जिस्थाने अनुक्षणव्याघातस्य साधकतमं
दार्ढ्यं परमकारणम् ॥ १० ॥

अञ्जिस्थाने इति। साधकतमं दार्ढ्यं उदंजिदार्ढ्यमिति यावत्। उदंजिधाष्ट्र्यमेव अनुक्षणव्याघाते प्रयोजकीभूतो हेतुरित्यर्थः। न ह्युदंजिधाष्ट्र्यं विना अनुक्षणं व्याघातं कर्तुं समर्थो भवति ॥ १० ॥

एवमनुक्षणव्याघाते कार्यकारणरूपं विविच्य अवाङ्मनसमानन्दं निरूपयितुं तस्य पूर्वाङ्गसाधनं निरूपयति—

संकुचितस्वाधिष्ठानस्य भेदनकार्यजन्य-
मानन्दमवाङ्मनसगोचरम् ॥ ११ ॥

सङ्कुचितेति । सङ्कुचितं संश्लिष्टं पुरुषस्योदङ्गेः संपर्का- भावेन सङ्कुचितत्वं, सति संपर्केऽसङ्कुचितत्वं न्यायतः सिद्धम्, एतादृशं यत् स्वाधिष्ठानस्थानं तस्य भेदनं सङ्कीर्णस्थानभेदनं, नहि स्थानभेदं विना उदङ्गिप्रवेशं कर्तुं शक्तो भवति । तादृक्- स्थानस्य भेदनेन जन्यो यो आनन्दस्तमानन्दमवाङ्मनसगो- चरं तादृगानन्दस्य सुखमनुवर्णयितुं वाङ्मनसोरपि अविषयम् , (एतेन? )वेदलक्षणायाः वाचः मनसश्च वर्णनसामर्थ्याभावः सू- चितस्तयोरप्यविषयत्वात् । सगुणानन्दानुवर्णने वाङ्मनसोस्ति सामर्थ्यमीदृगानन्दानुवर्णने तु वाङ्मनसोः प्रवृत्तेरभावात्, कुतः ? अविषयत्वात् । एतदुक्तं भवति–ब्रह्मानन्दादप्यतिरिक्तं योनिवि- दीर्णजन्यमानन्दम् अतस्तयोरविषयत्वेऽपि न काप्यपक्षतिः, योनिविदीर्णकाले ब्रह्मानन्दादप्यतिरिक्तमानन्दसुखमनुभवती- त्यर्थः ॥ ११ ॥

पूर्वमङ्गिस्थाने अनुक्षणव्याघाते साधकतमस्य उदङ्गेः परम- कारणत्वं प्रतिपादितम्, इदानीं चिदाभासाख्यस्यानन्दस्यानुदर्शने अभीप्सिततमं साधनं किमित्यपेक्षायां साधकतमं कारणम- भिनयेन निर्दिशति–

सर्दगृदिव्याघातः चिदाभासस्यानुदर्शने परम- कारणम् ॥ १२ ॥

सर्दगृदिव्याघात इति । सर्दगृदिशब्देन उपस्थोन्द्रियकुसु- मं लक्ष्यते, नाभेश्चतुरङ्गुलादधस्तात्सर्दगृदिस्थानमिति शास्त्रका- रैरुपवर्ण्यते, शिश्नस्य सति पंक्ति(१०)संख्याङ्गुलित्वे तस्मिन्कुसुमे आघातं कर्तुं पुरुषः शक्तो भवति नेतरथा । एवंस्थिते दिष्टप्रा- बल्यानुरोधेन यदि तत्र व्याघातुं ( व्याहन्तुं ? ) समर्थो भवति

तदा स पुरुषः चिदाभासदर्शनजन्यस्यानन्दस्यानुभवं निष्प्रया-
सेनैव करोतीत्यर्थः ॥ १२ ॥

इदानीमुपक्रमादारभ्य द्वादशसूत्रव्याख्यानस्यानुशासनप-
र्यन्तं कार्यकारणभावसङ्गत्या आनन्दपञ्चकस्य स्वरूपनिद-
र्शनं स्वकीयमनीषायाः सामर्थ्यानुरोधेन विविच्य स्फुटीकृतम् ,
इदानीं दर्पकसङ्ग्रामकरणे यस्य अभ्यर्हितकर्तव्यताविषये
ईप्सिततमं मनो भवति तस्य योषया सह एकतल्पारोहणमती-
वावश्यकं पृथक्तल्पारोहणे क्रियमाणे दर्पकसङ्ग्रामविधानासि-
द्धेः । सङ्ग्रामस्याभ्यर्हितत्वे एकं तल्पमारुह्य यथेष्टं दर्पकजन्य-
सुखमनुभूयेयातामिति शिक्षयति—

दर्पकजन्यस्याभ्यर्हितत्वे एकतल्पारोहणस्यात्या-
वश्यकत्वात् ॥ १३ ॥

दर्पकजन्यस्याभ्यर्हितत्वे इति । किमुक्तं भवति-यदि
दर्पकसङ्ग्रामं कर्तुमीप्सिततमो भवति तदा तल्पमारुह्यैव सङ्ग्रामं कु-
र्यात् , न पृथिव्यां सङ्ग्रामो विधेयः । पृथिव्यां नर्मसङ्ग्रामं (१)नि-
षिद्धमिति रसशास्त्रस्याचार्यैर्भरतादिभिः उपादिष्टम् । तथाच
सूत्रं-"तल्पे एव नर्मसङ्गरविधानं न पृथिव्यामि"ति । असुरा-
दीनां सङ्ग्रामं सोढुं शक्नुयान्न दर्पकसङ्ग्रामसहने पृथिव्याः सा-
मर्थ्यमिति भरतादिभिः सूत्रकारैः पृथिव्यां रतिसङ्ग्रामो निषेधितः
( निषिद्ध ? ) इत्याशयेनानुवदति दर्पकजन्यस्याभ्यर्हितत्व
इति ॥ १३ ॥

ननु उक्तसङ्ग्रामे स्त्रीपुरुषयोः प्राधान्येन कर्तृत्वावगमात्

---

(१) अत्र सङ्ग्रामशब्दस्य नित्यपुंलिङ्गत्वात्सङ्ग्रामकरणमिति
पाठो युक्तः प्रतिभाति ।

युवत्यभिलाषायाः रुच्युत्पादकहेतुत्वं वा पुरुषाभिलाषो वा रुच्युत्पादके हेतुर्वेति संशये प्राप्ते, युवत्यभिलाषयैव उत्साहो वर्धते न पुरुषाभिलाषायाः रत्युत्साहवर्धने हेतुत्वं, कुत ? इति चेत्, तस्याः पूर्वरूपत्वेन प्राधान्यावगमात् पुरुषस्योत्तररूपत्वात्, आधेयस्वरूपेणानुषङ्गिकत्वात् उत्साहवर्धने युवत्यभिलाषायाः प्राधान्यम्, तथाच श्रुतिः–"माता पूर्वरूपं पितोत्तररूपं प्रजा सन्धिः प्रजननं सन्धानमि"ति श्रुतेः, तस्माद्युवत्यभिलाषैव रत्युत्साहवर्धने हेतुरिति, इमं पक्षमाश्रित्यैव पुरूरवसा स्वमुखतः प्रोक्तं रत्युत्साहवर्धने हेतुः युवत्यभिलाषेति । अतिरुचेरुत्पत्तिप्रयोजिका युवत्यभिलाषेति चरमराद्धान्तवचनेनानुवदति

युवत्यभिलाषा रत्युत्साहवर्धने हेतुः ॥ १४ ॥

युवत्यभिलाषेति ॥ १४ ॥

पुरुषाभिलाषायाश्चानुषङ्गिकत्वात् ॥ १५ ॥

ननु एवं सिद्धान्त उपवर्णिते सति पुरुषाभिलाषायाः प्रवृत्तिः कुत्र सन्निपतते इति चेद्युवत्यभिलाषाया आनुषङ्गिकत्वेन प्रवृत्तिः न तु तदीयामभिलाषामुच्छिद्य प्राधान्येन प्रवृत्तिः, कथमिति चेत्, प्रयोज्यकर्तृत्वेनानुषङ्गिकत्वावगमात्, ईदृक्तात्पर्यार्थं मनसि निधाय आचार्येण स्वमुखतः प्रोक्तं–पुरुषाभिलाषायाश्चानुषङ्गिकत्वादिति ॥ १५ ॥

आनन्दादीनां प्रतिबुद्धौ कार्यकारणभावं साध्यसाधनमुपपाद्य तन्त्रानुष्ठाने वर्णकान्तरमारभते—

औपदेशिकस्यानङ्गसङ्ग्रामस्य युवतीनामानन्दतृप्तौ प्रयोजकत्वाभावात् ॥ १६ ॥

"सदा निशायां दारं प्रयलङ्कुर्वीते"ति रतिशास्त्रस्याभ्यनुज्ञाने रतिसङ्ग्रामस्यानवच्छेदेनानुष्ठानं कर्तृत्वेनाभ्यनुज्ञातम्, तत्र तज्जन्यमानन्दोद्भवप्रकाशने युवतीनामचिरेण उपादिष्टमुत पुंस अभिदिष्टमिति संशये प्राप्ते, तादृक्संशयस्य दूरीकरणार्थमुपरितनस्य सूत्रस्यारम्भः औपदेशिकस्येति ॥ प्राथमिकस्यानङ्गसङ्ग्रामस्येत्यर्थः, आनन्दतृप्तौ आनन्दस्वरूपानुदर्शने प्रयोजकत्वाभावादिति कर्तृत्वाभावात् । प्रथमसङ्ग्रामे युवतीनां भोगतृप्तिर्नोत्पद्यत इत्यर्थः। कुतः कारणात् भोगतृप्तिर्नोत्पद्यत इति चेत् । अष्टगुणाधिक्येन(१) प्रमितस्य स्त्रीकामस्य वह्नेः अल्पकदम्बुसेचनेनोपशान्तिर्भवितुं नार्हति, उपशान्तिभवने वहुजलसेचनस्य प्रयोजकत्वात् , द्वितीयाहवे तु उपशान्तिर्भवितुमर्हतीति निदर्शनप्राबल्यानुरोधेनोपदर्शयति—कलानिध्यधिष्ठाने ऋक्षे उत्पन्नाया आसारवृष्टेः पृथिव्याः दाहोपशमो यथा नोपलभ्यते तथा प्रथमतन्त्रे वनितानां पञ्चशरवह्नेरुपशान्तिर्नैवोपलभ्यते, द्वितीयाहवस्य तु वह्नेः उपशान्तौ प्रयोजकत्वमिति अत्रापि निदर्शनदार्ढ्येनैव व्याप्तिसाधनस्य दार्ढ्यत्वं विस्पष्टयति—यथा रुद्राधिष्ठिते ऋक्षे पर्जन्यस्य पृथिव्याः दाहोपशमे ( यथा ) अभीप्सितत्वेन परमकारणत्वं तथा द्वितीयाहवस्य युवतीनां दर्पकोद्बोधशमने परमकारणत्वमिति अव्यलीकतात्पर्यार्थस्यानुकथनम् ॥ १६ ॥

इत्येतत्तात्पर्यार्थं मनसि स्थिरीकृत्य उत्तरपक्षसूत्रमनुशास्ति—

द्वितीयाहवे तु तत्सत्त्वात् ॥ १७ ॥

द्वितीयाहवे तु तत्सत्त्वादिति । अयं सूत्रस्याभिप्रायः—सर्वस्त्रीजातिमात्रस्य औपदेशिकनिधुवने सङ्ग्रामजन्यस्यान-

(१) 'कामश्चाष्टगुणः स्मृत' इति अभियुक्तोक्तेः ।

न्दस्य तृप्तेरभाव औत्सर्गिकः शरीरगुणः, द्वितीयसङ्ग्रामे तु निदर्शनमावल्यानुरोधेन सर्वा अपि युवत्यः सङ्ग्रामजन्येनान्देनातितृप्ताः भवन्तीति विविच्य सूत्रार्थस्यानुप्रकाशनं प्रवर्त्तकाचार्येण कृतं भवतीति ॥ १७ ॥

ईदृक्सङ्ग्रामे स्त्रीणां स्वभावव्यवस्थामनूद्य पुरुषस्वभावव्यवस्थामुत्तरसूत्रेणानुदिशति—

पुरुषाणां तद्वैपरीत्यात् ॥ १८ ॥

पुरुषाणां तद्वैपरीत्यादिति । अनङ्गसङ्ग्राम इत्येतत्पदं पुरस्तात्सूत्रादनुवर्तते । युवतिप्रकृतेः सकाशाद्विपरीता पुरुषप्रकृतिः । तथाहि—पुरुषस्य तु प्रथमसङ्ग्रामे अतितृषिता चिरसम्भृतस्य रेतस अनुस्खलनेन अनन्यजवद्वेरूप्यणः विध्वंसानुदर्शनात्, द्वितीयाहवे तु रेतस उपचयस्याभावानुदर्शनेन उदञ्जौ रेतःसंयोगस्यानुदर्शनानुद्वृताल्पभावत्वं स्वाभाविकस्वभावनिदर्शनम् ॥ १८ ॥

अङ्गचतुष्टयोपलक्षितो रत्यानन्द(४) इत्यस्मिन्सूत्रे परमानन्दप्रबोधे अङ्गचतुष्टयस्य प्रयोजकत्वमिति निर्णीतम्, इदानीं पूर्वोक्तादङ्गचतुष्टयादतिरिक्तं अङ्गान्तरमपि तादृगानन्दप्रबोधे प्रयोजकमिति वदन् अतिरिक्ताङ्गव्यापारं सम्प्रदर्शयति—

आलिङ्गनकुचधारणादिरिव नीवीशयस्थापनस्याप्यभिमतत्वात् स्मरोद्दीपने असाधारणकारणरूपत्वात् ॥ १९ ॥

आलिङ्गनकुचधारणादिरिति । अतिरिक्तमङ्गं नीवीशयस्थापनम् । अत्र नीवीशब्दः स्वाधिष्ठानस्थानस्य उप-

लक्षकः । संश्लेषणाद्यङ्गजातं यथा परमानन्दप्रबोधकं तथा युवत्याः स्वाधिष्ठानप्रदेशे हस्तेन परिभ्रामणमपि मनसिजोद्बोधे परमकारणमित्यर्थः ॥ १९ ॥

रतिविलासाख्ये कर्माणि अत्यानन्दरुचिप्रबोधाय चिरन्तनैः ऋषिभिः हरिविक्रमादि बन्धजातमुपदिष्टं, तद्बन्धजातस्यानुष्ठानं कतमस्यामवस्थायामभीप्सिततमत्वेनाभिमतं कतमस्यामवस्थायां न कर्त्तव्यमिति संशये प्राप्ते, युवावस्थैव प्रयोजिका नेतरे अवस्थे इति तात्पर्यार्थं मनसि स्थिरीकृत्यानुवदति—

व्यानतादिप्रबन्धस्य युवावस्थायाः प्रयोजकत्वात् ॥ २० ॥

व्यानतादिप्रबन्धस्येति ॥ ननु युवावस्थाया एव प्रयोजकत्वे किं मानम्? अवस्थाद्वयस्य परिहाणे किं कारणमित्युक्तं चेत्, तत्र कारणं सम्प्रदर्शयति - बाल्यदशायां परिज्ञानाभावान्नाभ्यर्थिता तृतीयावस्थायां कारणसमुदायस्य उपक्षीणत्वेनानुदर्शनात् न योग्यता, पारिशेष्याद्युवावस्थैव प्रयोजिका ॥ २० ॥

यत्तु द्वादश सूत्रे उक्तं 'चिदाभासस्यानुदर्शने परमकारणं सदृगादिव्याघात' इति, तत् अनुदर्शनं पूर्वरूपस्य वा उत्तररूपस्य वेति संशये प्राप्ते, पूर्वपक्षमते व्याघातकर्तुरेव अनुदर्शनम्, उत्तरपक्षे तु व्यासज्यवृत्तित्वादुभयोरप्यनुदर्शनं, तत्र हेतुः उत्तररूपव्यापारे पूर्वरूपस्य प्रयोजकत्वम् , पूर्वरूपाभावे उत्तररूपव्यापारस्य आश्रयासिद्धिदोषप्रसङ्गात् । तस्माच्चिदाभासस्यानुदर्शनं रूपद्वयस्यैवेति तात्त्विकराद्धान्तनिदर्शनं स्थिरीकृत्यानुवदति—

सदृगादिव्याघातजन्यस्यानन्दस्यानुभूतेरुभयनिष्ठ-

त्वं रसानन्दानुभूतेरुभयत्र संश्लिष्टत्वात् ॥२१॥

सदृशद्विव्याघातजन्यस्यानन्दस्येति ॥२१॥

आनन्दपञ्चकानुभवे साधनपञ्चकमुपवर्णितम् , सायुज्यानन्दस्यानुदर्शने कतमत् साधनं चिरन्तनऋषिभिः कल्पकारैः ईप्सिततमत्वेनाभिदिष्टमित्याकाङ्क्षायामीप्सित मसाधनमत्यन्तानुकम्पया प्रदर्शयति—

सेचनकालः सायुज्यानन्दस्यानुभवदर्शने प्रयोजकीभूतो हेतुः ॥ २२ ॥

सेचनकाल इति । सर्वेभ्यः आनन्देभ्यः सायुज्यानन्दस्योत्कृष्टत्वमिति विज्ञापितं भवति । सेचनकालः'रेतःसेचनकालः, तस्मिन्काले ऽपरोक्षानुभवदर्शनेन सायुज्यानन्दस्यानुभवं करोतीत्यर्थः ॥ २२ ॥

दोर्भ्यां कुचयोरुपमर्दनं तृतीयाङ्गमिति पञ्चमसूत्रे कुचयोरुपमर्दनं कामोद्बोधजनकत्वेन प्रतिपादितम् , तत्र उपमर्दनं नाम दोष्णः पौरस्त्यभागेन स्तनयोर्ग्रहणं विना उपमर्दनं कर्तुमशक्यत्वात् स्तनग्रहणे अभीप्सिततमं किं प्रयोजकमित्याशङ्क्याभीप्सिततमं स्तनग्रहणे प्रयोजकं निर्दिशति—

उरोजसङ्ग्रहणे तद्गतकाठिन्यस्य प्रयोजकत्वम् ॥२३॥

उरोजसङ्ग्रहण इति । यदि कुचयोः काठिन्यं न स्यात् तदापि कस्यापि पुरुषस्य स्तनग्रहणे मनीषाया प्रवृत्तिर्न स्यात् , द्वितीयावस्थामतिक्रम्य स्थितायाः योषायाः अतीव शिथिलीभूतयोरतिदीर्घतां प्राप्तयोः स्तनयोः सङ्ग्रहणे कस्यापि मतिर्नैवोत्पद्यते, यथा अत्यन्तं पर्युषितस्य सूपचर्वादेः सङ्ग्रहणे

मतिर्नैवोत्पद्यते तथा शिथिलस्तनयोर्ग्रहणेऽपीति ज्ञातव्यम् । तस्मात्तद्गतकाठिन्यमेव स्तनयोर्ग्रहणे सम्प्रयोजकमिति निर्व्यलीकतात्पर्यार्थः ॥ २३ ॥

ननु उपमर्दनवाक्यस्यानुशासनस्य अन्यथानुपपत्त्या काठिन्याभावेऽपि शिथिलीभूतस्य स्तनस्योपमर्दनं स्यादेवेति वाच्यम्, काठिन्यस्यैवेप्सिततमत्वेनाभिमतत्वात् इत्याशयेन आनुशासनिकवाक्यं दूषयति—

काठिन्यस्योपादानकारणरूपत्वात् ॥ २४ ॥

तद्गतकाठिन्यस्य प्रयोजकत्वादिति । अवतरणप्रपञ्चेनैव सूत्रार्थस्य व्याख्यातत्वात् न किञ्चित्कारणान्तरं सूत्रार्थस्यानुवर्णने दृश्यते इति भावः ॥ २४ ॥

शम्बरारेरायोधने उदञ्जिधाष्टर्यप्रयोजकत्वम् ॥२५॥

ननु 'अञ्जिस्थाने अनुक्षणव्याघातस्य साधकतमन्दार्ढ्यं परमकारणमि'(१०)त्येतत्सूत्रस्य व्याख्यानावसरे साधकतमस्य दार्ढ्यं प्रतिपादितम्, 'शम्बरारेरायोधने' इत्येतत्सूत्रेऽपि उदञ्जेः धाष्टर्यं प्रतिपाद्यते, तत् उदञ्जेः धाष्टर्यं स्वाभाविकया वृत्त्या वा अन्यसहायेन वेत्याशंक्य अन्यसहायेनैव तस्य धाष्टर्यत्वं प्रतिपाद्यते न स्वाभाविकया वृत्त्या, कुतः ? धाष्टर्ये धातुसञ्चयोद्रेकस्य प्रयोजकत्वात् , नहि धातुसञ्चयोद्रेकं विना उदञ्जौ धाष्टर्यं संभवितुमर्हति, तस्मात् द्वितीयावस्थावान् पुरुषः धातुसञ्चयेन उदञ्जौ दार्ढ्ये सति अनुक्षणे व्याघातं कर्तुं शक्तो भवति । यद्यपि अञ्जिस्थाने अनुक्षणव्याघातकरणाख्यं कर्म तदेव आयोधनं न व्याघातादतिरिक्तं आयोधनाख्यं कर्म समस्ति "जन्यमायोधनं

रणमि"ति कोशस्मरणात्, तस्मादस्मिन्सूत्रे आयोधनशब्दोच्चारणं सहेतुकत्वेनानुमीयत इति न च वाच्यम्, सङ्गमभेदस्य संख्यातुमयुक्तत्वात् । तथाच वात्स्यायनीयं सूत्रं—'रतिविलासभेदानामानन्त्यात्, संख्यातुमयुक्तत्वात्, तस्माद्रतिविलासभेदे आयोधनशब्दस्य चरितार्थत्वात् कस्मिंश्चिद्रतितन्त्रे अनुक्षणव्याघात एव आयोधनवाचकः, प्रकारान्तरेण विलासोऽपि आयोधनवाचकः इति इमं तात्पर्यार्थं मनसि स्थिरीकृत्य प्रवर्तकरूपिणा प्रोक्तं शम्बरारेरायोधन इति ॥२५॥

**धातुसञ्चयोद्रेकस्यापि तथात्वमुभयोः कार्यकारणरूपत्वात् ॥ २६ ॥**

धातुसञ्चयोद्रेकस्यापीति । सूत्रद्वयमपि व्याख्यातम् । उभयोः कार्यकारणरूपत्वादिति । तथाचायमर्थः–अन्वयव्यतिरेकव्याप्त्या उभयोः सूत्रयोरनुदर्शनम्, धातुसञ्चयोद्रेके सत्येव उदञ्जेः स्वकीयकार्ये प्रवर्तकत्वम्, उद्रेकस्याभावे कार्यप्रवर्त्तकाभाव इति, एतदेव सूत्रस्वरूपानुदर्शनम् ॥ २६ ॥

ननु उरसि कुचाभ्यां संश्लेषणं द्वितीयमङ्गमिति तुरीयसूत्रे प्रतिज्ञातम्, तत्र द्वादशसमाभ्य उपरिष्टात् उरोजप्रादुर्भावस्य नानुदशा कतमत्साधनं स्तनयोर्दर्शने प्रयोजकमिति चेत्, तदचिरेण स्तनयोः प्रकाशकं प्रयोजकान्तरं दर्शयति—

**योनिमुखे उदञ्जिमुखप्रवेशस्याचिरेण उरोजोद्भवे परमकारणत्वम् ॥ २७ ॥**

योनिमुखे उदञ्जिमुखप्रवेशस्याचिरेण उरोजोद्भवे परमकारणत्वमिति सूत्रार्थं विवृणोति योनिमुख इति । योनिचूचुकस्याधस्तात्प्रदेशे उदञ्जिमुखप्रवेश इति यावत्स्थानपर्यन्तं

चर्ममयस्य मुखपिधानं तावन्मात्रमुदङ्मुखं तस्य प्रवेशः प्रवेशनं कर्तृ(तस्य!) अचिरेण उरोजोद्भवे परमकारणत्वमिति। तथाच वात्स्यायनीयं सूत्रम्–'पञ्चघस्रेभ्य उपरिष्टात् कर्कन्धुवत् उरोजौ परिदृश्येते सति योनिमुखे विघाटिते' इति। तस्माद्योनिमुखे उदङ्मुखप्रवेशे सति अचिरेणैव स्तनयोः प्रादुर्भावो भवतीत्यर्थः। पुरुषसान्निध्याभावाद्यदि न भिद्येत तदा चिरेण प्रादुर्भावो भवतीति स्त्रीजातेर्नियामकत्वात्, स्तनोद्भवस्याचिरेण दिदृक्षा यदि तदानीं योनिमुखस्य विदीर्णनमावश्यकत्वेनाभिमतम्, यदि च न दिदृक्षा तदा तु पञ्चदशषोडशसमाभ्य उपरिष्टात् भविष्यत्येव प्रादुर्भावः पुरुषप्रकृतेर्व्यावर्तकत्वादिति ॥ २७ ॥

ननु कामोद्बोधने श्यामाधरसुधाप्राशनमौपदेशिकाङ्गमिति यत् प्रत्यभिज्ञातं(१) तत्र कामोद्बोधनार्थे सुधाप्राशनं कर्तृनिष्ठमिति नात्र सन्देहः, तत्र अभ्यनुज्ञासम्प्रदाने उत्साहशक्त्या पूर्वरूपस्य प्राधान्यं, धाष्ट्र्यशक्तिप्राधान्येन अभ्यनुज्ञासम्प्रदानं विना उत्तररूपस्य वेति संशये प्राप्ते, तादृक्संशयनिवारणार्थं पौरस्त्यसूत्रस्यानुशासनं विदधाति—

**प्रकृतिविकारस्य लोहितोपचयः रत्युत्साहवर्धने हेतुः ॥ २८ ॥**

प्रकृतिविकारस्येति। स्त्रीजातेः लोहितोपचयः रत्युत्साहवर्धने हेतुः, शुक्रोपचयः पुरुषस्य रत्युत्साहवर्धने हेतुः। एवं च लोहितोपचये सति तद्द्वारा रत्युत्साहे वर्धिते सति तदैव तत्कर्तृकसुधाप्राशने याचाया अभ्यनुज्ञासम्प्रदानं भविष्यति।

---

(१) प्रतिज्ञातमिति पाठः समुचितोऽत्र बोद्धव्यः। (२) सूत्रे।

अत्र यथेच्छं हेतुहेतुमद्भावः—यदि लोहितोपचयाभावः तदा तत्प्रयोज्यस्य रत्युत्साहवर्धनस्याप्यभावः, रत्युत्साहवर्धनाभावो यदा तदा अभ्यनुज्ञासम्प्रदानस्याप्यभावः, अभ्यनुज्ञासम्प्रदानाभावो यदा तदा पुरुषकर्तृकसुधाकर्मकप्राशनाधिकारे कर्तृत्वाभावः स्यात् (अतः?) स्त्रीजातेः लोहितोपचयः रत्युत्साहवर्धने हेतुरिति सिद्धम्। एवं हेतुत्वे सिद्धे सर्वासामनुपपत्तीनां विध्वंसनद्वारा पुरुषस्य सुधाप्राशनं भवतीत्यर्थः। विध्वंसने जायमाने सति पुरुषस्य कामोद्बोधनं यथेप्सितम् ॥ २८ ॥

उभयोरुपचयः मन्मथसङ्गरस्य रूच्युत्पादकत्वे हेतुः ॥ २९ ॥

उभयोरुपचय इति, धातुलोहितोपचय इति यथाक्रमेण सम्बन्धः। पुरुषस्य धातोरुपचयः योषायाः लोहितोपचय इति। शेषं स्पष्टम् ॥ २९ ॥

अधरामृतास्वादनं तु औपदेशिकरसोत्पत्तेर्निदानम् ॥ ३० ॥

ननु रसशास्त्रे अष्टौ रसाः प्रकीर्तिताः वर्तन्ते, तत्र कतमस्य रसस्य उत्पत्तौ कतमस्याङ्गानुष्ठानस्य प्रयोजकत्वमिति चेत्, तादृग्रसोत्पत्तौ प्रयोजकस्वरूपमनुदर्शयति अधरामृतास्वादनं त्विति। औपदेशिकरसोत्पत्तेर्निदानं स्वादिकारणम्, अधरामृतास्वादनेन रतिविलासे शृङ्गाररसः प्रादुर्भूयत इत्यर्थः ॥ ३० ॥

रदने दशनं तु सन्निहितरसाविर्भावस्य कारणम्॥३१॥

रदनेन दशनं कर्मान्तरमपि औपदेशिकरसस्य सन्निहिते

वर्तमानस्य वीररसस्य प्रादुर्भूतेः कारणम् ।। ३१ ।।

वीररसस्यैव अवस्थान्तरत्वं सामान्याकारेण संश्लेषणे प्रयोजकमित्याह—

**संश्लेषणस्यापि पूर्वोक्तरसस्यैवावस्थान्तरत्वम् ३२॥**

संश्लेषणस्यापीति ॥ ३२ ॥

चरमरसाविर्भावकार्ये किं प्रयोजकीभूतं ? जतुकाष्ठवत् संश्लेषणं प्रयोजकम् ( इत्याह ? )—

**जतुकाष्ठवत् संश्लेषेऽपि चरमरसस्यौत्सर्गिकत्वेन प्राधान्यम् ॥ ३३ ॥**

जतुकाष्ठवत् संश्लेषे जाते सति वीररसः प्रादुर्भूत इति प्रयोज्यकर्त्रा(१) स्वकीये मनसि ज्ञातव्यमित्यर्थः ॥ ३३ ॥

ननु वैराग्यं त्रिविधं श्रूयते पुराणवैराग्यं मैथुनवैराग्यं श्मशानवैराग्यं चेति । पुराणश्रवणादुत्पन्नं यत् वैराग्यं तत् मुहूर्त्तकालादनु विभ्रंशितं भवति । श्मशानवैराग्यमपि तथैव । मैथुनवैराग्यस्योत्पत्तिः कदेत्यपेक्षायामुत्पत्तिकालं प्रदर्शयति—

**सेचनदिष्टस्योपरिष्टाद्वर्त्तमानस्यानेहसः विरागोत्पादने हेतुकारणत्वम् ॥ ३४ ॥**

रेतःसेचनदिष्टस्योपरिष्टादिति । सेचनकालस्योपरिष्टात् सेचनकालादुपरिष्टादित्यर्थः, वर्त्तमानस्यानेहसः कालस्य मैथुनवैराग्योत्पत्तेः कारणत्वमित्यर्थः । सेचनकालादुत्तरकाले एव मैथुनजन्यवैराग्यस्योत्पत्तिर्जायत इति यावत् ॥ ३४ ॥

---

( १ ) पुरुषेणेति शेषः ।

ननु तावद्वैराग्यस्योत्पत्त्यनन्तरं वैराग्यप्रध्वंसनेन रत्युत्साह-प्रवर्धने हेतुभूतः कालः कतम इत्यपेक्षायां उपरितनसूत्रेण तादृक्कालं प्रदर्शयति—

**मुहूर्त्तकालस्योपरिष्टाद्वर्त्तमानस्य समयस्य उत्पन्नविरागस्य प्रध्वंसनद्वारा रत्युत्साहशक्तौ परमकारणत्वम् ॥ ३५ ॥**

**मुहूर्त्तकालस्योपरिष्टाद्वर्तमानस्य समयस्येति** । मुहूर्त्तकालादनन्तरमुत्पन्नं वैराग्यं झटिति विस्मृत्य पुनः द्वितीयं रतिसङ्ग्रामं कर्तुमतीवोत्साहशक्त्या प्रवृत्तो भवतीत्यर्थः । अनेन वाक्येन मैथुनवैराग्यस्यापि मुहूर्त्तकालावसायित्वमित्युक्तं भवति॥३५॥

सङ्कुचितस्वाधिष्ठानस्य भेदनकार्यजन्यमानन्दमवाङ्मनसगोचरमित्यस्मिन्(११)सूत्रेऽवाङ्मनसगोचरानन्दस्य भेदनाख्यं कर्म कारणं प्रयोजकम्, भेदने क्रियमाणे तादृगानन्दस्योत्पत्तिरिति निर्धारितम्, भेदने किं प्रयोजकमित्याकाङ्क्षायामाकाङ्क्षानिवृत्तौ साधकतमं प्रयोजकं निर्दिशति—

**निर्लोमयोनिसम्भेदस्य पुरुषशक्तेः परमकारणत्वम्॥३६॥**

**निर्लोमयोनिसंभेदस्येति** । पुरुषशक्तेः परमकारणत्वं निर्लोमयोनिसम्भेदस्येति सूत्रार्थः । अनेन सूत्रस्य व्याख्यानेन अन्वयव्याप्तिर्दर्शिता । तथाचायमर्थः- पुरुषस्योदञ्चौ दृढत्वरूपा शक्तिश्चेन्निर्लोमयोनिसम्भेदः सम्भवतीति अन्वयव्याप्तेरनुदर्शनम् ॥ ३६ ॥

व्यतिरेकव्याप्तेरनुदर्शनमेतत्सूत्राद्दुपरितनसूत्रे प्रदर्शयति—

**पुरुषशक्तेरभावे सम्भेदं कर्तुमशक्यत्वात् ॥३७॥**

वाग्भटादिषु प्रसिद्धम् ॥ ४४ ॥

**उष्मकस्यानेहसि शरघस्रान्तरिते झषकेतोरायोधनस्याभ्यनुज्ञानम् ॥ ४५ ॥**

उष्मकस्यानेहसीति । वैशाखमासे शुक्रमासे ज्येष्ठमासे 'ज्येष्ठे शुक्रः शुचिः स्वयमि'त्यमरः। 'सुरभिर्ग्रीष्म उष्मक' इत्यमरः। तादृशे काले वैशाखमासे ज्येष्ठमासे चेत्यर्थः । शरघस्रान्तरिते इति । पञ्चदिनानन्तरम् । 'घस्रो दिनाहनी वा त्वि'त्यमरः। तादृशे काले पञ्चदिनानन्तरं रतिविलासं कुर्यान्न निरन्तरम् । तथाच भारतीयं सूत्रम्-'ग्रीष्मादिष्टे पञ्चवासरानतिक्रम्य झषकेतोरायोधनस्याभ्यनुज्ञानम्' । अभ्यनुज्ञानमुपदेशः ॥ ४५ ॥

**प्रावृषि पङ्क्तिसंख्याविच्छेदेन रतिजन्यस्योपदेशः ॥ ४६ ॥**

प्रावृषीति। प्रावृषि वर्षाकाले। 'स्त्रियां प्रावृट् स्त्रियां भूम्नी'-त्यमरः । पङ्क्तिसंख्याविच्छेदेनेति । दशदशदिनानि परित्यज्य रतिजन्यस्योपदेश इति । रतिसंग्रामस्योपदेश इत्यर्थः । 'जन्यमायोधनं रणमि'त्यमरः ॥ ४६ ॥

ननु शास्त्रोपक्रमादारभ्य उपमानोपमेयसङ्गत्या रतिविलासे अनुष्ठानप्रकारभेदेन आनन्दपञ्चके उपवर्णिते सति स्वर्गलोकसम्बन्धिन आनन्दस्यानुवर्णिते किं कारणमित्युक्तं चेत्, मैवम्, लेखर्षभानन्दस्यानुवर्णितेन स्वर्गलोकानन्दानुभवस्य चरितार्थत्वात् , इदानीमवशिष्टलोकस्यानन्दानुभवे प्रयोजककारणमनुदर्शयति—

**अतिश्यामाभिः सह सम्प्रयोगो जनोलोकानन्दानुभवे अनुशासनवाक्यस्योपदेशः ॥ ४७ ॥**

**अतिश्यामाभिरिति** । श्यामावस्थामतिक्रान्ताः अतिश्यामास्ताभिः अतिश्यामाभिः, षोडशशरद्भिः संयुक्ता श्यामा, तस्या अवस्थात्वं किन्नाम ? षोडशहायनैः परिच्छिन्नत्वम्, तादृशीमवस्थामतिक्रम्य स्थितायाः स्त्रियः सप्तदशहायनात्मिकाः १८ हायनात्मिकाः ताभिः सह सम्प्रयोगः सह प्रयोगः रतिविलासार्थमेकीभूय एकतल्पे अवस्थानमिति यावत् । **अनुशासनवाक्यस्योपदेश इति** । अनुशासनवाक्यं किन्नाम? अपरिज्ञातपदार्थस्य तात्पर्यार्थप्रकाशनद्वारा अनुशिक्षणम् । तत्रायमर्थः—युवावस्थां सम्प्राप्य स्खलितयौवनाभिः सह ये रतिं कुर्वन्ति तानुद्दिश्य इदं उपदेशवाक्यम्—हे बालिशाः ! गलितयौवनाभिः सह रतिविलासं मा कुरुत, जनोलोकानन्दानुभवार्थमतिश्यामाभिः सह रतिविलासं कुरुतेति उपदेशवाक्यस्य तात्पर्यार्थः । जनोलोकानन्दसदृशोऽतिश्यामाभिः सह नर्मविलास इत्यर्थः ॥ ४७ ॥

ननु जनोलोकानन्दानुभवे प्रयोज्यप्रयोजकरूपं परिज्ञातं तदुपरिस्थितस्य लोकस्यानन्दानुभवे प्रयोजकस्वरूपं कतमत् ? इत्यपेक्षायां प्रयोजकस्वरूपं दर्शयति—

**तपोलोकस्यानन्दानुभवे पूर्वरूपपूर्णावस्थायाः नियतकारणत्वम् ॥ ४८ ॥**

तपोलोकस्येति । पूर्वरूपस्य स्त्रीजातेः या पूर्णावस्था अत्युत्कटतारुण्यावस्था तस्याः तादृक्लोकस्यानन्दानुभवे नियतकारणत्वमिति सूत्रस्यार्थः । अनेन वाक्येन प्रयोज्यप्रयोजकभावोऽपि निरूपितो भवति ॥ ४८ ॥

ननु पूर्वप्रतिपादितं यत् आनन्दपञ्चकं तेभ्यो जन्यं यदनिर्वचनीयमानन्दं तदनुभवे साधकमतमं कारणं किमित्यपेक्षायां

तादृक्कारणं निर्दशयति—

**सर्वानन्दसमूहेभ्य उत्पन्नस्यानिर्वचनीयानन्दस्यानुभवे उपश्यामासम्प्रयोगः ॥ ४९ ॥**

सर्वानन्दसमूहेभ्य इति । श्यामावस्थायाः सह समीपे वर्तते सा उपश्यामा १४,१५हायनात्मिकेत्यर्थः । संप्रयोगशब्दः पूर्वमेव व्याख्यातः ॥ ४९ ॥

सामान्यजनस्य सामान्यरतिविलासे तृष्णायां जायमानायां सत्यां तत्र प्रयोज्यप्रयोजकभावं दर्शयति—

**अतिक्रान्तावस्थया सह संप्रयोगो सामान्यानन्दस्यावभासकः ॥ ५० ॥**

अतिक्रान्तावस्थयेति । अतिक्रान्ता अवस्था यस्याः सा तया सह संप्रयोगः । सामान्यानन्दस्येति । नात्युच्छ्रितं नातिलघिष्ठतरं सामान्यं तादृगानन्दस्यावभासकः प्रकाशकः । गलितयौवनया सह रतिविलासे क्रियमाणे सामान्यानन्दस्यैव आविर्भावो भवतीत्यर्थः, नतु उपश्यामासम्प्रयोगवत् अनिर्वचनीयानन्दप्रकाशो भवति ।

यवनी नवनीतकोमलाङ्गी शयनीये यदि नीयते कदाचित् ।
अवनीतलमेव साधु मन्ये न वनी माघवनी विनोदहेतुः ॥५०॥

एवं अनङ्गसङ्ग्रामे कालविशेषावस्थामनूच्य, अतिश्यामादिभिः सह सम्प्रयोगेण जनोलोकाद्यानन्दाद्यनुभवविशेषावस्थामनूच्य, रतिविलासस्याभ्यनुज्ञासम्प्रदानं कतिसमावधिकामित्युक्तं चेत्समावधिकं दिष्टं अनुदर्शयति—

**प्रवेष्टसङ्ग्रहणात्तत्पुरस्ताद्यथेच्छं रतिविलासस्यानुशासने अधिकार(क)त्वम् ॥ ५१ ॥**

प्रवेष्टसङ्ग्रहणात्पुरस्तादिति । अस्मिन्सूत्रे उत्तरसूत्रा-'द्दिष्टप्रकृतिविकारस्ये'त्येतावत्पदमपकृष्यते, तथाचायमर्थः सम्भवति-दिष्टप्रकृतिविकारस्य प्रवेष्टसङ्ग्रहणात्पुरस्तादिति सूत्रं संळाप्यते । दिष्टशब्देन कालः तस्य कालस्य यः प्रकृतिविकारः स्त्र्यपत्यं तस्य प्रवेष्टसङ्ग्रहणं पाणिग्रहणं ततः पाणिग्रहणात् पुरस्तात् कालकन्यायाः परिणयनात् पुरस्तात्, वृद्धावस्थायाः पूर्वभूता या अवस्था तारुण्यावस्था तत्पर्यन्तं यथेप्सितं रतिविलासे कामयज्ञाधिकारे अधिकार(क)त्वामिति, तावत्पर्यन्तं यथेच्छं भार्यया सह रतिशास्त्रोक्तं कामविकासं कुर्यादित्यर्थः ॥ ५१ ॥

जायया सह रतिविलासस्योपरमणकालः कः इत्युक्तं चेत्, उपरमणकालं सम्प्रदर्शयति —

दिष्टप्रकृतिविकारस्य प्रवेष्टसङ्ग्रहणं रतितन्त्रावसाने प्रयोजकीभूतो हेतुः ॥ ५२ ॥

इतिश्रीमहाराजाधिराजेन पुरूरवसा प्रोक्ता
मनसिजसूत्र(१)मञ्जरी समाप्ता

---

दिष्टप्रकृतिविकारस्येति । दिष्टशब्देन कालः तस्य यः प्रकृतिविकारः प्रकृतिकार्यं स्त्रीजातिरूपेण परिणतं तस्य कालकन्यायाः प्रवेष्टसङ्ग्रहणं पाणिग्रहणं, कालकन्यायाः पाणिग्रहणं कर्तृ, रतितन्त्रावसाने इति, कामविलासस्योपरमणे प्रयो-

जकीभूतो हेतुः असाधारणं कारणम्, कालकन्यायाः परिणयनानन्तरं वार्धक्यदशायाः प्राप्त्यनन्तरं निरायासेनैव रतिविलासान्निवृत्तो भवतीत्यर्थः, 'जीर्णो विरमेदिति' श्रुतेः। मनसिजविलासतृप्त्या निवृत्त्यनन्तरं वृत्तित्रयेण स्वकीयं मनः निर्गुणपरमानन्दस्वरूपे संयोज्य सार्वकालिकं तत्स्वरूपस्यैव अनुचिन्तनपूर्वकं निदिध्यासं कुर्यादिति भावः ॥

इति जयकृष्णदीक्षितविरचिता पौरूरवसमनसिजसूत्र-
(१)मञ्जरीव्याख्यानदीपिका समाप्ता ॥

## अथ स्मरदीपिका(२)मञ्जरी ।

श्रीगणेशायनमः ।

हरकोपानलेनैव भस्मीभूयाकरोत्स्मरः ।
अर्द्धं नारीशरीरं हि यश्च तस्मै नमोस्तु ते ॥ १ ॥
सम्यगाराधितः कामः सुगन्धिकुसुमादिभिः ।
विदधाति वरस्त्रीणां मानग्रन्थिविमोचनम् ॥ २ ॥
(१)स्मरन्निर्जित्य रुद्रेण पश्चादुद्दीपितः स्मरः ।
तेन तन्नामधेयेन निर्मिता स्मरदीपिका ॥ ३ ॥
अनेककामशास्त्राणां सारमाकृष्य यत्नतः ।
बालव्युत्पत्तये स्त्रीणां चित्तसन्तोषणाय च ।
प्रबोधाय वरस्त्रीणां तुष्ट्यै रतिसुखाय च ॥ ४ ॥
गर्गेणाभाषितां सम्यक् वक्ष्यामि स्मरदीपिकाम् ।
यस्य विज्ञानमात्रेण मूर्खो ऽपि रतिरङ्गधीः ॥ ५ ॥
(२)बालिका तरुणी प्रौढा वृद्धा चेति विशेषतः ।
ज्ञातव्यो ह्यन्वितः कामो ध्रुवं शृङ्गारमिच्छता ॥ ६ ॥
कामशास्त्रस्य तत्त्वज्ञा जायन्ते सुन्दरीप्रियाः ।
कामशास्त्रमजानन्तो रमन्ते पशुवत्स्त्रियम् ॥ ७ ॥

---

(१) माराग्निर्जित्य बुद्धेन लब्धेया मानुषीकृता ।

(२) कथं रतिरङ्गधीर्भवति तत्स्वरूपमाह बालिकेत्यादि । शृंगा॰ रेच्छता इति विशेषतः कामो ज्ञातव्य इत्यन्वयः । केचित्तु बाल॰ तरुणः प्रौढो वृद्धश्चेति पाठं कल्पयन्तो कामस्य विशेषणत्वमा॰ तच्छिरोवेष्टनेन नासिकास्पर्शवच्चिन्त्यम् ।

नानानिबन्धैः सुरतोपचारैः क्रीडासुखं जन्मफलं नराणाम् ।
किं सौरभेयीशतमध्यवर्ती वृषोऽपि संभोगसुखं न भुङ्क्ते ॥८॥
स्वनारीरक्षणं पुंसां परनार्यनुरञ्जनम् ।
बन्धभेदाङ्गितज्ञानमेतत्फलमुदाहृतम् ॥ ९ ॥
येन संवत्सरो दृष्टः सकृत्कामस्सुसेवितः ।
तेन सर्वमिदं दृष्टं पुनरावर्तितं जगत् ॥ १० ॥
प्रथमं लक्षणं पुंसां[१]स्त्रीणां च तदनन्तरम् [२]।
ध्वजस्य लक्षणं प्रोक्तं[३] भगलक्षणसंयुतम् [४] ॥११ ॥
कामस्थानानि संलक्ष्य पुनः सम्पक्प्रचालनम्[५] ।
पुनः षोडश बन्धाश्च तथैवाधोमुखाश्च षट् ॥ १२ ॥
द्वौ बन्धौ सुन्दरीणां च[७] पश्चान्मुखरतं तथा [८] ।
बाह्यं रतं[६] ततः कुर्याद्रतं देशविशेषजम्[९] ॥ १३ ॥
इङ्गितस्य परिज्ञानं[१०] दूत्याश्च तदनन्तरम[११] ।
तथाष्टनायिकायाश्च[१२] मन्त्रौषधिसुतोदयः[१३] ॥१४॥

## अथ पुंसां लक्षणप्रकरणम् [१]

शशो मृगो वृषश्चैव चतुर्थस्तु हयस्तथा ।
कथयामि क्रमात्पुंसामेतज्जातिचतुष्टयम् ॥ १५ ॥

### शशो यथा—

मृदुचपलसुशीलः[२] कोमलाङ्गः सुवेषः
सकलगुणनिधानं सत्यवादी शशोऽसौ ॥
वदति मधुरवाणीं नृत्यगीतानुरक्तो
द्विजसुरगुरुभक्तो बन्धुयुक्तो धनाढ्यः ॥ १६ ॥
स्त्रीजितो गायनश्चैव नारीसत्त्वपरः सुखी ।
षडङ्गुलभवेन्मेढ्रः श्रीमांश्च शशको मतः ॥ १७ ॥

मृगो यथा—

वदति मधुरवाणीं रक्तनेत्रस्सुशीलः
चलमतिरतिभीरुश्शीघ्रगामी मृगोऽसौ ॥
उदरकटिकृशः स्याद्दीर्घबिम्बाधरौष्ठो
दशनवदनदीर्घो दीर्घबाहुः प्रतापी ॥१८॥
अल्पशुग्धार्मिकश्चैव सत्यवादी प्रियंवदः ।
अष्टाङ्गुलभवेन्मेढ्रो(१) रूपयुक्तो मृगो मतः ॥१९॥

वृषो यथा—

उदरकटिकृशास्यश्शीघ्रगामी नतांसः
कनकरुचिरदेहः कष्टवादी वृषोऽसौ ॥
व्यसनकृपण बुद्धिः स्त्रीवशः स्त्रीविलासो
बहुगुणबहुतेजाः दीर्घनेत्रोऽभिमानी ॥२०॥
उपकारपरो नित्यं स्त्रीवशी श्लेष्मलस्तथा ।
लुब्धश्च कृपणश्चैव मिथ्यावादी च निर्भयः ।
दशाङ्गुलशरीरस्तु(२) मेढ्स्वी वृषभो मतः ॥ २१ ॥

हयो यथा—

उदरकटिकृशास्यो दीर्घकण्ठाधराष्ठो
दशनवदननेत्रं तस्य दीर्घोऽपि नाभिः ॥ २२ ॥
लुब्धश्च कृपणश्चैव मिथ्यावादी च निर्भयः ॥
द्वादशाङ्गुलमेढ्रस्तु कुशलोऽपि हयो मतः ॥ २३ ॥

इति पुरुषलक्षणानि चत्वारि ॥

अथ स्त्रीणां जातिचतुष्टयप्रकरणम् [२]

पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा ।

---

(१) शरीरस्तु इति पाठान्तरम् ।
(२) मेढ्रस्तु इति पाठान्तरम् ।

प्रत्येकं च वरस्त्रीणां ख्यातं जातिचतुष्टयम् ॥ २४ ॥

पद्मिनी यथा—

भवति कमलनेत्रा नासिकाक्षुद्ररन्ध्रा
अविरलकुचयुग्मा दीर्घकेशा कृशाङ्गी ॥
मृदुगमनसुशीला नृत्यगीतानुरक्ता
सकलगुणसुवेषा पद्मिनी पद्मगन्धा ॥ २५ ॥
शशिवदना बिम्बौष्ठी तन्वी ताम्रनखी तथा ।
मन्दगा लज्जिता श्यामा रक्तप्रान्तविलोचना ॥२६॥
गायनी सुरताढ्या च पारावतकलस्वना ।
स्वल्पाहारा सुकेशी च पद्मगन्धा च पद्मिनी (१)॥ २७ ॥

चित्रिणी यथा—

भवति विपुलकेशा नातिदीर्घा न खर्वा
तिलकुसुमसुनासा स्निग्धदेहोत्पलाक्षी ॥
कठिनघनकुचाढ्या सुन्दरी बन्धशीला
निखिलगुणविचित्रा चित्रिणी चित्रवेषा ॥२८॥
गौराङ्गी त्यक्तलज्जा च बाह्यसम्भोगसंरता ।
उत्तानशायिनी चोष्णा पारावतकलस्वना ॥२९॥
स्निग्धाङ्गी मांसगन्धा च स्वल्पकामा कृशोदरी ।
धूर्ता गुरुनितम्बा च चित्रिणी श्रीफलस्तनी ॥३०॥

शङ्खिनी यथा—

दीर्घाकृतिर्दीर्घसुवर्णनेत्रा दीर्घाधरा दीर्घनितम्बबिम्बा ।
लेपातपालङ्कृतकण्ठदेशा पुंसैकचित्ता खलु शङ्खिनी स्यात् ३१।
शोभना कोमला चोष्णा दीर्घा दीर्घशिरोरुहा ।
मृद्वङ्गी क्षारगन्धा च नातिस्थूला न दुर्बला ॥ ३२ ॥

---

( १ ) तपस्विनीति पाठान्तरम् ।

गौराङ्गी तीक्ष्णनासा च पीनस्तनी विचक्षणा।
विशालजघना क्रूरा सुरताढ्या च शङ्खिनी॥३३॥

हस्तिनी यथा—

स्थूलाकृतिः स्थूलपयोधरा च स्थूलाधरा स्थूलनितम्बबिम्बा।
कामोत्सुका गाढरतिप्रिया च मध्ये च पुष्टा करिणी मता च॥३४॥

स्थूला कठिनकुचा क्रूरा नात्युष्णा नातिशीतला।
गौराङ्गी क्षीणनासा च पीनस्तनविलक्षणा॥ ३५॥
विशालजघना क्रूरा फुल्लनासाऽतिशीतला।
खर्वा च खर्वनासा च बहुलोमा च कामुकी॥ ३६॥
मदगन्धतनु(१)र्नित्यं मत्तमातङ्गगामिनी।
लुब्धा पीनस्तनी क्रुद्धा(२) हस्तिनी सा प्रकीर्त्तिता॥३७॥
पद्मिनी पिकवाणी च स्निग्धवाणी च चित्रिणी।
शङ्खिनी क्रूरवाणी च मेघवाणी च हस्तिनी॥ ३८॥
पद्मिनी पादशोभा च केशशोभा च चित्रिणी।
शङ्खिनी मुखशोभा च कटिशोभा च हस्तिनी॥ ३९॥
पद्मिनी पद्मगन्धा च क्षीरगन्धा च चित्रिणी।
शङ्खिनी मीनगन्धा च मदगन्धा च हस्तिनी॥ ४०॥
पद्मिनी पद्मनिद्रा च दीर्घनिद्रा च चित्रिणी।
शङ्खिनी घोरनिद्रा च गजनिद्रा च हस्तिनी॥ ४१॥
पद्मिनी पद्मबन्धेन नागबन्धेन चित्रिणी।
शङ्खिनी मीनबन्धेन गजबन्धेन हस्तिनी॥ ४२॥
पद्मिनी स्वल्पभोगा च लघुभोगा च चित्रिणी।
शङ्खिनी बहुभोगा च गजभोगा च हस्तिनी॥ ४३॥
शशकः पद्मिनीं चैव चित्रिणीं च मृगस्तथा॥
शंखिनीं वृषभश्चैव हस्तिनीन्तु हयस्तथा।

---

(१) परा इति पाठान्तरम्। (२) श्यामा इति पाठान्तरम्।

रमते तुल्यभावेन तदा समरतं भवेत् ॥ ४४ ॥
उच्चनीचातिनीचं च तथात्युच्चं च वर्जितम् ॥
ख्यातं समरतं चैव तद्धि रहत्य(१)न्यथा स्त्रियः ॥ ४५ ॥
इति स्त्रीणां जातिचतुष्टयम् ।

---

## अथ ध्वजलक्षणप्रकरणम्(३) ।

मुशलं रङ्गवीरं च द्विविधं ध्वजलक्षणम् ।
स्थूलं मुशलमित्याहुर्दीर्घं (२ तद्रङ्गवीरकम् ॥ ४६ ॥
नातिह्रस्वं नातिदीर्घं स्थूलं स्थूलान्तिकं वरम् ।
क्षत्रशीर्षं प्रसन्नं च लिङ्गानि स्युः शुभानि षट् ॥ ४७ ॥

## अथ भगलक्षणप्रकरणम्(४) ।

कूर्मपृष्ठा गजस्कन्धा पद्मनाभिसमा तथा(३) ।
अलोमा मृदुविस्तीर्णा षडेते सुभगा भगाः ॥ ४८ ॥
शीतलं चोष्णमत्युष्णं गोजिह्वासदृशं खरम् ।
इत्युक्तं कामशास्त्रज्ञैर्भगचिह्नचतुष्टयम् ॥ ४९ ॥
शीतलं सुखदं प्रोक्तमुष्णं च मध्यमं स्मृतम् ।
अत्युष्णमसुखं चैव खरं प्राणहरं स्मृतम् ॥ ५० ॥

## अथ कामचालनप्रकरणम्(५) ।

अङ्गुष्ठे चरणे गुल्फे भगे नाभौ कुचे हृदि ।
कक्षे कण्ठेऽधरे नेत्रे कपोले च श्रुतावपि ।
शीर्षे सर्वशरीरे तु वसेत्कामस्तिथिक्रमात् ॥ ५१ ॥
सव्ये पुंसः स्त्रियो वामे कृष्णे शुक्ले विपर्ययः ।
ऊर्ध्वं प्रतिपदादौ च कृष्णे चाधः प्रचक्षते ॥ ५२ ॥
एवञ्चैव वसेत्कामः स्थाने चैव विशेषतः ।

---

(१) तद्धि हन्त्यन्यथेति पाठान्तरम् ।
(२) रङ्गवीरकमिति पाठान्तरम् ।
(३) मेघनाभिर्मृगीमुखी इति पाठान्तरम् ।

पादे जङ्घे ऊरुदेशे (१)स्तने कक्षे गले श्रुतौ ॥ ५३ ॥
नखक्षतं प्रदातव्यं भगे नाभौ च मर्दनम् ।
गण्डे नेत्रे ललाटे च चुम्बनं कामुकैरिह ।
हृदये ताडनं हस्ताद्दन्तेनाधरपीडनम् ॥ ५४ ॥
आत्मास्येन्दुशरद्विसप्ततिथयः ख्यातं नलिन्या रते
पौलस्त्याग्धिरसाष्टभास्करतिथौ प्रीता भवेच्चित्रिणी ॥
रुद्रानङ्गगणेशशम्भुतिथयः स्युः शंखिनीभुक्तये
शेषाः स्युः सुरतोत्सवेषु करिणां जातां स्त्रियः प्रीतये ॥५५॥
अङ्गुष्ठे चरणे च गुल्फनिचये जानुद्वये वास्तिके
नाभौ वक्षसि कक्षयोर्निगदिता कण्ठे कपोलेऽधरे ॥
नेत्रे कर्णयुगे ललाटफलके मौलं च वामभ्रुवा-
मूर्द्ध्वाधश्चलनक्रमेण तिथयश्चान्द्रीकलाऽपक्षये ॥ ५६ ॥
सीमन्ते नयनेऽधरे च गलके कक्षातटे चूचुके
नाभौ श्रोणितटे मनोभवगृहे जंघातटे पिण्डके ॥
गुल्फे पादतले तदङ्गुलितलेऽङ्गुष्ठे च तिष्ठत्यसौ
वृद्धक्षीणसमं तदा शशिकलापक्षद्वये योषिताम् ॥ ५७ ॥
मौलौ कुन्तलकर्षणं नयनयोराचुम्बनं गण्डयोः
दन्तेनाधरपीडनं हृदि हतिं मुष्ट्या च नाभौ शनैः ॥
कक्षाकण्ठकपोलमण्डलकुचश्रोणीषु देया नखाः
सीमन्ते शिखरं नखैरुरसिजौ गृह्णीत गाढं ततः ॥ ५८ ॥
कुर्वाणो विरतिं मनोभवगृहे मातङ्गलीलायितं
जान्वङ्गुष्ठपदोरुगुल्फहननं चान्योन्यतः कामिनाम् ॥
इत्येवं गदितं प्रदेशकलनादिन्दोः कलारोपणं
कर्तव्यं च नरैस्तु स्त्रीषु रभसादुक्तः प्रबोधाधिकः ॥ ५९ ॥

(१) शीर्षे इति पाठान्तरम् ।

## अथ प्रासङ्गिकं स्त्रीणां कामनिवासस्थानम् ।

### शुक्लपक्षे ।

| | | | |
|---|---|---|---|
| १ | पादाङ्गुष्ठमर्दनेन कामायतनं स्यात् । | | |
| २ | चरणघर्षणम् | ९ | जानुहननम् । |
| ३ | हस्तेन भगे नखक्षतः । | १० | नाभौ मर्दनम् । |
| ४ | कुचमर्दनेन न० । | ११ | हृदि ताडनम् । |
| ५ | कक्षे नखक्षतः । | १२ | कण्ठे नखक्षतः । |
| ६ | ओष्ठचुम्बनम् । | १३ | गण्डे चुम्बनम् । |
| ७ | नेत्रचुम्बनम् । | १४ | ध्वजमूलेनाकर्षणं कर्णे मर्दनं ताडनं च। |
| ८ | सर्वशरीरे केशाकर्षणम् । | १५ | शिखाकेशाकर्षणम् । |

### कृष्णपक्षे ।

| | | | |
|---|---|---|---|
| ३० | पदाङ्गुष्ठमर्दनेन कामायतनं स्यात् । | | |
| १४ | चरणघर्षणम् । | ७ | जानुहननम् । |
| १३ | हस्तेन भगे नखक्षतः । | ६ | नाभौ मर्दनम् । |
| १२ | कुचमर्दनेन न० । | ५ | हृदि ताडनम् । |
| ११ | कक्षे नखक्षतः । | ४ | कण्ठे नखक्षतः । |
| १० | ओष्ठचुम्बनम् । | ३ | गण्डे चुम्बनम् । |
| ९ | नेत्रचुम्बनम् । | २ | ध्वजमूलेनाकर्षणं कर्णे मर्दनं ताडनं च। |
| ८ | सर्वशरीरे केशाकर्षणम् । | १ | शिखाकेशाकर्षणम् । |

## अथ स्त्रीणामपरं कामनिवासस्थानम् ।

### शुक्लपक्षे ।

| | | | |
|---|---|---|---|
| १ | शिरसि | | |
| २ | ललाटे | ९ | कक्षे |
| ३ | नासिकायाम् | १० | कुचे |
| ४ | नेत्रे | ११ | नाभौ |
| ५ | ओष्ठे | १२ | भगे |
| ६ | जिह्वायाम् | १३ | नितम्बे |
| ७ | कण्ठे | १४ | जंघायाम् |
| ८ | गण्डे | १५ | चरणे |

### कृष्णपक्षे ।

| | | | |
|---|---|---|---|
| ३० | पृष्ठे | | |
| १४ | नेत्रे | ७ | नाभितटे |
| १३ | कण्ठे | ६ | भगे |
| १२ | वामहस्ते | ५ | नितम्बे |
| ११ | कक्षायाम् | ४ | जंघायाम् |
| १० | हृदि | ३ | जानुनि |
| ९ | उदरे | २ | चरणे |
| ८ | नाभौ | १ | दक्षिणचरणाङ्गुष्ठे |

इति कामुकसंघातैः कर्तव्यं कामचालनम् ।
द्रवत्येनन कामो हि घृतभाण्डमिवाग्निना ॥ ६० ॥

इत्युपदेशकामचालनम् ।

## अथ वाह्यरतप्रकरणम्(१) ।

आलिङ्गनं चुम्बनं च दन्तक्षतनखक्षते ।
मर्दनं नखचाटुश्चाधरपानं कुचग्रहः ॥ ६१ ॥
चुम्बनं सम्प्रहरणं नारीक्षोभणमेवच ।
एतद्वाह्यरतं कुर्यात्कामप्रकटहेतवे ॥ ६२ ॥

चुम्बनदन्तक्षते यथा—

अधरे गण्डयोर्भाले कपोले गलके हृदि ।
स्तने च कक्षयोर्हस्ते नाभिमूले भगस्थले ॥ ६३ ॥
कुक्षौ जघनयोर्मूले हृदयोर्नेत्रयोर्मुखे ।
कट्यां च चुम्बनं दन्तक्षतं नेत्रे तु वर्जितम् ॥ ६४ ॥
भगे मर्दनमापूर्य ततो मैथुनमाचरेत् ।
कृत्वा विवस्त्रां कान्तान्तु मेढ्रं तत्र प्रवेशयेत् ॥ ६५ ॥

आलिङ्गनं यथा-

वक्षसा स्तनयुग्मन्तु सम्पीड्य वाहुवन्धनम् ।
अन्योन्यं दृढमाक्रम्य कुर्यादालिङ्गनं स्त्रियः ॥ ६६ ॥

अन्यच्च-

रसिकेन रसज्ञेन सततं रतिमिच्छता ।
गाढमालिङ्गनं देयं तत्सख्या ह्यनुरागतः ॥ ६७ ॥

नखक्षतं यथा—

गले वक्षस्थले कुक्षौ कण्ठपार्श्वे भगे तथा ।
जघनोरुनितम्बेषु पृष्ठे हस्ते शिरस्सु च ॥

कण्ठमूले कपोले च नखक्षतमथाचरेत् ॥ ६८ ॥
कक्षाकण्ठकपोलेषु नाभिश्रोणिकुचौ तथा ।
भगस्कन्धौ कर्णमूलौ त्रयोदश नखाश्रयः ॥ ६९ ॥

नखचाटुर्यथा-

स्थानेष्वेतेषु कुक्षौ च नखचाटुं समाचरेत् ।
रोमाञ्चहेतुसुखदं मदनोद्दीपनं मतम् ॥ ७० ॥
इत्थं च मन्मथोत्पन्ने केलिं कुर्यात्तथैव च ।
स्तनयोर्युगयोश्चैव सनाभिकभगस्थले ॥
जघनोरुनितम्बेषु कामुको मुहुरर्पयेत् ॥ ७१ ॥

अथ मर्दनम्-

भुजयोः स्तनयोश्चैव भगे नाभौ तथैव च ।
षट्सु स्थानेषु विधिना मर्दनं परिकीर्तितम् ॥ ७२ ॥

अथ चुम्बनम्-

कक्षाकण्ठकपोलेषु नाभौ श्रोण्यां पयोधरे ।
कर्णमूले तथा स्कन्धे चुम्बनं द्वादशस्थले ॥ ७३ ॥

अन्यच्च-

गण्डौष्ठं च तथा वक्त्रं कक्षा नाभिर्भगस्तथा ।
कुचौ च बाहुमूलं च द्वादशैतानि चुम्बनम् ॥ ७४ ॥
गण्डौ नेत्रे तथा वक्त्रं कक्षा नाभिर्भगस्तथा ।
कुचौ च बाहुमूलं च स्थानान्येतानि चुम्बने ॥ ७५ ॥

अधरपानं यथा-

अधरोष्ठे च सम्पीड्य नायको नायिकाधरम् ।
पूर्णचन्द्रनिभं पेयान्नाय्याश्च सरसं मुखम् ॥ ७६ ॥
पयोधरोष्ठजिह्वाया द्वयोरेव कुचाग्रयोः ।
पञ्चस्थानस्य वै पानं कुर्यात्कुशविचक्षणः ॥ ७७ ॥

केशाकर्षणं यथा–

ओष्ठेन चौष्ठग्रहणपूर्वकं केशकर्षणम् ।
शिरःप्रदेशे कृत्वा तामुपविष्टां च कारयेत् ॥ ७८ ॥
यथा कोकिलशब्दः स्याद्यथा पारावतध्वनिः ।
यथा हंसमयूरादेः कलरावं तथा चरेत् ॥ ७९ ॥

अथ प्रहरणं यथा–

मुष्टामुष्टिनितम्बे च कुर्याच्चैव परस्परम् ।
उपहस्तेनाबलायास्ताडयेज्जघनद्वये ॥ ८० ॥

नारीक्षोभणं यथा–

भगगर्भस्य मध्ये तु नाडिका ध्वजरूपिणी ।
पूर्णा कामजलैर्नित्यं वामस्था मृदुपीवरा ।
मर्दिता चाङ्गुलीभ्यान्तु जनयेत्कामजं जलम् ॥ ८१ ॥

अथ बन्धप्रकरणम्(७) ॥

तत्र एकविंशतिप्रकारः । तेषां नामानि काकपदः विपरीतकः नागरिकः रतिपाशः केयूरः प्रियतोषणं समपदः एकपदः ऊर्ध्वसंपुटः संपुटकः (१)मन्मथप्रियः रतिसुन्दरः उरुपीडनः स्मरचक्रं नागपाशकः गगनकः वंशदारकः कनकक्षयः नागरः कुलिशनामकः कामसुन्दर इति । यथाक्रमं तेषां लक्षणान्यप्याह–

स्त्रीपादौ स्कन्धयुग्मस्थौ क्षिप्त्वा ध्वजं भगं लघु ।
कामयेत्कामुको नारीं बन्धः काकपदो हि सः ॥ ८२ ॥
(२)पादमेकं करे धृत्वा द्वितीयं स्कन्धसंस्थितम् ।
नारीं कामयते कामी बन्धः स्याद्विपरीतकः ॥ ८३ ॥
(३)ऊरुमूलोपरि न्यस्य योषिदूरुं नरो यदि ।

---

(१) स्तनरतिरिति पाठान्तरम् ।
(२) मेकमुरः कृत्वेति पाठान्तरम् ।
(३) मूलं परिन्यस्य योषिदूरुद्वयोपरीति पाठान्तरम् ।

ग्रीवां धृत्वा कराभ्यां तु वन्धो नागरिको मतः ॥८४॥
पीडयेदूरुयुग्मेन कामुकं यदि कामिनी ।
रतिपाशस्तदा ख्यातः कामिनीनां मनोहरः ॥८५॥
स्त्रीणां जङ्घान्तराविष्टो गाढालिङ्ग्य च(१) सुन्दरीम् ।
रमते विह्वलः कामी वन्धः केयूरसंज्ञकः ॥ ८६ ॥
नारीपादौ स्वहस्तेन हृदये धारयेद्यदि ।
स्तनार्पितकरः कामी कामयेत्प्रियतोषणम् ॥ ८७ ॥
योषित्पादौ हृदि न्यस्य कराभ्यां धारयेत्कुचौ ।
यथेष्टं ताडयेद् योनौ वन्धः समपदः स्मृतः ॥ ८८ ॥
पादमेकं करे धृत्वा द्वितीयं स्कन्धसंस्थितम् ।
स्तनार्पितकरः कामी वन्धस्त्वेकपदो हि सः ॥ ८९ ॥
सम्प्रसार्य्य स्त्रियाः पादौ शय्यार्पितकफोणिकः ।
भगे लिङ्गस्य संयोगाद्रमते संपुटो हि सः ॥ ९० ॥
स्त्रीपादौ सरलीकृत्य भूमौ कुञ्चितजानुकः ।
स्तनलग्नो(२) रमेत्कामी वन्धः सम्पुटको मतः ॥ ९१ ॥
स्वजङ्घाद्वयवाह्ये च कृत्वा योषित्पदद्वयम् ।
स्तनौ धृत्वा रमेत्कामी वन्धः स्यान्मन्मथप्रियः ॥९२॥
नारीपादद्वयं कामी धारयेत्कुचमण्डले ।
धृत्वा कण्ठं रमेन्नारीं वन्धोऽयं रतिसुन्दरः ॥ ९३ ॥
स्त्रिया ऊरुयुगं धृत्वा कराभ्यां पीडयेत्पुनः ।
कुर्य्याच्च निर्भयां कामी वन्धः स्यादूरुपीडनः ॥ ९४ ॥
धृत्वा वामकरेणोरुं पादं चापि शिरःस्थितम् ।
रमते सुदृढः कामी स्मरच्चक्रं प्रकीर्तितम् ॥ ९५ ॥

---

(१) गाढमालिङ्ग्येति युक्तः पाठः ।
(२) तनुलग्नो इति पाठान्तरम् ।

स्वजानुद्वयमध्याभ्यां हस्ताभ्यां धारयेत्स्त्रियम् ।
रमेन्निःशङ्कितः कामी वन्धः स्यान्नागपाशकः ॥ ९६ ॥
समाश्लिष्य यदा कान्तः कामिन्या जघनद्वयम् ।
ऊर्द्धगं रमते दोर्भ्यां वन्धो गगनकः स्मृतः ॥ ९७ ॥
नारीपादद्वयं चैव स्कन्धे यः परिवर्त्तनम् ।
कृत्वा कान्तो रमेदाशु वन्धोऽयं वंशदारकः ॥ ९८ ॥
मुखं मुखे यदा वाहुं वाहौ जङ्घेऽपि जङ्घयोः ।
वक्षो वक्षस्थले दत्वा भवेत्स कनकच्चयः ॥ ९९ ॥
सुन्दरीं च रमेत्कान्तः कट्यासक्तभुजद्वयाम् ।
हृदि तत्कान्तहस्तां च वन्धोऽयं नागरो मतः ॥ १०० ॥
स्त्रीपादद्वयमालिङ्ग्य विमुखाक्षिप्तलिङ्गकः ।
योनिमापीडयेत्कामी वन्धः कुलिशनामकः ॥ १ ॥
स्वजङ्घाद्वयवाहेन धारयेत्कुचमण्डलम् ।
धृत्वा कण्ठं रमेत्कामी वन्धः स्यात्कामसुन्दरः ॥ २ ॥
इत्यादिकण्ठविन्यासाद्गाढं सम्पादयेत्सुखम् ।
तस्माद्विदग्धसङ्घातैः कार्या वन्धाः प्रयत्नतः ॥ ३ ॥

इत्येकविंशतिवन्धाः ।

अथ विपरीतवन्धाः ।

स्त्रियमानतपूर्वाङ्गीं पादाहितकरद्वयाम् ।
धृतोदरो रमेत्कामी वन्धोऽयं पशुनामकः ॥ ४ ॥
पादालीढस्तनीं नारीमुत्क्षिप्तजघनां यदि ।
कान्तः कामयते पश्चात्कथितस्त्वेकवन्धकः ॥ ५ ॥

इत्यधोमुखवन्धाः ।

उद्धृत्य पादमेकं तु भुवि संस्थाप्य चापरम् ।
कुड्याश्रितां रमेत्कान्तां वन्धस्त्रैविक्रमो मतः ॥ ६ ॥

हृदि संस्थाप्य पादैकं बाहुभ्यां वेष्टयेद्यदि ।
कान्तः कुड्याश्रितां नारीं बन्धो वेष्टनको मतः ॥ ७ ॥
नारीजानुद्वयं धृत्वा आत्मजानुद्वयोपरि ।
कुड्याश्रितां रमेत्कान्तां बन्धो दोलादिनामकः ॥ ८ ॥

अन्यच्च—

नारीबाहुद्वयं न्यस्य स्वीयबाहुद्वये तथा ।
ग्रीवां धृत्वा रमेत्कामी बन्धो दोलायितः स्मृतः ॥ ९ ॥
कुड्याश्रितां रमेत्कान्तां कण्ठासक्तकरद्वयाम् ।
पादाभ्यां मध्यमावेष्ट्य बन्धः भालम्बको मतः ॥ १० ॥

इति कुड्याश्रितस्त्रीकर्तृकऊर्ध्वरतानि ।

स्त्रियाः पादद्वयं कान्तो कान्तस्योरुद्वयोपरि ।
कटिमालोलये(१)दाशु बन्धोऽयं हंसलीलकः ॥ ११ ॥
लिङ्गोपरिस्थिता नारी भूमौ दत्वा करद्वयम् ।
हृदये दत्तहस्ता च बन्धो लीलासनो मतः ॥ १२ ॥
विपरीतरते नारीमृतुस्नातां न गुर्विणीम् ।
योजयेत्कामशास्त्रज्ञः सद्यो भुक्तवतीं तथा ॥ १३ ॥

इति विपरीतरतम् ।

## अथ मुखरतप्रकरणम् (८)

भगे निःक्षिप्तजिव्हाग्रो विलोलं चुम्बति प्रियः ।
तथैव रमणस्यापि नारी लिङ्गं प्रकर्षति ॥ १४ ॥

इति मुखरतम् ।

## अथ देशविशेषजरतप्रकरणम् (९)

मध्यदेशभवा नार्यो नखदन्तपदे रताः ।
चुम्बाघातरता नार्यस्तथा मध्यमदेशजाः ॥ १५ ॥

(१) मान्दोलयेदिति पाठान्तरम् ।

अधोमुखरताश्चैव केशग्राहेषु सिन्धुजाः ।
नानारतरता नार्यस्तथा सिंहलदेशजाः ॥ १६ ॥
चुम्बनालिङ्गने रक्तास्तथा कृत्रिमलिङ्गकैः ।
महाराष्ट्रे रता रामाः स्त्रीराज्ये कोशलेषु च ॥ १७ ॥
क्षताघातांशुकाक्षेपैस्तथा कृत्रिमलिङ्गकैः
ध्वजवृषणलुब्धाश्च रामाः कार्णाटदेशजाः ॥ १८ ॥
चुम्बकेशग्रहैश्चैव जिह्वावक्षोजमर्दनैः ।
वृषणैस्ताडनेनाङ्गे रता द्राविडदेशजाः ॥ १९ ॥
नितान्तरसिका बन्धे चुम्बनालिङ्गनादिषु ।
लुब्धाश्चाधरपानेषु न तु लावण्यविग्रहाः ॥ २० ॥
तीर्थयात्राभिलुब्धाश्च गौडवङ्गाङ्गनाः किल ।
निःसहा मर्दनाघाते नेपालाः कामरूपजाः ॥ २१ ॥
स्त्रीणां विषयसात्म्यं च ज्ञात्वा मैथुनमाचरेत् ।
समाने सुखसंपत्तिरन्यथा वै द्विषन्ति ताः ॥ २२ ॥
मृदुह्रस्वध्वजो यत्र प्रियोऽशक्तो द्रुतच्युतिः ।
यत्र स्त्रीणां च काठिन्यं तत्र नीचरतो भवेत् ॥ २३ ॥
नार्यो नीचरतोद्विग्ना द्विषन्ति पुरुषं क्षणात् ।
श्रूयते चैव कर्णाटे कान्तया निहतः पतिः ॥ २४ ॥
अङ्गुलीनां प्रवेशैस्तु तथा कृत्रिमलिङ्गकैः ।
मृदुह्रस्वध्वजैः कामी रमेत्स्त्रीतोषहेतवे ॥ २५ ॥

इति देशविभागः ॥

## अथ प्रासङ्गिकं कन्यापरीक्षणप्रकरणम् ।

इदानीं यदहं वक्ष्ये कन्यायाः लक्षणं ततः ।
निरूप्य लक्षणादीस्तां परितः स्वीयसंपदम् ॥ २६ ॥
न कृष्णा नातिगौराङ्गी तन्वी मृदुवचास्तथा ।

न खर्वा नातिदीर्घा च सुवक्त्रा चारुलोचना ॥ २७ ॥
कम्बुग्रीवा च मृद्वङ्गी श्यामरुक्थोदरी(१) तु या ।
अल्पनिद्राऽल्पभोक्त्री च समाङ्गी निम्ननासिका ॥ २८ ॥
आरक्ता सुतरां नेत्रे नखे दन्तच्छदेऽपि च ।
पद्मरक्तादिचिन्हं च पाणौ पादे विशेषतः ॥ २९ ॥
समदन्ता गुरुश्रोणी विम्बौष्ठी च सुगायनी ।
भवेत्कन्या प्रशंस्या सा धर्मकामार्थसिद्धये ॥ ३० ॥
भूमौ पादकनिष्ठा वाऽनामिका वाऽर्पयेद्युगम् ।
कन्या सा वर्ज्जनीया च सैवोपपतिका मता ॥ ३१ ॥
कन्या सा पुंश्चली खर्वा या स्याच्छिवलपद्युमा ।
पीवरा कर्कशाङ्गी च पिङ्गनेत्रा कचे जटा ॥ ३२ ॥
दीर्घनेत्रा दीर्घवक्त्रा खर्वा परुषवादिनी ।
जङ्घायामुत्तरोष्ठे च विभ्रती लोमसञ्चयम् ॥ ३३ ॥
करोति यदि वा नित्यं भोजनं विपुलं बहु ।
निम्नग्रीवा निम्नकण्ठा बहुकेशी सुलोचना ॥ ३४ ॥
गण्डकूपे हसन्ती च दन्तपङ्क्त्या तु दन्तुरा ।
सा विज्ञैर्वर्ज्जनीया च सुखैश्वर्य्यसमीहया ॥ ३५ ॥

तद्यथा—

कुलद्वयं चापि विनिन्दिता स्त्री यशोविभूतिं च तिरस्करोति ।
निमग्नचन्द्रेव निशासमाना प्रयाति नैवादरतां पृथिव्याम् ॥ ३६ ॥

इति कन्यापरीक्षणम् ।

## अथ प्रासाङ्गिकं स्त्रीसेवाकालप्रकरणम् ।

सेवनं योषितां कुर्यान्मत्वा दोषबलाबलम् ।
बालायोग्यातिरूढानामृतुयोगविभागतः ॥ ३७ ॥

---

(१) श्यामा लक्ष्योदरीति पाठान्तरम् ।

बाला च तरुणी प्रौढा वृद्धा भवति नायिका ।
एभिः प्रकारैर्विख्याता युवती नागरी सदा ॥ ३८ ॥
बालेति गीयते नारी यावत्षोडशवत्सरम् ।
तस्मात्परं च योग्या सा यावद्विंशतिवत्सरम् ॥ ३९ ॥
विद्वद्भिः सर्वं जगति तरुणीत्यभिधीयते ।
तदूर्द्ध्वमतिरूढा स्याद्यावत्पञ्चाशतं पुनः ॥ ४० ॥
वृद्धा ततः परं ज्ञेया सुरतोत्सववर्ज्जिता ।
प्रीणाति बाला मालाद्यैस्तरुणी वस्त्रदानतः ॥ ४१ ॥
प्रेमवाक्यादिभिः प्रौढा वृद्धा च दृढताडनात् ।
फलताम्बूलवासोभिर्बाला वश्या भवेन्नृणाम् ॥ ४२ ॥
विविधाभरणैः स्नेहैस्तरुणी वशवर्त्तिनी ।
गाढालिङ्गनचुम्बनैश्च अतिरूढास्तु योषितः ॥ ४३ ॥
गौरवैर्मधुरालापैर्भवेद्वृद्धा प्रियंवदा ।
तथा कुसुमधर्म्मिण्यः स्त्रियो वृद्धपरिग्रहाः ॥ ४४ ॥
उपक्रामन्ति विश्वासाद्द्विषन्ति पुरुषं क्षणात् ।
निदाघशरदोर्बाला सेव्या विषयिणां भवेत् ॥ ४५ ॥
हेमन्ते शिशिरे योग्या, प्रौढा वर्षावसन्तयोः ।
सततं सेव्यमानापि बाला वर्द्धयते बलम् ॥ ४६ ॥
क्षेमं नयति योग्या स्त्री वृद्धा प्रकुरुते जराम् ।
उत्साहहानिं वृद्धा स्त्री दिशेद्रोगक्षयादिकम् ॥ ४७ ॥
बाला च प्राणदा प्रोक्ता तरुणी प्राणहारिणी ।
प्रौढा करोति वृद्धत्वं वृद्धा मरणमादिशेत् ॥ ४८ ॥
आसीने लालयेद्बालां तरुणीं शयने तथा ।
उत्थाने त्वतिरूढां च लालनं त्रिविधं मतम् ॥ ४९ ॥

इति स्त्रीसेवाकालकथनम् ।

## अथेङ्गितपरिज्ञानप्रकरणम् (१०)

अध्वक्लान्ता ऋतुस्नाता प्रथमज्वरिता तथा ।
मधुपानप्रसन्ना च नर्तिता विरही (१)तथा ॥ ५० ॥
षण्मासगर्भिणी मासप्रसूता नवरङ्गिणी ।
एता वहन्ति सुतरां स्त्रियो न सुरतोत्सवम् ॥ ५१ ॥
आलिङ्गनविहीनन्तु यो वेत्ति सुरतोत्सवम् ।
पशोरिव भवेत्तस्य सिद्धिः स्वार्थैकसिद्धये ॥ ५२ ॥
आलिङ्गचुम्बने दंशो भगस्तनविमर्दनम् ।
नखदानं च घातश्च ग्रहणं कुचकेशयोः ॥ ५३ ॥
करोति चिन्मयं हास्यं जिव्हाकण्ठाधरग्रहः ।
एतद्दशप्रभेदं हि क्षरणस्य प्रकीर्तितम्(२) ॥ ५४ ॥
नारीणां मोहनं तावद्यावन्नोत्कण्ठिता प्रिया(३) ।
अन्यथा तत्सुखोच्छित्तिरशीतार्ककरादिव ॥ ५५ ॥
सीत्कारं चाथ हुङ्कारं हसितं च त्रपाक्षयः ।
प्रस्विन्नवदनं चैव (४)विकारोऽथ भगस्य च ॥ ५६ ॥
बुद्ध्वा चैतानि लिङ्गानि योषितां सुरते बुधः ।
तया तुल्यसुखं वाञ्छन्ननुरागं समाचरेत्(५) ॥ ५७ ॥
पुष्पं माल्यं सुवर्णं च राजतं तरुणीसुखम् ।
तरुणीरहिते कान्ते व्यर्थं देशविचेष्टितम् ॥ ५८ ॥
दैवाद्यदि कदाचिद्धि विच्छेदः क्रमशस्तदा ।

---

(१) विरहिण्यथेति पाठस्समुचितोऽत्र बोध्यः ।
(२) रतं बाह्यं प्रकीर्तितम् इति पाठान्तरम् ।
(३) मोहनमारभेत्तावद्यावन्नोत्काण्ठिता प्रियेति पाठान्तरम् ।
(४) विकारो मन्मथस्य चेति पाठान्तरम् ।
(५) अतुल्यं रतमाचरेत् इति पाठान्तरम् ।

दशमीं मन्मथावस्थां प्राप्नोत्येव न संशयः ॥ ५९ ॥
अभिलाषश्चिन्तनं चानुस्मृतिर्गुणकीर्त्तनम् ।
उन्मादो विप्रलापश्च उद्वेगो व्याधिरष्टमः ॥ ६० ॥
जरता मरणं चेति दशावस्था मनोभुवः ।
प्रमदानां नराणां च स्मरोन्मथितचेतसाम् ॥ ६१ ॥
लक्षयित्वेङ्गितं स्त्रीणां हृदि विज्ञः प्रवर्त्तते ।
सत्यं वल्लभतां याति सुमध्यानां च योषिताम् ॥ ६२ ॥
विज्ञः साध्यां यत्नसाध्यां वचसा चैव साधयेत् ।
साधनं कठिनं स्त्रीणां दुर्निरूप्या भवन्ति ताः ॥ ६३ ॥
प्रकाशीं बाहुमूलस्य कक्षोदरकुचस्य च ।
बाला(१)लिङ्गनमोक्षं च कबरीमोचनं तथा ॥ ६४ ॥
स्वीयाङ्गावयवस्यैव निरन्तरविलोकनम् ।
अश्रुपातोऽङ्गुलीमर्दश्लेष्मोत्सर्गं मुहुर्मुहुः ॥ ६५ ॥
कान्तस्य रूपसौभाग्यसंक्रीडागुणसम्पदाम् ।
सङ्कीर्त्तनं महोल्लासः स्वाङ्गभद्रावमर्दनम् ॥ ६६ ॥
श्रुतिवर्त्माङ्गुलिक्षेपः सस्मिते वदनेक्षणे ।
(२)एतान्यफलसाध्यानि लिङ्गानि च समुन्नयेत् ॥ ६७ ॥
व्रीडयालङ्कृता कान्ता ऊष्मार्त्ता लोभवर्जिता ।
साध्या लिङ्गर्थवीर्यस्ता(३) असाध्या सा प्रकीर्तिता ॥६८॥
यत्नसाध्या साधुवक्त्री धनहीना प्रवासिनी ।
साध्येङ्गितविपर्यस्ता यत्नसाध्या कुटुम्बिनी ॥ ६९ ॥

इति साध्यादिलक्षणम् ।

---

(१) पादालिङ्गनेति पाठान्तरम् ।
(२) न्ययत्नसाध्यानीति पाठान्तरम् ।
(३) लिङ्गविपर्यस्तेति पाठान्तरम् ।

## अथ प्रासङ्गिकं स्त्रीरक्षाप्रकरणम् ।

उद्यानोत्सवतीर्थेषु अध्वशाटीवनेषु च ।
अनिष्टयुवतीसङ्गे क्षेत्रे पितृगृहे तथा ॥ ७० ॥
देवागारे कुटौ चैव तथा वाप्यादिसेवने ।
नटने गोगृहे चैव तथा वन्धुगृहोत्सवे ।
रक्षितव्या सदा नार्यः सद्भिरात्मप्रयत्नतः ॥ ७१ ॥

तद्यथा—

सत्यप्रदानैर्मधुरैर्वचोभिः संरक्षितव्या तरुणी सदैव ।
अरक्षिता चापि कुलस्य नाशं कुर्याद्धि वै वाह्यजनानुरागात् ॥७२॥

इति स्त्रीरक्षा ।

## अथ प्रासङ्गिकं नायकलक्षणप्रकरणम् ।

अग्राम्यमण्डनः प्राज्ञः शुचिः श्रीमांश्च गायनः ।
नर्मगोष्ठीप्रविष्टश्च षड्गुणो नागरो मतः ॥ ७३ ॥
त्यागी विवेकी कुशलः कुलीनः कलाभिविज्ञः सुमतिर्धनाढ्यः।
भवक्षमः सर्वसहः सुखी च श्रीमान्सुशीलस्स हि नायकः स्यात् ७४

## अथ दूतीलक्षणप्रकरणम् (११)

रजकी मालिनी धात्री योगिनी प्रतिवेशिनी ।
सखी गोपालिका चेटी नापिता विधवा नटी ॥ ७५ ॥
सैरन्ध्री कन्यका चैव दैवज्ञा दूतिका मता ।
विचित्राभरणा(१) दक्षा परिज्ञातपरेङ्गिता ॥ ७६ ॥
प्रवीणा स्थिरभावा च प्रगल्भा दूतिका मता ।
दूती नियुज्यते कार्ये वहुभाषाविभूषिता ॥ ७७ ॥

इति दूतीलक्षणम् ।

---

( १ ) प्रागल्भ्यसहितेति पाठान्तरम् ।

## अथाष्टनायिकालक्षणप्रकरणम्(१२)।

रोषानुरूपकोपा या अनुनीता च तुष्यति ।
लक्ष्यते सा भृशं नाथगुणहार्यमनोज्ञया ॥ ७८ ॥
अहरहरनुरागा दूतिकां प्रेष्य पूर्वं
सरभसमुपयाति क्वापि सङ्केतदेशे ।
न मिलति खलु यस्या वल्लभो दैवयोगा-
न्निगदति भरतस्तां नायिकां विप्रलब्धाम् ॥ ७९ ॥
यस्या रतिगुणाकृष्टः पतिः पार्श्वं न मुञ्चति ।
विचित्रविभ्रमासक्ता सा स्यात्स्वाधीनभर्तृका ॥ ८० ॥
या नित्यं प्रियविच्छेदे कान्तसौन्दर्यचेष्टिते ।
ध्यायेदेकमना भूत्वा स्यात्सा विरहिणी मता ॥ ८१ ॥
उद्दाममन्मथशरज्वरवेपमाना
रोमाञ्चकर्णकुसुमं कुशलं वहन्ती ।
निःशङ्किनी व्रजति या प्रियसङ्गमाय
सा नायिका खलु भवेदभिसारिकेति ॥ ८२ ॥
या निर्लज्जा कृता गाढं मदेन मदनेन च ।
अभियाति प्रियं साभिसारिका कथिता बुधैः ॥ ८३ ॥
अज्ञानान्न गतो यस्याः सङ्केतमुचितप्रियः ।
तदनागमसन्तप्ता खण्डिता सा प्रकीर्तिता ॥ ८४ ॥
निरस्तो मन्युना कान्तः समर्थो हि यया पुनः ।
अवस्थिता विना तेन कुपिता कथिता बुधैः ॥ ८५ ॥
भवेद्वासकसज्जा सा दूतीद्वारेण निर्जने ।
निश्चित्यागमनं भर्तुर्द्वारेक्षणपरायणा ॥ ८६ ॥
दुर्वारदारुणमनोभवयोगमाप्य पर्याकुलाकलितमानसमुद्वहन्तीम् ।
दुर्वारमन्मथशरज्वरवेपमानामुत्कण्ठितां वदति तां भरतः कवीन्द्रः ८७

प्रियैकवर्तिनी चोष्णा धावत्युन्मादिनी तथा ।
तत्रैवावस्थिते कान्ते विरहोत्कण्ठिता मता ॥ ८८ ॥

इत्यष्टनायिका ।

असाध्यायाः सुखं सिद्धिः साध्यायाश्चानुरञ्जनम् ।
स्वेच्छया वर्द्धते सम्यक्कामशास्त्रप्रयोजनम् ॥ ८९ ॥

## अथ मन्त्रौषध्यादिप्रकरणम्(१३) ।

अथ शुद्धं तथाऽशुद्धं समासादिततत्क्रियः ।
मन्त्रो गुरुमुखाल्लब्धः सिद्ध्यत्यत्र न संशयः ॥ ९० ॥
त्रिचामुण्डे इति पदं ततः कनु कनु स्मृतम् ।
ततः पदं छनुछनु स्वकीयं वशमानयेत् ॥ ९१ ॥
साध्यानाम द्वितीयान्तं दत्वा स्वाहेति योजयेत्(१) ।
सामान्येनामुकीनामजपं कृत्वा वशं नयेत् ॥ ९२ ॥
ॐह्रींस्वाहेति मन्त्रेण साध्यानामान्वितेन च ।
सप्ताभिमन्त्रितं पुष्पं यैव गृह्णाति सा वशा(२) ॥ ९३ ॥

इति मन्त्रकथनम् ।

काकजिह्वालिपक्षौ च सुवर्णमलमश्रु च ।
रक्तं रतेश्च लेपेन वशीकुर्युर्मनीषिणः ॥ ९४ ॥
सम्भोगजं वचाबीजञ्जिह्वाचार्कदलं(३)सितम् ।
सञ्चूर्ण्याञ्जितनेत्राणां भार्यापि वशतां नयेत् ॥ ९५ ॥
हरितालं मनश्शिला रक्तचन्दनं एतत्सर्वं चूर्णीकृत्य स्त्री-

---

(१) एष दृष्टफलो मन्त्रो विचारेणात्र योजयेत् । इत्यधिकम् ।
(२) सुसाधितमिदम्मन्त्रमवश्यफलदायकम् ।
तस्मात्सर्वप्रयत्नेन साधयेन्मन्त्रमुत्तमम् ॥ इति अधिकम् ।
(३) लिप्त्वा चार्कदलमिति पाठान्तरम् ।

पुष्पेण सह यस्याः शिरसि दीयते सा पशुवद्वश्या भवति ।

पेचकस्य हृदयं कुङ्कुमेन सह सम्पिष्य तिलकं कुर्यात्तेन लोको वश्यो भवति ।

इति वशीकरणम् ।

अश्वगन्धा वचा कुष्ठं बला नागबला तथा ।
माहिषं नवनीतं च गजपिप्पलिसंयुतम् ॥ ९६ ॥
पिष्ठैः तेषां विलेपेन गाढीकरणमुत्तमम् ।
सम्पिष्टं छागमूत्रेण शूकशिम्बीसमुद्भवम् ॥ ९७ ॥
नूनं तस्य प्रलेपेन लिङ्गं लौहोपमं भवेत् ।
नीलोत्पलसिताम्भोजकेशरं मधु शर्करा ॥ ९८ ॥
अमीषां नाभिलेपेन रमते कामुकश्चिरम् ।
क्षीरेण कमलं पिष्ट्वा सलिलं गुटिकाकृतम् ॥ ९९ ॥
उपस्थे निहितं कुर्यात्प्रकीर्णमपि च क्वचित्(१) ।
अस्थि कृष्णबिडालस्य दक्षिणपार्श्वसम्भवम् ॥ २०० ॥
बद्धं कटितटे बीजं विबन्धं कुरुते ध्रुवम् ।
सप्तपर्णस्य बीजं हि स्तम्भयेच्छुक्रमात्मगम्(२) ॥ १ ॥
सितशरपुंखामूलं पारदसहितं करे धृत्वा ।
करञ्जबीजं मध्यस्थं समूलं बन्धयेद्बीजम् ॥ २ ॥
केतकीभूमिलताशनमूलीबन्धविपक्वं कुसुम्भतैलम् ।
पादतले लेपनादवश्यं बीजस्तम्भं नयति पुंसाम् ॥ ३ ॥
माहिषदधिसहदेवीतिलमधुसितपद्मकेशरं मिलितम् ।
चूर्णं नाभिविलेपाद्वीर्यस्तम्भं करोत्यवश्यम् ॥ ४ ॥
बृहत्करञ्जबीजस्थं पारदं पद्मवेष्टितम् ।

---

(१) सङ्कुचेत् इति पाठान्तरम् ॥
(२) माशुगमिति पाठान्तरम् ॥

मुखे क्षिप्तमिदं वीजं स्तम्भयत्येव निश्चितम् ॥ ५ ॥
कुर्य्यादादौ परिच्छेदं मर्दनं च विशेषतः ।
सप्ताहं भावयेन्माषं निस्तुषं विदलं ततः ॥ ६ ॥
नालिकेरोदकेनाथ पुनस्तेषां च भावना ।
तत्पश्चाद्घनभ्रष्टं च भक्षयेत्क्षीरसाधितम् ॥
वधूशतसहस्राणि कामी कामयते ततः ॥ ७ ॥

इति वलिष्ठीकारणम् ।

यस्तूपानहमाकुञ्च्य समानेन नियोजयेत् ।
पादाङ्गुष्ठेन भूपा तां पीडयेत्तु समाहितः ॥ ८ ॥
भक्षयेदथवा दग्धैश्चम्पकीकदलीयुतम् ।
अत्यग्रभागसंयुक्तः पुना ऋद्धिं प्रयच्छति ॥ ९ ॥
कल्लोलिनीकाननकन्दरादौ दुःखाश्रये चार्पितचित्तवृत्तिः ।
समृद्धभावद्धमभिन्नधैर्यः श्लथोऽपि दीर्घं रमते रतेषु ॥१०॥

इति स्तम्भनम् ।

पारदं टङ्कनं व्योषा(१) काकमाची तथा मधु ।
क्षिप्तलिङ्गश्चिरं नारीं द्रावयेद्रमणः सदा ॥ ११ ॥

इति द्रावणम् ।

तुम्बीपत्रं (२)च लोध्रं च समभागेन लेपयेत् ।
भगलेपप्रदत्तेऽस्मिन्प्रसूताप्यक्षता भवेत् ॥ १२ ॥
पलाशोदुम्बरं चापि तैलं कुसुमसम्भवम् ।
मधुना योनिसंलेपाद्दाढीकरणमुत्तमम् ॥ १३ ॥
स्वीयेष्टदेवतामन्त्रो जप्तः स्वार्थप्रहिंसकः ।

---

(१) व्योषा इति पाठान्तरम् ॥
(२) वीजपत्रमिति पाठान्तरम् ॥

यथाविभूतिदानं हि ब्रह्मचर्यं च तिष्ठति ॥ १४ ॥
कृत्वाऽऽदौ तत्र शुद्धिं तु पुनः क्षेत्रे शुभेक्षणे ।
सूर्योदयप्रदोषाभ्यां विशेषाच्च स्वयं बली ॥ १५ ॥
कृत्वा चैकमना विज्ञो यदि बीजं विमुञ्चति ।
सूते मासोदये नूनं(१) गुणवन्तं यशस्विनम् ॥ २१६ ॥

इति सुतोदयः ।

इति श्रीमीननाथविरचिता स्मरदीपिका (२)मञ्जरीसमाप्ता ।

(१) सुतमासादयेन्नूनमिति पाठान्तरम् ॥

## अथ कादम्बरस्वीकरणसूत्र (३) मञ्जरी।

अनन्यजसप्ततन्तौ(१) अनुतर्षस्वीकरणस्यात्यावश्यकत्वात् ॥ १ ॥

इदानीमात्मभुवा क्रियमाणे सप्ततन्तौ तत्साधनत्वेनाऽनिर्वचनीयसुखोद्बोधहेतुत्वेन वारुणीप्राशनमनुदर्शयति अनन्यजसप्ततन्ताविति। अनुतृष्यन्ति अनिर्वचनीयानन्दं प्राप्नुवन्ति अनेनेत्यनुतर्षं कादम्बरं तस्य स्वीकरणमनुप्राशनं तस्य प्राशनस्याऽत्यावश्यकत्वमतीव ईप्सिततमत्वमनिर्वचनीयानन्दप्रदातृत्वेन रेतःस्तम्भकत्वेन हेतुना कर्मानुष्ठानात्पूर्वं प्रचेतसः कन्यायाः स्वीकरणं कर्त्तव्यमित्यर्थः। 'मकरध्वज आत्मभूः' इत्यमरः। 'सप्ततन्तुर्मखः क्रतुरि'त्यमरः ॥ १ ॥

ननु अनुतर्षस्वीकरणमदृष्टफलोद्बोधे उपकारकमाहोस्वित् दृष्टफलोद्बोधे उपकारकं वेति संशयवाक्यमुपन्यस्य, दृष्टफलोद्बोधे एव साक्षादुपकारकं न किञ्चित् स्वर्गादिफलवत् आनुश्रविकवाक्यं कल्प्यमुपकारकमिति मनसि निश्चित्य पूर्वसूत्रस्य हेतुत्वेन द्वितीयं सूत्रमनुशास्ति—

रत्यानन्दस्योद्बोधे अनिर्वचनीयानन्दस्य कारणभूतत्वात्॥ २ ॥

रत्यानन्दस्येति। अनुतर्षस्वीकरणे कृते सतीति ज्ञेयम्। अनेन वाक्येन अनयोः कार्यकारणसङ्गतिः उपपादिता भवति, तथाचायमर्थः—अनुतर्षस्वीकरणे कृते सति निधुवनव्यापारे

(१) कामयज्ञे ॥

रत्यानन्दोऽनिर्वचनीय उत्पद्यते नेतरथा, सामुद्रिकणामिश्रितस्य सूपशाकादिद्रव्यस्येव नीरसः स्वादुः प्रादुर्भूयते इत्यर्थः ॥ २ ॥

अन्यदप्यनिर्वचनीयमुपकारान्तरं तृतीयसूत्रेण अनुशास्ति=सम्प्रदर्शयति—

**उदञ्चयभ्युत्थाने प्रचेतसः कन्यायाः स्वीकरणस्य परमकारणत्वम् ॥ ३ ॥**

उदञ्चयभ्युत्थाने इति । पाशिनः आत्मजायया सह अतिप्रीत्युपचयेन तादात्म्यभावं गमिते सति निमित्तकारणस्याऽत्युपकारकतया तद्द्वारा स्वकीयानन्दस्याऽनिर्वचनीयाल्हादे प्रयोजकीभूतं भवतीत्यर्थः । अनेन वाक्येनाऽत्यावश्यकतया तादृक्व्यापारस्य पुरस्तात् तादृङ्निर्वेशनं सम्पाद्य तत्पुरस्तात्सप्ततन्तोः कर्माधिकारे ऽधिकारिता, इतरथा निमित्तकारणे उत्साहशक्तिभ्रंशात् साकल्येन नर्मव्यापारध्वंसो भवतीत्यर्थः ॥३॥

एतस्य सूत्रस्य राद्धान्तसूत्रं दर्शयति—

**प्रयोज्यप्राधान्यकर्तृत्वाभावे रतितन्त्रं विधातुमशक्यत्वात् ॥ ४ ॥**

प्रयोज्यप्राधान्ये इति । प्रयोज्यस्योदञ्जेः प्राधान्यकर्तृत्वमभ्युत्थाने सति सम्पद्यते, तदभावे अभ्युत्थानाभावे 'निमित्तापाये नैमित्तिकस्याप्यपाय' इति न्यायेन रतितन्त्रं लुप्यते, कुतः ? निमित्तकारणस्याभावात्, यथा तुरीवेमादिसत्त्वे पटकार्यस्योत्पत्तिर्नेतरथा तथा अभ्युत्थानसत्त्वे तन्त्रविधानस्योत्पत्तिः । अनेन वाक्येनाऽत्यावश्यकत्वेनाऽनुतर्षस्वीकरणं सम्पाद्य तत्पुरस्तात् निधुवनव्यापारे प्रवृत्तिर्विधेया इति भावः ॥ ४ ॥

इदानीं सूत्रचतुष्टयस्य साकल्येन कृत्स्नं तात्पर्यार्थं सङ्गृह्य अव्यभिचरितं सर्वसूत्राणां राद्धान्तवाक्यं सम्प्रदर्शयति—

**प्रयोज्ये नर्मव्यापारविस्तारे अभ्युत्थानविशिष्टोदञ्चयभावे सर्वाङ्गीणव्यापारोपलक्षितं रतितन्त्रं कर्तुं अधिकाराभावात् ॥ ५ ॥**

प्रयोज्ये नर्मव्यापारविस्तारे इति । पूर्वस्मिन्सूत्रे वाह्यतन्त्रे यत्किञ्चिदवच्छेदेनाधिकारिकत्वं निरूपितमस्मिन्सूत्रे तु प्रयोजकस्य साकल्येन नर्मप्रवृत्तिनिमित्तस्याभावे जायमाने सति प्रयोज्यव्यापारेऽपि अत्यन्ताभावस्य विधानं निर्व्यवसायेनैव प्राप्तं भवति, किञ्चिद्विशेषविधानं यत्र नोपलभ्यत इति भावः । तस्मादनुतर्षस्वीकरणादनन्तरमेव नर्मकर्माधिकारे आधिकारिकत्वमिति पञ्चसूत्राणामेक एव तात्पर्यार्थः । माघकिरातरघुवंशेषु सिद्धान्तितस्य वाक्यस्यैवायमनुवादः न त्वपूर्वविधानं स्वमनीषया उपकल्प्य प्रोक्तमिति शङ्कनीयम् ॥ ५ ॥

किञ्च द्वितीयावस्थामतिक्रान्तस्य दिष्ट्याऽऽत्मजायया सह असंस्तुतप्रेमप्रादुष्करणे संयुक्तस्य जनस्य सप्रकारकरसोत्पत्त्यनुभवे तादृङ्मनीषाया अभावात् सीधुसङ्ग्रहणं परमकारणत्वेन नाभिमतम् तदितरावस्थायां तु अन्धसः शमलस्य(१) अनिर्वचनीयानन्दप्रकाशने स्वीकरणत्वेन सङ्ग्रहणमत्यावश्यकत्वेनाभिमतमेव, ईदृक्संविदा याथार्थ्यज्ञानं परिकल्प्य तादृक्कर्माधिकारे अनुतर्षस्वीकरणमत्यावश्यकतमामिति नर्मव्यापारकर्तॄणामाप्तवाक्यवत् यथार्थोपदेशमनुशास्ति—

**रतितन्त्रविलासे अनिर्वचनीयरसोत्पत्तौ सीधुसङ्ग्रहणस्य परमकारणत्वम् ॥ ६ ॥**

रतितन्त्रविलासे इति । रतितन्त्रविलासे नर्मव्यापार-

(१) अन्नमलरूपरेतस इत्यर्थः ।

दिलासे अनिर्वचनीयरसोत्पत्तौ षड्विधरसादतिरिक्तो यो रसः अमृतान्धसामुपभोगयोग्य इति यावत् , कादम्बररसस्य अनुमाशनस्य परमकारणत्वम् , तादृग्रसे सम्पीते सति निधुवनव्यापारविस्तारे रसभावनाविशेषचतुराणामनिर्वचनीयसुखोद्बोधं जनयतीत्यर्थः ॥ ६ ॥

किञ्चान्यदप्यनिर्वचनीयं रसविशेषान्तरं सीधुप्राशनेनानुदर्शयति—

**ललितविभ्रमबन्धविलासे पुष्कराधिपतेरात्मजायाः नैसर्गिकस्वभावः ॥ ७ ॥**

ललितविभ्रमबन्धेति । 'पुष्करं सर्वतोमुखमि'त्यमरः । पुष्कराधिपतेः आत्मजायाः ललितविभ्रमबन्धप्रादुष्करणे नैसर्गिकः स्वभाव इति सूत्रार्थः । अत्र पुष्कराधिपतिशब्देन प्रतीच्याः काष्ठायाः अधिपतिर्लक्ष्यते, तस्य आत्माजायाः वारुण्या अनुप्राशने क्रियमाणे ललितविभ्रमबन्धानां प्रकटीकरणे प्रयोजिका भवति नेतरथा, कृत्स्नवाङ्मयस्याधिदैविकरूपत्वात् निर्व्यवसायेनैव अन्तःकरणस्याह्लादकाः रुचिकरप्रबन्धाः अतलप्रदेशात् कमलनिःसरणमिव प्राशनकर्तुर्मुखपद्मनीडात् प्रादुर्भूयन्त इत्यर्थः । इदमेव रसविशेषान्तरं सन्निपत्योपकारकन्यायेन परमापूर्वसाधने प्रयोजकीभूतं कारणं निर्बन्धवर्णानां श्रवणमात्रेण तद्द्वारा मनसिजोद्बोधे अनिर्वचनीयसाधनत्वेन परमकारणत्वम् , अयमेव तस्याः नैसर्गिकस्वभाव इति ॥ ७ ॥

अन्यदप्युपकारान्तरमुत्तरसूत्रेण सम्प्रदर्शयति—

**उपश्यामया सह मधुवारो उदञ्जिधाब्दयैं प्रयोजकः ॥ ८ ॥**

उपश्यामयेति । श्यामावस्थाया उप समीपे वर्तते सा उपश्यामा तया चतुर्दशपञ्चदशहायनात्मिकया योषया सह

मधुवारो मधुपानावृत्तिः उदक्षिधार्ष्ट्ये अत्यन्तदृढतरत्वे प्रयोजको भवति, अनेन वाक्येन परिसंख्याविधेः स्वरूपं प्रकाशितं भवति। तथाचायमर्थः—अतिक्रान्तावस्थया सह मधुवारे जायमाने उदक्षिधार्ष्ट्यं नैवोत्पद्यते तया सह तादृग्व्यवसायः ? (स्य) वैयर्थ्यतां प्रतिपद्यते न्युब्जघटोपरि जलपूरणन्यायेन, तस्मात् रतितन्त्रविलासे उदक्षिधार्ष्ट्ये मनीषावता पुरुषेण गलितयौवनया सह मधुवारो नैव कर्तव्य इत्यर्थः। निरर्थकप्रयासे कस्यापि मतिर्नैवोत्पद्यत इति न्यायात् ॥ ८ ॥

धन्वन्तर्यादीनां मतमनुसृत्य कापिशायनस्वीकरणेऽनिर्वचनीयाह्लादद्योतकमुपकारान्तरमनुदर्शयति—

**श्यामया सह निर्वेशनं यामद्वयसोपलक्षितदिष्टावधिरेतःस्तम्भने परमकारणम् ॥ ९ ॥**

श्यामया सहेति। 'षोडशवार्षिकी श्यामे'ति वात्स्यायनसूत्रे प्रसिद्धिः, तादृगवस्थया योषया सह निवेशनं पानं 'पतिषु निर्विविशुर्मदमङ्गना' इत्यत्र निर्वेशनशब्दे पानं लक्ष्यते, यामप्रमाणं यामद्वयसं 'प्रमाणे द्वयसज्' इति ( पा० ५।२।३७ ) सूत्रेण प्रमाणार्थे द्वयसच्प्रत्ययः, तादृक्प्रमाणोपलक्षिते दिष्टे काले 'कालो दिष्टोऽप्यनेहापी'ति कोशस्मरणात्, तावत्कालमभिव्याप्येति यावत् , रेतःस्तम्भने परमकारणमिति, तया सह कापिशायनस्य स्वीकरणे क्रियमाणे एकयामपर्यन्तं वराङ्गोपरि व्रीहिकण्डनवत् आघातं करोतीत्यर्थः ॥ ९ ॥

इदानीं नर्मव्यापारविस्तारेऽपरिचितनर्मसुखानन्दाय निधुवनात्पूर्वं कापिशायनप्राशनं नर्मखेदापनुत्तयेऽस्यावश्यकत्वेनानुदर्शयति—

**निस्तनूरुहवराङ्गसम्भेदे योषाया अनुप्राशनस्यास्यावश्यकत्वात् ॥ १० ॥**

निस्तनूरुहवराङ्ग इति ॥ निर्गतं तनूरुहं यस्मात् तत् निस्तनूरुहं तनूरुहाणां प्रादुर्भावेण रहितं तच्च तत् वराङ्गं च तस्य सम्भेदनं स्वकीयेनोदञ्जिना मुखविदारणं तादृक्कर्मणि क्रियमाणे अज्ञातनर्मव्यापारायै रैयप्राशनं कारयितव्यम्, कृते ऐरेयप्राशने मनसिजसद्मविदीर्णव्यथा सम्भेदकाले नानुभूयते, इतरथा सद्मविदीर्णजन्यव्यथया सद्मनि स्थितानां नाडीनां विपर्यासेन(१) व्यानवायौ सङ्कटव्यथा अतितरामनुभूयते, तद्व्यथानिवारणार्थं निधुवनात्पूर्वं द्विपलप्रमाणं कापिशायनं पाययितव्यमित्यर्थः ॥ १० ॥

तया योषया कापिशायने पीते सति उत्तरसूत्रेण पानजन्यं यत्सुखं तद्दर्शयति—

क्रियमाणेऽनुप्राशने निर्भेदव्यथा नानुभूयते ॥ ११ ॥

क्रियमाणेऽनुप्राशन इति । प्रियसखीद्वारा क्रियमाणेऽनुप्राशने सतीति ज्ञेयम्, मदाविर्भावेण अनुसन्धानाभावात् निर्भेदजन्या व्यथा नानुभूयते इत्यर्थः ॥११॥

उत्तरस्मिन् घस्ने उपकारकान्तरमनुदर्शयति—

उत्तरस्मिन्घस्ने असम्भेदितमिव वराङ्गं परिदृश्यते १२

उत्तरस्मिन्घस्ने इति ॥ वराङ्गविदीर्णादनन्तरमुत्तरस्मिन्घस्ने दिने असम्भेदितमिव अविदीर्णमिव परिदृश्यते वराङ्गमिदमेव उपकारकान्तरम् ॥ १२ ॥

योषाया अनुप्राशनेन तद्द्वारा उत्तररूपे फलवैशिष्ट्यं सम्प्रदर्शयति—

क्रियमाणे नर्मव्यापारे उदञ्जेर्धाष्ट्र्यस्य फलेग्रहिः परिदृश्यते ॥ १३ ॥

---

(१) 'व्यानस्सर्वशरीरग' इति कोशाभिधानात् ।

क्रियमाणे नर्मव्यापार इति । उत्तररूपेण क्रियमाणे नर्मव्यापारे निधुवनव्यापारे उदञ्जेर्धाष्ट्यस्य यष्टिकाण्डमिव अतिकठिनतां सम्प्राप्तस्य मेढ्रस्य फलेग्रहिरवन्ध्यसामर्थ्यं परिदृश्यते । एतदुक्तं भवति—कापिशायनस्य अनुमाशनमात्रेणाऽतिसङ्कुचितत्वं प्राप्तस्य योषायाः वराङ्गस्य अतिदृढतमस्याप्युदञ्जेः वराङ्गमुखविदीर्णने सामर्थ्याभावात् पराभवं प्राप्त एवेत्यर्थः । सम्भेदितेऽपि वराङ्गे कापिशायनप्राशनेन अतिसङ्कोचं प्राप्तस्य योषायाः वराङ्गस्य विवरकरणे उदञ्जौ महती व्यथा प्रादुर्भूयते इति भावः । अनेन वाक्येन द्वितीयावृत्तावपि पुनः योनिविदीर्णसुखं पुरुषोऽनुभूयते इति तात्पर्यार्थः ॥ १३ ॥

श्यामया सह निर्वेशने रतिसुखोद्बोधनं वीर्यस्तम्भनकालावधिं च प्रोक्तं उपश्यामया सह क्रीडने समुपस्थितौ तत्रापि ऐरेयस्वीकरणस्य अत्यावश्यकत्वेनानुविधानं विदधाति—

**उपश्यामया सह व्यानताद्विबन्धे समुपस्थितौ पाशिन आत्मजायाः स्वीकरणे अनिर्वचनीयसुखानुभवे हेतुः कारणत्वम् ॥ १४ ॥**

**उपश्यामया सहेति ॥ १४ ॥**

अप्राप्तयौवनाभिः सह बाह्यतन्त्रे मनीषायाः समुपस्थितौ अणुमात्रं तस्यै प्राशयितव्यं तावन्मात्रेणैव उभयोः आनन्दसुखानुलब्धेः, चुम्बनादिव्यापारे अनुविधीयमाने अल्पस्वीकारमात्रेण आनन्दानुभवदर्शनात् न तत्र आधिक्येन पाशिनः आत्मजायाः स्वीकरणमिति हेतुवादं मनसि निधाय औत्तरीयं सूत्रमनुशास्ति—

**अप्राप्तयौवनाभिः सह सम्प्रयोगे अणुमात्रप्राशनेन चरितार्थत्वात् ॥ १५ ॥**

**अप्राप्तयौवनाभिः सहेति ॥ १५ ॥**

इदानीमुत्कटयौवनावस्थायामैरेयप्राशनं रतितन्त्रविलासे उपदिश्यते नेतरावस्थायामुपयोगाभावादनाधिकारित्वादित्यालोच्य द्वितीयावस्थायामत्यावश्यकत्वमिति पौरस्त्यसूत्रेणानुदर्शयति—

**तीयप्रत्ययस्य प्रकृतिभूतायामवस्थायां कश्यस्वीकरणस्यात्यावश्यकत्वं सति पूर्वरूपसंयोगे ॥ १६ ॥**

**तीयप्रत्ययस्य प्रकृतिभूतायामिति ।** तीयप्रत्ययस्य प्रकृतिभूतायामवस्थायां द्वितीयायामवस्थायां 'द्वेस्तीय '( पा० २। ४।५४ ) इत्यनेन द्विशब्दात् तीयप्रत्यये सति द्वितीयशब्दो निष्पद्यते, तस्यामवस्थायां (१)कश्यस्वीकरणस्यात्यावश्यकत्वम् सति पूर्वरूपसंयोगे तादृगवस्थावत्याः योषायाः सन्निधाने सतीति ज्ञेयम् । ननु दृष्टप्रयोजनमुद्दिश्य स्वीकरणं विधीयते वा अदृष्टफलमुद्दिश्य वा ? दृष्टप्रयोजनस्यैवाऽत्राकाङ्क्षितत्वान्नादृष्टप्रयोजनमुद्दिश्येति, दृष्टप्रयोजनं तु उदजिदाढ्य पूर्वरूपस्म दृष्टप्रयोजनं तु आस्योरोजाद्यवयवेषु (२)उस्राधिक्यस्यात्याधिक्यत्वेन सन्दर्शनम्, एतस्य फलत्रितयस्यानुभवार्थं द्वितीयावस्थावता पुरुषेण योषया सह अत्यावश्यकत्वेन सीधुग्रहणं रतिविलासकाले सर्वथैव कर्त्तव्यमित्यर्थः ॥ १६ ॥

संप्रसारणविशिष्टतीयप्रत्ययस्य प्रकृतिभूतायामवस्थायां तु नात्यावश्यकमित्याह—

**तदितरावस्थायां तु नाधिकारकत्वम् ॥ १७ ॥**

**तदितरावस्थायामिति॥** दिष्टकन्यया व्याप्तायामवस्था-

---

(१) मद्यस्वीकरणस्येत्यर्थः ।
(२) किरणोस्रमयूखांशुरित्यमरः ।

यामुरोजन्धयायामवस्थायां च तस्य प्राशने नाधिकारिकत्व-मिति ॥ १७ ॥

उभयत्र हेतुत्वेन सूत्रद्वयं संप्रदर्शयति—

एकत्र परिज्ञानाभावात् ॥ १८ ॥

एकत्र परिज्ञानाभावादिति। एकत्र पौगण्डवयसः पुरुष-कल्पस्य उत्तरस्मिन्काले उपश्यामया समीकृते अनेहसि अन्धसः रसस्य रेतसः परिपक्वतायाः अभावात् तादृक्कर्माधिकारे ना-धिकारिता ॥ १८ ॥

इतरत्र पाञ्चभौतिकावयवानां क्षीणतरत्वाच्च ॥ १९ ॥

इतरत्रेति । जीर्णावस्थायामपि तदानीं दिष्टकन्यया सह अतिनर्मव्यवसायेन सर्वासामिन्द्रियवृत्तीनां स्वकीयस्वप्रवृत्तौ क्षी-णतरत्वस्य दृश्यमानत्वान्नाधिकारकत्वम् । बालस्य तथा जरावतः पुरुषस्य उभयोः नर्मकर्माधिकारे नाधिकारितेति सूत्रद्वयस्य तात्पर्यार्थः ॥ १९ ॥

कारणरूपोपाधौ सत्यां कार्यरूपस्योपाधेः अनुदर्शनमिति न्यायेन पद्मायाः अनुग्रहेण परिपूरितानां सार्वभौमादीनामेव अनया पुष्पधनुषः सरण्या(१) अनुवर्त्तनं सार्वकालिकं नित्यक-र्माधिकारवत् युक्ततरं नान्येषामिति प्रकरणोपसंहारमनुदर्शयति—

हरिप्रियावतां जनानामेतच्छास्त्रेणानुवर्तनमत्या-वश्यकम् ॥ २० ॥

हरिप्रियावतां जनानामिति ॥ २० ॥

ननु एकत्र विधाने निषेधवाक्यं कुत्र विधीयते इत्युक्तं चेत् पूर्वोक्तजनप्रतियोगिकेषु प्रवर्त्तते इत्याशयेनाह—

तदितरेषामेतच्छास्त्रे प्रवृत्तिर्न विधीयते ॥ २१ ॥

---

(१) सरणिः पद्धतिः पद्यामित्यमरः ।

तद्दितरेषामिति । क्षीरोदजायाः विभवेन रहितानामि-त्यर्थः ॥ २१ ॥

ननु अत्यावश्यकत्वेन ईदृक्कर्मविधानं कुत्राभिव्याप्तमिति चेत् तत्स्थानं सम्प्रदर्शयति—

पारिशेष्याज्जलधिसम्भवया युक्तेष्वेतच्छास्त्रस्य प्रवृत्तिः॥२२॥

पारिशेष्यादिति । परिशेषस्य भावः पारिशेष्यं तस्मात् निषेधव्याप्त्या रहितात् पारावार(१)तनूजया संयुक्तेष्वेव कापि-शायनस्वीकरणशास्त्रस्य प्रवृत्तिः अनिर्वचनीयानन्दबोधाय प्रवर्तत इत्यर्थः ॥ २२ ॥

मतान्तरमनुदिशति—

गोत्रापत्यघस्रे अनुतर्षस्वीकरणस्यात्यावश्यक-त्वमिति मार्कण्डेयादिः ॥ २३ ॥

गोत्रापत्यघस्रेष्विति॥ गोत्रायाः(२) अपत्यन्तस्य घस्र-न्दिनं तस्मिन्दिने अनुतर्षस्वीकरणमिति मृकण्डतनुजस्य मतम् २३

तदितरेषां मतमुत्तरसूत्रेणानुदर्शयति—

काव्यघस्रेष्वत्यावश्यकत्वमामिति सुरथवैश्यौ(३) ॥२४॥

काव्यघस्रेष्विति । 'शुक्रो दैत्यगुरुः काव्य' इति कोशा-भिधानात्, 'घस्रो दिनाहनी वात्वि'त्यमरः । सुरथादय इति आ-दिशब्देन वैश्यस्य सङ्ग्रहः ॥ २४ ॥

नियमविधेः तात्पर्यार्थं सम्प्रदर्शयति—

वाक्यद्वयस्य शक्त्युपासनावतां विनियोगात् ॥ २५ ॥

तद्दितरेषां यथाकालोपदेशः ॥ २६ ॥

---

( १ ) पारावारः सरित्पतिरित्यमरः ।

( २ ) गोत्राकुः पृथिवी पृथ्वीत्यमरेण पृथ्वीपुत्रमङ्गलदिन इत्यर्थः ।

( ३ ) टीकानुसारेणात्र सूत्रे सुरथादय इति पाठो बोध्यः ।

वाक्यद्वयस्येति । शक्त्युपासनावतामेवायं नियमः यत् घस्रद्वयेऽप्यनुवर्त्तनं तदितरेषां जनानां प्रलम्ब(१)प्रमतानुयायिनां तु यथाकालोपदेश इति न घस्रद्वये परिसंख्यानमित्यर्थः ॥२६॥२६

किञ्च—

**द्वितीयवर्णे सार्वकालिकमभ्युज्ञानम् ॥ २७ ॥**

द्वितीयवर्णे इति । क्षत्रजातौ द्वितीयवर्णे कापिशायनस्वीकरणविधानं सार्वकालिकं—तामसीप्रकृतेः उपासनाधिकारवतां निरन्तरं कादम्बरस्वीकरणं कर्त्तव्यत्वेनाभिमतम् । अपरोक्षानुभवेन तत्स्वरूपानुदर्शने उपादानकारणत्वात् आत्मभुवः तनोः उपासनाधिकारवत् न घस्रयोः अनुवर्त्तनम् ॥२७॥

औपदेशिकवर्णस्य नियमविधानं विदधाति—

**यागहेतुना प्रथमवर्णस्य यथावाचनिकाऽभ्यनुज्ञानम् ॥२८**

यागहेतुनेति । 'वाजपेये सुराग्रहान् गृह्णाति, सौत्रामण्यां सुराग्रहान् गृह्णाती'ति वाक्यद्वयेन प्रथमवर्णिकस्य यथावाचनिकमेव ग्रहणमाशनेषु आधिकारिको विधिः । तथा चायमर्थः—वाजपेये तु ग्रहणमात्रस्यैवाऽभ्यनुज्ञानं प्राशनाऽभ्यनुज्ञानं तु तृतीयवर्णस्यैव, तथाचानुश्राविकवाक्यं—'विमाथं कुर्वते वाजसृत' इति । सौत्रामण्यां तु यागकर्तुरेव प्राशनं निगमवाक्येनाभिधीयते नेतरेषामृत्विजाम् , तत्राध्याघ्राणेनैव प्राशनप्रतिपत्तिरिति मतान्तरमिति ऋष्यन्तराणां वचनमिति ॥ २८ ॥

सार्वकालिकाभ्यनुज्ञानं तु (२)रसाधिपतीनामेव नान्येषां जनानामिति प्रकरणार्थमुपसंहरति—

**खण्डमण्डलाधिपत्यादीनामिन्दिरावतां जनानामपि सीधुग्रहणस्य विलासः सार्वकालिकः ॥ २९ ॥**

(१) बलभद्रः प्रलम्बघ्न इत्यमरः

(२) रसा विश्वम्भरा स्थिरेत्यमरः ।

खण्डमण्डलाधिपत्यादीनामिति। अल्पविषयस्य शासनकर्तॄणां राज्ञां (१)लोकमातुरनुग्रहेण परिपूरितानां सीधुग्रहणेन विलासानुभवः विलासानामनुभवनं सार्वकालिकम्, न सुरथवैश्यादीनां मतमनुसृत्य प्रवर्त्तनमित्यर्थः ॥ २९ ॥

युवतीनां प्राशने नियमविधिं सम्प्रदर्शयति—

स्वकीयप्रियसाहचर्येण युवतीनामभ्यनुज्ञानम्॥३०॥

स्वकीयप्रियसाहचर्येणेति। निधुवनकाले एव स्वपतिभिः सार्धं कादम्बरस्वीकरणस्याभ्यनुज्ञानं नेतरावस्थायां, कुतः? उपयोगाभावात् निष्फलप्रयासे स्वीकरणस्य वैयर्थ्यापत्तेः ३०

नियमविधावपि किञ्चिद्विशेषान्तरमनुबध्नाति—

तत्राप्यनन्यजमखेष्वेव नेतरत्र विधानम् ॥ ३१ ॥

तत्रापि अनन्यजमखेष्वेवेति। अनन्यजेन क्रियमाणेषु मखेष्वेव अत्यावश्यकत्वेन अनुतर्षस्वीकरणविधानं नेतरत्र तदतिरिक्तकालेष्विति ॥ ३१ ॥

योषायाः, अत्र योषासङ्ग्रहेण उपश्यामादीनामेव सङ्ग्रहः न विभ्रंशितद्वितीयावस्थानाम्, आस्यपद्मेन प्राशनं तु अत्युत्कृष्टफलविशेषान्तरं निश्चित्य अत्यावश्यकत्वेन प्राशनमनुदर्शयति—

योषायाः आस्यपद्मेन प्राशनं भाषायाः प्रबोधे अव्यभिचरितकारणम् ॥ ३२ ॥

योषायाः आस्यपद्मेनेति। योषायाः आस्यपद्मेन प्राशने क्रियमाणे यथेच्छिकी भाषायाः अनुस्फुर्तिर्भवतीत्यर्थः। अनेन वाक्येन श्रवणादिव्यवसायरहितेऽपि जने निष्प्रयासेनैव त्रिदशानां गीः स्वमुखात् प्रादुर्भूयत इत्यर्थः ॥ ३२ ॥

अन्यदप्युत्कृष्टतरं फलविशेषान्तरं स्वीकारमात्रेण सम्प-

---

(१) इन्दिरा लोकमाता मेत्यमरः।

दर्शयति—

**श्यामाया आस्यसहस्रपत्रादनुप्राशनमपरोक्षानुभवेन मूलप्रकृतेः स्वरूपस्यानुदर्शनम् ॥ २३ ॥**

श्यामाया आस्यसहस्रपत्रादिति । ( श्यामायाः ) कमलप्रसूनात्(१) अनुप्राशनं प्रत्यक्षानुभवेन साक्षात् मूलप्रकृतेः स्वरूपानुदर्शने हेतुः कारणमिति तया सह सम्प्राशने क्रियमाणे कृत्स्नस्य प्रपञ्चस्य कारणभूतायाः मूलप्रकृतेः साकं सङ्गतो भवति । यद्वा तत्स्वरूपं साक्षादव्यवधानेन पश्यतीत्यर्थः । अनेन वाक्येन सायुज्यादिकं फलमपि निरायासेन प्राप्नोतीत्यर्थः ॥ २३ ॥

रतिकाले सीधुपानं कर्तव्यं विधिबोधितम् ।
तत्पुरस्तात् कामशास्त्रे प्रोक्तं क्रीडानुवर्णनम् ॥
तत्सर्वं तु प्रकर्तव्यं योषायाः सुखलब्धये ।
स्वस्यापि सुखबोधाय अपत्योत्पत्तिहेतवे ॥
फलद्वयं स प्राप्नोति प्रजां कामसुखं तथा ।
उर्वशीलोकमाप्नोति अन्तकाले तु सः पुमान् ॥

इतिश्रीमहाराजार्षिवर्येण पुरूरवसा विरचितं कामिजनानां विनोदाय रतिविलासाङ्गभूतं कादम्बरस्वीकरणसूत्रं सव्याख्यानं समाप्तिमगमत् ॥

इति कादम्बरस्वीकरणसूत्र(१)मञ्जरी ।

(१) प्रसूनं कुसुमं सुमामित्यमरः ।

## अथ कादम्बरस्वीकरणकारिका(४)मञ्जरी

मृद्वीकायाः समुद्भूतो यो रसोऽमृतसन्निभः ।
कादम्बर इति ख्यात उदङ्गेः(१) बोधकारकः ॥ १ ॥
कामतन्त्रकलायां तु अत्यन्तं हितकारकः ।
(२)मारस्योद्बोधने दक्ष अतिसामर्थ्यदायकः ॥ २ ॥
रतिकाले समुत्पन्ने योषया सहितः पुमान् ।
तत्पानं तु प्रकुर्वीत रसोद्बोधस्य हेतवे ॥ ३ ॥
रतितन्त्रस्य विस्तारः पश्चात्कार्यः प्रयत्नतः ।
आदौ योषां पाययित्वा अत्यन्तादरपूर्वकम् ।
तत्पीतशेषं तु रसं स्वयमादरपूर्वकम् ॥ ४ ॥
निगृह्णीयात्तत्समीपे अत्यन्तरुचिकारकम् ।
ताम्बूलादीन्भक्षयित्वा रसोद्बोधस्य हेतवे ॥ ५ ॥
रसोद्बोधे जायमाने आनन्दः सम्प्रवर्धते ।
आनन्दे संप्रवृद्धे तु बाह्यतन्त्रं समारभेत् ॥ ६ ॥
कुचयोर्धारणं पूर्वं ओष्ठपानं ततःपरम् ।
संश्लेषणं दृढतरं कुचाच्छादनपूर्वकम् ।
एतद्बाह्यरतं प्रोक्तं कलाज्ञैर्भरतादिभिः ॥ ७ ॥
ओष्ठपानं परित्यज्य सृक्किण्यौ(३) दंशयेत्पुनः ।
द्विजक्षतिर्यथा न स्यात्तथा दंशनमाचरेत् ॥ ८ ॥

---

(१) शिश्नोदङ्गिः शेफमेढ्रमिति हलायुधः ।
(२) मदनो मन्मथो मार इत्यमरः ।
(३) ओष्ठयोर्दक्षिणे पार्श्वे तयोरुत्तरतोऽपि च ।
सृक्किणीति तयोर्नूनं नामधेयं प्रचक्षते ॥
मूलाधारं गुदे विद्यात्स्वाधिष्ठानं तु लिङ्गके ॥
इति हलायुधः ।

पर्यायेण प्रकर्त्तव्यं तस्या आह्लादहेतवे ।
प्रादुर्भूते महानन्दे कुचग्रन्थिविमोक्षणम् ॥ ९ ॥
नीवीबन्धस्य मोक्षं च सत्वरं कारयेत्सुधीः ।
स्वहस्तमङ्गौ संस्थाप्य अवलोकनपूर्वकम्(१) ॥ १० ॥
स्वहस्तं भ्रामयेत्तत्र चक्रभ्रमणवत्स्वयम् ॥
योनेर्मुखं विदार्याऽथ अन्तःस्थानं विलोकयेत् ॥ ११ ॥
तद्व्यापारं परित्यज्य स्वक्षौमं मोचयेत्ततः ।
स्वशेफं तां दर्शयित्वा अत्यन्तादरपूर्वकम् ॥ १२ ॥
संपश्य मे प्रियतमे ! तवानन्दस्य कारकम् ।
इमं शेफं त्वदीयं वै न मदीयं सुनिश्चितम् ॥ १३ ॥
यद्यत्कार्यमनुब्रूषे तत्सर्वं तु करिष्यति ।
एतद्वाक्यमनूच्याथ मन्दं जङ्घे प्रसारयेत् ॥ १४ ॥
तत्स्थानात्किंचिदुत्थाय स्वजङ्घेऽपि प्रसारयेत् ।
लक्ष्यलक्षणयोः साम्यं कौशल्येन विधाय च ॥ १५ ॥
लक्षणं प्रेरयेल्लक्ष्ये नाराचस्य गतेरिव ।
तदिन्द्रियस्य द्वितयं दृढं संयोजयेत्ततः ॥ १६ ॥
क्षणद्वयमितं कालं तावन्मात्रं स्थिरो भवेत् ॥
चञ्चलो न भवेत्किञ्चिन्न च तां चालयेत्पुनः ॥ १७ ॥
योगे आरूढवत्तूष्णीमेकमुद्रां समारभेत् ॥
अवपूर्वहनोर्धातोर्व्यापारं प्रचक्षते ।
तद्व्यापारं ततः कुर्यात् मन्दंमन्दं सुनिश्चलम् ॥ १८ ॥
ततः किञ्चिद्दृढतरमाघातं कर्तुमारभेत् ।
किञ्चिद् दृढतराघाताद्दृढाघातं प्रकल्पयेत् ॥ १९ ॥
शिश्नं निष्कास्य तत्पश्चात्पृथग्रूपो भवेत्पुनः ॥

---

( १ ) अङ्गिशब्देन पूर्वरूपस्य स्वाधिष्ठानस्थानम् ।
स्वाधिष्ठाने तु यच्चक्रं तच्चक्रस्यावलोकनम् ।
सर्वथैव प्रकर्तव्यं मारस्योद्बोधहेतवे ॥

क्षणमात्रं स्थिरो भूत्वा दुग्धपानं तु कारयेत् ॥ २० ॥
सापि योषा तदोत्थाय वसनं परिधाय च ।
मूत्रादिकं ततः कृत्वा पुनः खट्वां समाश्रयेत् ॥ २१ ॥
द्राक्षादीनां भक्षणं च यथालाभं समाचरेत् ॥ २२ ॥
भर्त्रा यद्यद्दीयते वस्तुजातं तत्सर्वस्वं भक्षयेत् प्रीतिपूर्वम् ।
तस्मै या या रोचते नर्मचेष्टा तां तां क्रीडां दर्शयन्त्यो विजह्रुः२३
एवं तु प्रथमे यामे नर्मक्रीडां विधाय च ।
पुनः खट्वां समारोढुमुद्योगमुपचक्रमे ॥ २४ ॥
प्रथमक्रीडयाऽत्यन्तं श्रमेण परिपूरितः ॥
मन्दवायोरपेक्षावान् घर्मस्वेदापनुत्तये ॥ २५ ॥
हस्तेन व्यजनं धृत्वा भ्रामयामास सर्वतः ॥
क्षणमात्रं स्थिरो भूत्वा घर्मस्वेदं प्रमार्ज्य च ।
शीतलेनानिलेनैव सन्तुष्टोऽभूत् गतव्यथः ॥ २६ ॥
श्रीचन्दनस्यानुलेपं स्वशरीरे च कारयेत् ॥
योषायाः द्वौ कुचौ धृत्वा अतीवदृढवत्तमौ ।
कुचयोर्लेपनं चक्रे उष्णबाधानिवृत्तये ॥ २७ ॥
वराङ्गस्य प्रदेशेऽपि लेपनं कारयेत्सुधीः ।
लेपनेन तु सा योषा अतिसन्तोषिताऽभवत् ॥ २८ ॥
प्रियोपरि परां प्रीतिं प्रकुर्वाणा उवाच ह ।
हे प्रिय ! शृणु मे वाक्यं मद्वाक्यं शृणु सादरम् ॥ २९ ॥
तवोपरि प्रसन्नास्मि किञ्चिद्विज्ञापयाम्यहम् ।
श्रीचन्दनस्य लेपेन ममानन्दो महानभूत् ॥ ३० ॥
अतनुव्याधिनाऽत्यन्तं शरीरं दुःखितं मम ।
अत्युष्णता वराङ्गेऽस्मिन् सञ्जाता बहु वर्तते ॥ ३१ ॥
शीतलस्योपचारेण अत्यन्तं सुखमश्नुते ।
तद्बाधायाः विनाशार्थं पुनर्निधुवनं कुरु ॥ ३२ ॥

क्रियमाणे निधुवने शान्ततां प्रतिपत्स्यते ।
मत्समीपे समागच्छ कुचयोर्धारणं कुरु ॥ ३३ ॥
ओष्ठस्य दंशनं कार्यं मन्दं दृढतरं न तु ॥
निष्पीडनं दृढतरं कुचे कार्यं प्रयत्नतः ॥ ३४ ॥
कुचयोः स्मरपीडा तु अत्यन्तं सम्प्रवर्धते ॥
तत्पीडायाः प्रशान्त्यर्थं कुचे निष्पीडनं कुरु ॥ ३५ ॥
स्मरस्य मन्दिरं तस्मिन्कण्डूतिर्बहु दृश्यते ॥
तस्या विनाशनार्थाय यथेच्छं त्वं भजस्व माम् ॥ ३६ ॥
उपरिष्टात् समागच्छ अधस्तात्किं नु तिष्ठसे ।
परिष्वज यथेच्छं मां ममाह्लादस्य हेतवे ॥ ३७ ॥
आलिङ्गने ममात्यन्तमानन्दः सम्प्रवर्धते ।
झटिति त्वं समागच्छ मां परिष्वज हे प्रिय ! ॥ ३८ ॥
इति वाक्यं तदा श्रुत्वा तत्सर्वं कर्तुमुद्यतः ॥
कुचयोर्धारणं चक्रे यथा उक्तं तथा तथा ॥ ३९ ॥
आरुरोह ततः पश्चात्तल्पस्योपरि संस्थितः ॥
तस्या वामप्रकोष्ठे तु स्वशेफं सम्प्रसार्य च ॥ ४० ॥
तल्पतः किञ्चिदुत्थाप्य सुदृढं परिषस्वजे ॥
स्वकीयेन हृदा तस्याः कुचौ संयोज्य यत्नतः ॥ ४१ ॥
अधरोष्ठरसोद्दीर्णमनङ्गस्य विवृद्धये ॥
चकार स्मरसन्तप्तः तत्प्रियोऽतिविचक्षणः ॥ ४२ ॥
स्वाधिष्ठाने तु निर्लोमे दर्शनं कर्तुमुद्यतः
सुधारसस्य तत्स्थानं वर्णितं भरतादिभिः ॥ ४३ ॥
यथेच्छं तां सुधां पीत्वा आनन्दे मज्जितो बभूव ॥
द्वितीयमाहवं कर्तुं तस्या सन्तोषहेतवे ॥ ४४ ॥
तस्या आज्ञामनुप्राप्य नीवीबन्धं विसृज्य च ।
उत्तानभूतां तां कृत्वा जङ्घे उत्थाप्य यत्नतः ॥ ४५ ॥

तूर्णं स्वशिश्नं निष्कास्य योनिच्छिद्रे प्रवेशयेत् ।
कादम्बरप्राशनेन अतिसङ्कुचितं विलम् ॥ ४६ ॥
प्रवेशने ह्युदङ्गेस्तु न योग्यं दृढवत्तमम् ।
अत्यन्तव्यवसायेन प्रवेशं च चकार सः ॥ ४७ ॥
कृते प्रवेशने तस्य तस्यै पीडा बभूव ह ।
मुञ्च मुञ्च प्रियोत्तिष्ठ मेढ्रनिष्कासनं कुरु ॥ ४८ ॥
न शक्ये तां व्यथां सोढुमुदङ्गेः कठिनत्वतः ।
किञ्चिद्विश्रम्य तत्पश्चात् तत्प्रवेशं कुरु प्रिय ! ॥ ४९ ॥
सुगन्धिद्रव्यसंमिश्रं स्नेहलेपं कुरु प्रिय ! ।
लेपने क्रियमाणे तु व्यथा न स्यात् शृणु प्रिय ! ॥ ५० ॥
उदङ्गेः कठिनत्वाच्च यष्टिवत् प्रतिभासते ।
सन्देहं मा कुरुष्वेति सत्यमेव वदाम्यहम् ॥ ५१ ॥
एतद्वाक्यं प्रियायास्तु श्रुत्वा किञ्चिद्विहस्य च ।
अङ्गीकृत्याऽथ तद्वाक्यं शिश्नं पुनिरकासयत् ॥ ५२ ॥
उक्तं यथा तथा चक्रे तस्याः सन्तोषहेतवे ।
शेफे निष्कासिते तस्मान्निर्व्यथा सा बभूव ह ॥ ५३ ॥
वाह्यतन्त्रं कुरुष्वेति न बृहत्तन्त्रमाचर ।
कलामात्रं प्रतीक्षस्व पश्चात्कुरु यथोचितम् ॥ ५४ ॥
वाह्यतन्त्रे मम प्रीतिरधुना सम्प्रवर्त्तते ।
बृहत्तन्त्रे न मे प्रीतिर्वर्धते वाह्यतन्त्रवत् ॥ ५५ ॥
अग्निप्रदेशो महती व्यथा मां परिबाधते ।
नागवल्लीदलेनैव सेकं कुरु ममेप्सितम् ॥ ५६ ॥
तेन सेकेन महती व्यथा नाशं गमिष्यति ॥
व्यथानाशे पुनस्त्वं तु पूर्ववत्कर्तुमर्हसि(१) ॥ ५७ ॥
अधुना मा कुरुष्वेति यावत् पीडाव्यपोहनम् ॥

(१) मिच्छासि इति पाठान्तरम् ।

मत्समीपे समागच्छ मां परिष्वज हे प्रिय ! ॥ ५८ ॥
यथा मां सुखमेधेत तथा कार्यं प्रयत्नतः ।
तवोदङ्गेर्धारणे तु मन्मनीषा प्रवर्तते ॥ ५९ ॥
कियद्दीर्घं कियत्स्थूलं तत्पश्यामि सुनिश्चितम् ।
हस्ते धृत्वा स्नापयिष्यामि योनिः पीडां गमिष्यति ॥ ६० ॥
अन्यत्किञ्चिन्न याचेऽहमेतावान्मे मनोरथः ।
इति प्रियामुखाच्छ्रुत्वा तत्सर्वं कर्तुमुद्यतः ॥ ६१ ॥
हेप्रिये ! शृणु मे वाक्यन्तव सन्तोषदायकम् ।
तव यद्रोचते कर्तुं तत्कुरुष्व यथेप्सितम् ॥ ६२ ॥
जाग्रद्रूपस्तु मे शेफः अत्यन्तं दृढवत्तरः ।
यष्टिवत्काठिनो दक्षः योनौ गन्तुं समुत्सुकः ॥ ६३ ॥
त्वमेवैनं धारयस्व लज्जां मा कुरु सर्वथा ॥
स्वकीयवस्तुग्रहणे शङ्कया किं प्रयोजनम् ॥ ६४ ॥
निःशङ्कं त्वं गृहाणेमं स्वहस्ते धारय प्रिये ! ।
तत्रोपायं प्रवक्ष्यामि तथा कुरु सुमध्यमे ! ॥ ६५ ॥
मया परिहिते क्षौमे त्वं हस्तं सम्प्रसारय ।
जाग्रद्रूपस्त्वत्प्रियोऽसौ क्षुत्पिपासासमन्वितः ॥ ६६ ॥
तत्र तिष्ठत्यूर्ध्वमुखः तं गृहाण यथोचितम् ।
विचालयेथास्तस्य त्वमत्यन्तानन्दपूर्वकम् ॥ ६७ ॥
चालने क्रियमाणेऽपि पीडानाशो भविष्यति ॥
यथा प्रियेणोपदिष्टं सा तथैव चकार ह ॥ ६८ ॥
स्वहस्तेन भ्रामयन्ती पश्यन्ती तं पुनः पुनः ।
भ्रमणस्य सुखेनैव सुष्वाप शयने तदा ॥ ६९ ॥
गाढया निद्रया व्याप्तां स्वप्रियामवलोक्य सः ।
कामोद्बोधेन सन्तप्तः मैथुनायोद्यतो भवत् ॥ ७० ॥
आभ्यन्तरीयं वसनं झटित्युन्मुच्य यत्नतः ।

तस्या जङ्घे समुत्थाप्य योन्यां शिश्नं न्यवेशयत् ॥ ७१ ॥
प्रवेशे क्रियमाणेऽपि प्रवेशो नैव जायते ।
सूक्ष्मत्वाद्योनिछिद्रस्य मुखमात्रं न्यवेशयत् ॥ ७२ ॥
आधिक्येन प्रवेशे तु असमर्थाऽभवत्प्रिया ।
सुगन्धिस्नेहलेपेन कृत्स्नं तत्र न्यवेशयत् ॥ ७३ ॥
स्वापच्छलेन सुप्यन्ती एतत्सर्वं विजानती ।
स्वादाद्बोधस्ततो जातो आनन्दो ववृधे तदा ॥ ७४ ॥
अतिसन्तोषतां प्राप्ता शेफे प्रवेशिते सति ।
तदा निद्रां परित्यज्य प्रियं प्रति उवाच ह ॥ ७५ ॥
हे प्रिय ! शृणु मे वाक्यं ममानन्दः प्रवर्धते ।
उदङ्गेस्तु प्रवेशेन मुखं योनेर्विदीर्यते ॥ ७६ ॥
आनन्दस्यातिरेकत्वात् कृत्स्नं शिश्नं प्रवेशय ।
आघातं दृढवद्देहि कामपीडानिवारकम् ॥ ७७ ॥
अल्पाघातं मा कुरुष्व आनन्दो न भवेत् ध्रुवम् ।
अत्यानन्दस्य बोधार्थं दृढाघातं कुरुष्व मे ॥ ७८ ॥
रेतसः स्खलनं यावत् तावत्कालं कुरुष्व मे ।
चिरेण रेतःस्खलनं कालेन कुरु हे प्रिय ! ॥ ७९ ॥
मुहूर्त्तत्रयपर्यन्तं यथेच्छं कण्डनं कुरु ।
यावन्मे कामशमनं तावत्त्वं कुरु कण्डनम् ॥ ८० ॥
कामस्य शमने जाते मां परित्यज हे प्रिये ! ।
एतद्वाक्यमनूच्याथ स्वजङ्घे प्रससार सा ॥ ८१ ॥
बाहू ऊर्ध्वतरौ कृत्वा शिरः पार्श्वे निधाय च ।
कुचौ प्रकाशितौ कृत्वा सुष्वाप मैथुनेच्छया ॥ ८२ ॥
ततः प्रिय उत्थितोऽभूत् मैथुनाय त्वरान्वितः ।
परिधानं विनिर्मुच्य शिश्नं निष्कास्य यत्नतः ॥ ८३ ॥
सुखामोदेन स्नेहेन मुखं शिश्नस्य हेतुना ।

उभयोर्लेपनं चक्रे योनेः शिश्नस्य चैव हि ॥ ८४ ॥
पश्चात्प्रवेशितस्तेन शिश्नो दृढतरः पुमान् ।
अभ्यन्तरं जगामोच्चैः यावत्सार्द्रगृदेवाधि ॥ ८५ ॥
शुक्रपातस्य यत्स्थानं तेन स्थानेन सङ्गतः ।
तस्मिन्काले प्रियायास्तु आनन्दो ववृधे परम् ॥ ८६ ॥
भावुकस्याप्यविषयमनिर्वाच्यं रसप्लुतम् ।
तदा चकार सा योषा आनन्दस्यातिरेकतः ॥ ८७ ॥
नेत्रे निमील्य भणितं(१) मन्दं मन्दश्चकार ह ॥ ८८ ॥
अनेकरूपभणितं प्रियस्य प्रीतिकारकम् ।
नानाविलासरचितं रसस्योद्बोधकं तथा ॥ ८९ ॥
नानाविलासचरितं रतिकाले प्रकुर्वती ।
अत्यानन्देन संयुक्ता हर्षयन्ती प्रियं प्रति ॥ ९० ॥
प्रियस्तु कामरभसात् अत्याघाते समुत्सुकः ।
प्रियामानन्दयामास स्मरकाले प्रियः सुहृत् ॥ ९१ ॥
अनेन स्मरयागेन सन्तुष्टौ तौ बभूवतुः ।
अत्याघातं प्रकुर्वाणो रेतःस्खलनहेतवे ॥ ९२ ॥
अतीवव्यवसायेन योन्यां रेत अपातयत् ।
रेतसः पतने जाते आनन्दात् श्रंशितो ह्यभूत् ॥ ९३ ॥
तस्मिन्काले तु योषाया अत्यानन्दो बभूव ह ।
प्रियं संश्लेषणं चक्रे अत्यन्तं दृढवत्तमम् ॥ ९४ ॥
योनिद्वारेण तद्वीर्यं पपौ सा मदाविह्वला ।
प्रियोऽत्यन्तं परिश्रान्तः तस्मिन् रतिमहोत्सवे ॥ ९५ ॥
आघाते असमर्थश्च वीर्यपातस्य हेतुना ।
पुनर्निधुवनं कर्तुमसमर्थो बभूव ह ॥ ९६ ॥
अतीवारुचितां प्राप्तः मैथुनानन्दपूरणात् ।

---

(१) भणितं रतिकूजितमिति कोषः ।

प्रियां त्यक्तुं पतिश्चक्रे तत्रेच्छाया अभावतः ॥ ९७ ॥
तूर्णं शिश्नं विनिष्कास्य पश्चादुपविवेश सः ।
तल्पस्य पश्चिमे भागे अत्यन्तं स्वेदपूरितः ॥ ९८ ॥
हस्तेन व्यजनं धृत्वा भ्रामयामास सर्वतः ।
स्वेदप्रशमनार्थाय श्रमबाधनिवृत्तये ॥ ९९ ॥
अतिसन्तोषतां प्राप्तः व्यजनोत्पन्नवायुना ।
मुहूर्त्तदिष्टपर्यन्तं उपविष्टो बभूव ह ॥ १०० ॥
(१)आधाववायुं संगृह्णन् श्रमेण रहितो ह्यभूत् ।
प्रस्वेदाः लुप्तमभवन् व्यजनोत्पन्नवायुना ॥ १ ॥
तत उत्थाय तरसा तत्समीपे समागमत् ।
समाश्लिष्य पुनस्तां वै बाहुभ्यां सत्वरं भृशम् ॥ २ ॥
पुनः सुष्वाप शयने श्रमबाधनिवृत्तये ।
तस्या ऊर्वोपरि स्वीयामूरुं द्राक् विनिपात्य च ॥ ३ ॥
कण्ठेन कण्ठं संयोज्य सुष्वाप शयने तदा ।
अधरस्य रसोद्गीर्णं श्रमबाधानिवृत्तये ॥ ४ ॥
अनुक्षणं प्रकुर्वाणो कुचमर्द्दनपूर्वकम् ।
पूर्ववत्कामसदने निर्लोमे गौरवर्णके ॥ ५ ॥
स्वशेफं भ्रामयामास तस्याः सन्तोषहेतवे ।
निद्रया तावभिव्याप्तौ भोगेच्छारहितावुभौ ॥ ६ ॥
कामवार्त्तां प्रकुर्वाणावुभौ तौ जम्पती मिथः ।
सुरतस्य श्रमेणैव उभौ सुषुपतुश्चिरात् ॥ ७ ॥
(२)कल्यदिष्टे सम्प्रवृत्ते उत्थिता साऽभवत्तदा ॥
तं तल्पं सम्परित्यज्य अधोगन्तुं प्रचक्रमे ॥ ८ ॥

---

(१) आधावेन माहेन्द्रस्तोत्रमुपाकरोतीति कल्पसूत्रम् ।
(२) प्रत्यूषोऽहर्मुखं कल्यमित्यमरः ।

प्रियस्तु निद्रया व्याप्तः श्रमेण परिपूरितः ।
सुषुप्त्यवस्थां सम्प्राप्तः अनुसन्धानवर्जितः ॥ ९ ॥
तादृक्प्रियं परित्यज्य जगाम रतिमन्दिरात् ।
श्वश्र्वादीनां सन्निधाने गत्वा सन्निहिता ऽभवत् ॥ १० ॥
तया श्वश्र्वा यद्यदुक्तं तत्सर्वं कर्तुमिच्छती ।
अन्यत्सर्वं गार्ह्यजातं तत्सर्वं कर्तुमिच्छती ॥ ११ ॥
स्वहस्ते मार्जनीं धृत्वा गृहं संमार्जयत्तदा ।
देवस्य मन्दिरं पूर्वं पश्चादन्यत् गृहान्तरम् ॥ १२ ॥
लेपनं गोमयेनैव कुर्वती गृहशुद्धये ।
चक्रादीनां लेखनं च कुर्वती देवमन्दिरे ॥ १३ ॥
व्रीहिपिष्टेन देहल्यां शङ्खचक्रादि लिखती ।
देवस्य सन्निधाने तु गोवत्सादीन् विलिखती ॥ १४ ॥
वृन्दावनन्तुलस्यास्तु लिखती देवमन्दिरे ।
इत्यादिकं कर्मजातं सर्वं सम्पाद्य यत्नतः ॥ १५ ॥
लघुशङ्कां बृहच्छङ्कां कर्तुं मनसि शङ्किता ।
पुरीषोत्सर्जनगृहे जगामातित्वरान्विता ॥ १६ ॥
इत्यादिकं कर्मजातं सर्वं सम्पाद्य यत्नतः ।
स्नानं कर्तुं मतिं चक्रे शरीरस्य विशुद्धये ॥ १७ ॥
प्रियोऽपि पश्चात् बुबुधे यथार्थज्ञानपूर्वकम् ।
न दृश्यते प्रिया तत्र कामेनात्यन्तपीडितः ॥ १८ ॥
तथापि निग्रहं कृत्वा इन्द्रियाणां परस्परम् ।
अपीडितमिवात्मानं मन्यते जनसंसदि ॥ १९ ॥
एवं निरन्तरं तेषां रतितन्त्रं प्रचोदितम् ।
ऐश्वर्यवृद्ध्या युक्तानामयुक्तानां निषेधितम् ॥ २० ॥
स्त्रीपुंसोः सुखितोरेतत् उक्तं कर्म सुखावहम् ।
न चान्येषां निर्धनानामेतन्मार्गं प्रकाशितम् ॥ २१ ॥

मीनकेतनजन्यस्य(१) रूपमेतत्प्रकाशितम् ।
एतत्स्वरूपं यो वेत्ति स पुमान्मन्मथः खलु ॥ २२ ॥
कृतस्थलया समा योषा ईदृश्या कुरुते रतिम् ।
उभौ देवांशसम्भूतौ नान्यौ मानुषविग्रहौ ॥ २३ ॥
प्राक्तनीयस्य तपसः फलमेतत् प्रकाशितम् ।
वात्स्यायनीयसूत्रस्य तात्पर्यार्थनिरूपणम् ॥ २४ ॥
कादम्बरस्यैकपद्यां (२)यथावत्तत् प्रकाशितम् ।
कादम्बरस्य तात्पर्यादर्थज्ञानं न दृश्यते ॥ २५ ॥
उर्वश्याधिष्ठिताल्लोकात् प्रच्युतो भवति क्षणात् ।
वात्स्यायनपरिज्ञानमावश्यकतया स्मृतम् ॥ २६ ॥
श्रौते स्मार्ते परिज्ञाते विख्यातं श्रेष्ठवत्तमम् ।
सायुज्यादिफलं चात्र सूत्रकारेण कीर्त्तितम् ॥ २७ ॥
एतच्छास्त्रपरिज्ञानमावश्यकतया स्मृतम् ।
वेदाध्ययनवच्छास्त्रमेतच्छास्त्रं प्रकीर्तितम् ॥ २८ ॥
तस्माच्छास्त्रं समभ्यस्य कामक्रीडां समारभेत् ।
अपत्यं सकलं पूतं भवतीति निगद्यते ॥ २९ ॥
वेदेन सर्वविदुषा कर्ममात्रेषु दर्शनात् ।
तस्मात्कादम्बरं सूत्रं पठितव्यं द्विजैः सदा ॥ ३० ॥
ब्रह्मलोकेषु वसतिं प्राप्नोति स पुमान् ध्रुवम् ।
यद्यत्कामयते लोके तत् तत्प्राप्नोति स ध्रुवम् ॥ ३१ ॥
वैकुण्ठलोके वसतिं प्राप्नोति स चिरात् ध्रुवम् ॥ ३२ ॥

इति श्रीराजर्षिवर्येण नर्मरहस्यद्रष्ट्रा भरताख्येन
कृतं कादम्बरसूत्रस्य तात्पर्यार्थप्रकाशकं
कारिकाविवरणं समाप्तिमगमत् ॥

इति कादम्बरस्वीकरणकारिका(४)मञ्जरी ।

---

(१) जन्यमायोधनं रणमित्यमरः ।
(२) सरणिः पद्धतिः पद्यावर्त्मन्येकपदीति चेत्यमरः

# पञ्चसायक(५)मञ्जरी ।

## प्रथमः सायकः ।

### उपोद्घातप्रकरणम् [१]

श्रीगणेशाय नमः ॥

रतिपरिमलसिन्धुः कामिनीकेलिबन्धु-
र्विहितमदन(१)मोदः सेव्यमानप्रमोदः ॥
जयति मकरकेतुर्मोहनस्यैकहेतु-
र्विरचितबहुसेवः कामिभिः कामदेवः ॥ १ ॥

अस्ति प्रत्यहमर्थितापहरणः प्रीत्यैकदीक्षागुरुः
श्रीकण्ठार्चनतत्परो भुवि चतुष्षष्टेः कलानां निधिः ॥
सङ्गीतामृतसत्प्रमेयरचनाचातुर्यचिन्तामणिः
प्रख्यातः कविशेखरार्चितपदः श्रीज्योतिरीशः कृती(२)॥२॥

दृष्ट्वा मन्मथतन्त्रमीश्वरकृतं(३) वात्स्यायनीयं मतम्
गोणीपुत्रकमूलदेवभणितं बाभ्रव्यवाक्यामृतम् ॥
श्रीनन्दीश्वररन्तिदेवभणितं क्षेमेन्द्रविद्यागमं
तेनाकल्प्यत(४) पञ्चसायक इति प्रीतिप्रदः कामिनाम् ॥३॥

### अथ जातितिथिसमुद्देशप्रकरणम् [२] ।

#### तत्र नायकलक्षणम् ।

साचारः करुणामयः कृतमतिर्दाताऽत्रदाताशयः(५)
काम्यः कामकलानिधिः सुवचनः स्त्रीणां मतो सुन्दरः ॥

---

(१) भुवनमोद इति क पुस्तकपाठः ।

(२) 'श्रीमानेष महीपतिर्गिरिसुतापादाब्जपूजापरः' इति चतुर्थपादघटितं पंचपादात्मकं पद्यं क पुस्तके ।

(३) 'मतं' ग पुस्तकपाठः। (४) कल्प्यत इति ग पुस्तकपाठः ।

(५) वादावदाताशय इति ग पुस्तकपाठः ।

आढ्यो नीतिपटुः शमी(१) च कुतुकी शूरः कुलीनो युवा
संक्षेपादिह नायको निगदितः सङ्गीतशिक्षान्वितः ॥ ४ ॥

पीठमर्दलक्षणम् ।

आचारे विनये नये च सुकृतौ(२) शौर्ये च तौर्यत्रिके(३)
शास्त्रे कौतुकशिल्पनाटकविधौ नानाकलाकौशले(४) ॥
ऊहानूहसमस्तनर्मघटनाभावेङ्गिते यः पटुः(५)
मन्त्रज्ञः स्थिरसौहृदः सुवचनः स्यात्पीठमर्दः सदा ॥ ५ ॥

पद्मिनीलक्षणम् ।

सम्पूर्णेन्दुमुखी कुरङ्गनयना(६) पीनस्तनी दक्षिणा
मृद्वङ्गी विकचारविन्दसुरभिः श्यामाऽथ गौरद्युतिः ॥
अल्पाहाररता विलासकुशला हंसस्वना सद्व्रति(७)-
र्लज्जालुर्गुरुदेवपूजनपरा(८) स्यान्नायिका पद्मिनी ॥ ६ ॥

चित्रिणीलक्षणम् ।

श्यामा पद्ममुखी कुरङ्गनयना क्षामोदरी वत्सला
सङ्गीतागमवेदिनी वरतनुस्तुङ्गस्तनी शिल्पिनी ॥
(९)वाह्यालापरता मतङ्गजगतिर्माद्यन्मयूरस्वना
विज्ञेया कविशेखरैः प्रणयिनी चित्रोपमा चित्रिणी ॥ ७ ॥

शङ्खिनीलक्षणम् ।

तन्वङ्गी कुटिलेक्षणा लघुकुचाभोगा मदावेशिणी(१०)

---

(१) क्षमीति ग पुस्तकपाठः ।
(२) सकले इति क पुस्तकपाठः ।
(३) तौर्यत्रिकेऽकृत्रिम इति घ पुस्तके पाठः ।
(४) कौशलः इति ग पुस्तकपाठः ।
(५) ङ्गितज्ञः पटुरिति ग पु० पाठः ।
(६) विलोलनयना ग पु० पाठः ।
(७) मानिनीति ग पु० पाठः ।
(८) रता ग पु० पाठः । (९) विद्यालापेति ग पु० पाठः ।
(१०) वेशिनीति ग० पु० पाठः ।

प्रायो दीर्घकचा स्वभावपिशुना कष्टोपभोग्या रते ॥
पिङ्गा (१)क्षीणगतिश्च घर्घररवा रक्ताम्बराह्लादिनी
नानास्थाननखप्रदानरसिका सेयं मता शङ्खिनी ॥ ८ ॥

### हस्तिनीलक्षणम् ।

पीनस्वल्पतनुर्भृशं मृदुगतिः क्रूरा नमत्कन्धरा
स्तोकापिङ्गलकुन्तला पृथुकुचा लज्जाविहीनानना ॥
बिम्बोष्ठी बहुभोज्यभोजनरुचिः कष्टैकसाध्या रते(२)
गौराङ्गी करिदानगन्धिमदन स्थाना मता(३) हस्तिनी ॥९॥

### आसां सुरतोचिततिथिकथनम् ।

ब्रह्मा[१]स्येन्दु[१]शरा[५]क्षि[२]संख्यतिथयः ख्याता नलिन्या रते
पौकस्त्यास्य[४]रसा[६]ष्ट[८]भास्कर[१२]तिथौ प्रीता भवेच्चित्रिणी ।
रुद्रा[११]नङ्ग[१३](४)तुरङ्ग[७]शम्भु[१४]तिथिभिः स्याच्छङ्खिनी मोदिता
शेषाः स्युः सुरतोत्सवेषु करिणीजातेः स्त्रियाः प्रीतये ॥१०॥

इति जातितिथिसमुद्देशः ॥

### अथ चन्द्रकलासमुद्देशप्रकरणम् [३] ।

### तत्र सामान्यतश्चन्द्रकलासमुद्देशः ।

अङ्गुष्ठे चरणे च गुल्फवलये जानुद्वये बाहुके(५)
नाभौ वक्षसि कक्षयोर्निगदिता कण्ठे कपोलाधरे ॥
नेत्रे कर्णयुगे ललाटफलके मौलौ च वामभ्रुवा-
मूर्ध्वाधश्चलनक्रमेण कथिता चान्द्रीकला(६) पक्षयोः ॥११॥
सीमन्ते नयनेऽधरे च गलके कक्षातटे चूचुके

---

(१) लोलगतिरिति ग० पु० पाठः ।
(२) रतौ ग० पु० पाठः ।
(३) गन्धवदना स्यात्संमतेति क० पु० ।
(४) रुद्रानागेति ख पु० पाठः
(५) 'जंघयो' रिति ग पुस्तके 'वस्तिके' इति च क पु० पाठः॥
(६) ताश्चान्द्रीकलाः इति ग० पु० पाठः ।

नाभौ श्रोणितटे मनोभवगृहे जङ्घातटे पिण्डिके ॥
गुल्फे पादतले तदङ्गुलितलेऽङ्गुष्ठे च तिष्ठत्यसौ
वृद्धिक्षीणतया समं शशिकला पक्षद्वये योषिताम्(१) ॥१२॥
मौलौ कुन्तलकर्षणं नयनयोराचुम्बनं गण्डयो-
र्दन्तेनाधरपीडनं हृदि हतिं मुष्ट्या च(२) नाभौ शनैः ॥
कक्षाकण्ठकपोलचूचुकयुगश्रोणीषु(३) देया नखाः
सीमन्ते लिखनं नखै(४)रुरसिजे पादे च संवाहनम् ॥१३॥
गुल्फे चुम्बनमेव जानुजघनैः कुर्याच्च लीलायितं(५)
जङ्घाङ्गुष्ठपदोरुगुल्फहननादन्योन्यतः(६) कामिनोः ॥
इत्येवं कथितो(७)पदेशकलनादिन्दोः कलादीपनं
कर्त्तव्यं चतुरैर्न विस्तरभयादुक्तः प्रपञ्चोऽखिलः ॥ १४ ॥

अथ पद्मिनीचन्द्रकलासमुद्देशः ।

गाढालिङ्गनपूर्वकं कररुहैरालिख्य जङ्घा(८)स्थलीं
दत्वा सूक्ष्मनखान्नितम्बफलके पार्श्वे च पृष्ठोदरे ॥
सीत्कारध्वनिजागरूकपुलकामाद्ये दिने(९) पद्मिनी-
मित्थं चन्द्रकलाविदः स्ववशतां कामं नयेयुः स्त्रियम् ॥१५॥

---

(१) शशिकलालीलाकरो योषिताम् इति ग० पु० पाठः ।

(२) पीडनं च सुमहत्स्फोटां चेति ग० पु० पाठः ।

(३) मण्डलकचश्रेणीषु इति ग० पु० पाठः प्रामादिकः कचेषु नखक्षतस्याप्रथितत्वाच्चमत्कृत्यजनकत्वाच्चेति रसिकैर्विभाव्यम् ।

(४) उरसिजौ गृह्णीत गाढं तत इति ग० पु० पाठान्तरम् ।

(५) कुर्वीतावितरं मनोभवगृहे मातङ्गलीलायितमिति ग० पु० पाठान्तरम् ।

(६) जान्वङ्गुष्ठपदोरुगुल्फकलनं वान्योन्यत इति ग०पु० पाठः ।

(७) अत्र कथितः प्रदेशकलनादिति पाठस्य कल्पयितारः कथित इति प्रथमान्तस्यानन्वयादुद्भ्रान्ता इति ध्येयम् ।

(८) गण्डस्थलामिति क पु० पाठः ।

(९) प्रतिपदि । अत्रान्त्यपादे 'कामानयेयु'रिति ग० पु० पाठः ।

आचुम्ब्याधरपल्लवं स्तनमुखे नेत्रालिके पार्श्वयो-
र्मूर्द्धान्ते जघने कपोलफलके(१) कृत्वा नखालेखनम् ॥
मर्पन्तो नखरैः पदाम्बुजयुगं खिन्नां(२) कुरङ्गीदृशं
संसेव्याविरतं प्रवृद्धमदनां कुर्युर्द्वितीयादिने ॥ १६ ॥
श्लिष्ट्वा गाढतरं निपीड्य च कुचं पीत्वा तु दन्तच्छदं
कद्यूरू(३)करजक्षतं भुजलतामूले विशेषात्पुनः ॥
मायूराङ्घ्रिकदर्दुरच्छुरितकप्राया(४)न्नखानादरा-
द्द्युर्वाह्यरतोपचारचतुराः प्रायश्चतुर्थ्यां तिथौ ॥ १७ ॥
बिम्बोष्ठं परिचुम्ब्य दक्षिणकरेणाकृष्य केशोच्चयं
स्वच्छन्देन विमर्द्य(५) चूचुकयुगं चुम्बन् प्रियम्भावयेत् ॥
आकृष्यन्करजैः(६) सखेलपुलकं भूयो नितम्बस्थलीं
पञ्चम्यां द्रवतां नयेत्कमलिनीमित्याह वात्स्यायनः॥१८॥

इति पद्मिनीचन्द्रकलासमुद्देशः ।

## अथ चित्रिणीचन्द्रकलासमुद्देशः ।

चुम्बित्वालकमुन्मदः कररुहैरालिख्य वक्षोजकं
श्रोणीपृष्ठभुजादि(७)कर्णजघनस्थानोरुयुग्मस्थलीम् ॥
पाणिभ्यामुपगूह्य नम्रधमनीं(८) कान्तो दशम्यान्तिथौ
कन्दर्पं प्रतिबोध्य चन्द्रककया कुर्यान्निजा(९)श्चित्रिणीम्॥१९॥

---

(१) जघनस्थलोरुफलके इति ग० पु० पाठः ।
(२) कृत्वा ग० पु० पाठः । (३) वामोरौ ग पु० पाठः ।
(४) मायूराङ्घ्रिकमर्धचन्द्रच्छुरितप्रायानिति ग० पु० पाठः ।
(५) विमृश्य ग० पु० पाठः ।
(६) आमृश्यात्करजैः ग पु० पाठः ।
(७) भुजास्यकर्णजघनस्थानेति घ पु० पाठः ।
(८) गूहयन् स्वरमणीमिति ग० पु० पाठः ।
(९) अत्र कुर्युर्निजामिति पाठं मुद्रितवन्तः शास्त्रिप्रवरास्तु महावैयाकरणा इत्यत्र न सन्देहः ।

श्लिष्ट्वा कन्धरकन्दलीम्भुजलतापाशेन गाढं पुनः
पायं पायमजस्रमुत्पलदृशां वक्त्रारविन्दासवम् ॥
नाभीकण्ठनितम्बबिम्बव(१)लनव्यापारपारङ्गतैः
षष्ठ्यां चन्द्रकलाकलापनिपुणैर्देया नखास्सर्वतः ॥ २० ॥
ग्रीवायां परिरभ्य गाढमसकृन्नाभिं नखैरालिखे-
द्दन्तौष्ठेन निपीडयेत्कुचतटीं कण्ठे मनाक् ताडयेत्(२) ॥
सानन्दं स्मरमन्दिरे करिकरक्रीडायितं कुर्वता
नेतव्या तरुणी स्वकीयवशतां चण्डीतिथौ कामिना ॥२१॥
आलिङ्ग्य प्रसभं कपोलनयने श्रोणीश्रुतीश्चुम्बये-
त्स्थानेष्वेषु नखप्रदानकुशलो दत्त्वा नखान्निर्दयम् ॥
सन्दष्ट्वाधरपल्लवं कुचयुगञ्चाकृष्य केशान् दृशो-
रुन्मेषं विदधीत सीत्कृतिजुषो भानोस्तिथौ नायकः॥२२॥

इति चित्रिणीचन्द्रकलासमुद्देशः ॥

### अथ शङ्खिनीचन्द्रकलासमुद्देशः ।

कक्षामुल्लसितैर्विलिख्य(३) करजैरालिङ्ग्य दोर्भ्यां मुहु-
र्वक्त्राम्भोजरसं निपीय(४) सुतरां विष्णोस्तिथौ चन्द्रवित्
चुम्बित्वा च कपोलकण्ठवलयं(५) मृद्नन्नुरोजद्वयं
कन्दर्पस्य तिथौ नखक्षतवशात्माक् शङ्खिनीं द्रावयेत् ॥२३॥
व्यादष्टौष्ठपुटः कपोलनयनं श्रोत्रं नखैरालिख-
न्सान्द्रानन्दनिगूढकण्ठवलयो भानोस्तिथौ भामिनीम् ॥

---

(१) नितम्बसङ्गमलयव्यापारपारङ्गमैरिति ग पु० पाठः ।

(२) दन्तोष्ठं परिपीडयन् कुचतटीं चुम्बन् मनाक् ताडयेत् इति ग पु० पाठः ।

(३) मालयाशुल्लसितां विलिख्येति क पु० पाठः ।

(४) गात्रं चोरासिजौ निपीड्येति ग पु० पाठः ।

(५) आचुम्बेच्च कपोलकण्ठगलके इति ग पु० पाठः ।

आघातं नखरैश्च नेत्र(१)चरणग्रीवाकुचोरःस्थले
कृत्वाऽऽलिख्य च भूतनाथदिवसे कुर्यात्सुधीर्विह्वलाम् ॥२४॥
इति शङ्खिनीचन्द्रकलासमुद्देशः ॥

अथ हस्तिनीचन्द्रकलासमुद्देशः ।

आकण्ठं परिरभ्य दोर्लतिकया निष्पीय वक्त्राम्बुजं
कक्षां च स्तनमण्डलोदरतटीं चञ्चन्नखैरामृशन् ॥
क्षोणीभृत्तनयातिथावथ मुहुः कामालयं संस्पृशन्
सन्दश्याधरपल्लवं ग्रहतिथौ(२) कुर्याद्द्रुतां हस्तिनीम् २५॥
सम्पूर्णेन्दुतिथौ परिक्षयदिने तस्यैव तुल्या तिथि-
स्तस्या एव वशीकृता शशिकलासम्बोधनैः कामिनी ॥
कामागार(३)चुचूलिकासु करजै(४)र्दष्टैश्च दन्तच्छदै-
राश्लेषैः परिचुम्बनैश्च विविधैरित्याह नन्दीश्वरः ॥२६॥
इति हस्तिनीचन्द्रकलासमुद्देशः ॥

यामिन्याः कथितश्चतुर्थचरणः कामं नलिन्या रते
प्राचीने प्रहरे(५) प्रयाति सुखितां चित्रप्रिया चित्रिणी ॥
शङ्खिन्याः समुदीरितः कविवरैर्यामस्तृतीयस्तथा
मातङ्गी द्रवतामुपैति नितरां नक्तंदिवस्यार्द्धयोः ॥ २७ ॥
सुखयति न पुमांसं पद्मिनी क्वापि रात्रौ
निधुवनमिति तस्या(६) नैव तत्र प्रयोज्यम् ॥
शिशुरपि यदि कान्तो वासरे तामुपेया-

---

( १ ) तत्र इति ग पु० पाठः ।
( २ ) हरतिथाविति ग पु० पाठान्तरम् ।
( ३ ) 'कामारक' घ पु० पाठः ।
( ४ ) दन्तास्यदैर्निश्चलैरिति ग पु० पाठः ।
( ५ ) प्रारंभप्रहरे इति ग पु० पाठः । अत्र चित्रप्रियां चित्रिणीमिति द्वितीयान्तपाठः सर्वथा प्रामादिकः शास्त्रिमहोदयानाम् ।
( ६ ) तस्याः पद्मिन्या रतमिति शेषः, तत्र रात्रौ, न विधेयमित्यर्थः ।

द्विकसति रवियोगात्सा हठात्पद्मिनी च ॥ २८ ॥

अथेदानीं मूलदेववाभ्रव्ययोर्मतान्तरमुदाह्रियते ।

तत्र सत्त्वसमुद्देशे देवसत्त्वादिलक्षणम् ।

त्रिवलिवलितमध्या कम्बुकण्ठी विदग्धा
कमलसुरभिदेहा केतकीगर्भमध्या(१) ॥
शुचिचरितविचित्रा शीलसन्तोषयुक्ता
सुललितपिकवाणी स्यादियं देवसत्त्वा ॥ २९ ॥

(२)बहलचपलदृष्टिर्नृत्यगीतादिदक्षा
मधुरवहल(३)तुष्टिर्गन्धमाल्यानुरक्ता ।
शिशिरसुरभिमासक्रीडनप्रेमपात्री
भवति रुचिरमूर्तिः सैव गन्धर्वसत्त्वा ॥ ३० ॥

गुरुकुचयुगभारा गौरदेहातिदेहा
तरुणहरिणनेत्रा कोपिनी वीतलज्जा ॥
विविध(४)मधुरसक्तिर्मत्स्यमांसादिभोज्या
मुनिभिरियमनर्घा यक्षसत्त्वा प्रदिष्टा ॥ ३१ ॥

वन(५)विहरणविज्ञा रात्रिसञ्चारधीरा
मलिनपिशुनचित्ता कुत्सिताहारहृष्टा(६) ।
विकृतवदनचन्द्रा कृष्णावर्णाऽतिखर्वा
मलिनवसनरक्ता कीर्त्तिता प्रेतसत्त्वा ॥ ३२ ॥

इति प्रासाङ्गिकं सत्त्वसमुद्देशप्रकरणम् ।

इति पञ्चसायकाख्यकामशास्त्रे जातिविवेको
नाम (७)प्रथमः सायकः ॥

---

(१) भव्या ग पु० पाठः । (२) 'चटुल' ग पु० पाठः ।
(३) 'जनितविविध' ग पु० पाठः ।
(४) मधुरभोज्या मत्स्यमांसानुरक्ता इति ग पु० पाठः ।
(५) 'घर' क० पु० पाठः । (६) 'चेष्टा' ग पु० पाठः ।
(७) इति कविशेखरज्योतीश्वराचार्यविरचिते पञ्चसायके जात्यादिनिरूपणो नामेति ग पु० पाठः ।

## अथ द्वितीयः सायकः ।

### तत्र सुरतभेदसमुद्देशप्रकरणम्(१) ।

आयामैः परिणाहकैश्च पुरुषा लिङ्गैर्वराङ्गैः स्त्रियो
ज्ञातव्याश्च रसग्रहारुणसमा(१)ख्याताङ्गुलैः सर्वतः ॥
जात्या तेऽपि शशा वृषाश्च तुरगाः (२)संकीर्तितास्सत्तमै-
र्मृग्यश्वा करिणीति विस्तरभयात्संक्षिप्य निष्कृष्यते ॥ १ ॥
शशकवृषभपत्न्यो(३)र्गोतुरङ्ग्योस्तथैव
गजपतिहयनार्यो(४)रेकरूपं रतं स्यात् ॥
इह भवति नितान्तं प्रीतिरन्योन्ययोगा-
दपरमणमशक्यं(५) स्त्री कथं स्वीकरोति ॥ २ ॥

मृगी वृषं स्याद्वडवा गजं चेदत्युच्चमेतत् द्वितयं वदन्ति
अश्वी शशं नागवधूर्वृषं च नीचद्वयं तुष्टिकरं न यूनोः(६)॥ ३॥
मृगी हयं हस्तिवधूः शशं चेदत्यन्तनीचं सुरतं वदन्ति ॥
प्राणप्रभेदेऽपि च न द्रवन्ति तस्मिन्न तृप्यन्ति नितम्बवत्यः ॥ ४॥
स्त्रीकान्तयो(७)स्तुल्यरतं प्रशस्तं मध्यद्वयं मध्यममामनन्ति ॥
अत्युच्चकं चाप्यतिनीचकं च निन्द्यं रतज्ञैः सुरतं तदुक्तम् ॥ ५॥
प्रीतिः समा स्यात्सुरते समाख्ये नीचद्वये योषित एव तुष्टिः ॥
अत्युच्चके वाप्यतिनीचके(८) वा तुष्टिर्न पुंसां न च सुन्दरीणाम् ॥ ६॥

---

(१) ग्रहाद्रितनया इति पाठान्तरम् ।
(२) प्राज्ञैः स्मृतास्तान् परमिति ग० पु० पाठः ।
(३) हरिणपत्न्योरिति ग० पु० पाठः ।
(४) हयगजपतिपत्न्योरिति ग० पु० पाठः ।
(५) दनुमरणमशक्यं क० पु०, अपशरणमसेव्यं ग० पु० पाठः ।
(६) मृगी वृषं चेद्वडवा तुरङ्गमेतद्द्वयं तूच्चरतं वदन्ति ।
अश्वा शशं गौः करिणीश्च वैतन्नीचद्वयं तुष्टिकरं न यूनोः ॥
इति ग० पु० पाठः ।
(७) स्त्रीपुंसयोरिति ग० पु० पाठः ।
(८) अत्र अत्युच्चकैरप्यतिनीचकैर्वा इति ग० पु० पाठः ।

प्रचण्डवेगोऽप्यथ मध्यवेगस्तथा परः स्याल्लघुनामधेयः ॥
पुंसस्तरुण्या उभयोरपीह त्रिधा (१)कवीन्द्राः सुरतं वदन्ति॥७॥
शीघ्रक्रियः कश्चन मध्यमक्रियो लघुक्रियः कश्चिदुदीरितोऽथ ॥
पुनस्त्रिधा कालवशेन पुंसां रतं समस्तं त्विह सप्तविंशतिः(२) ॥८॥
खरप्रहारो मदनाकुलः स्याद्रतो बहुत्वं कुलचण्डवीर्ये ॥
चण्डा नराः शीघ्रतरा हि मध्ये मध्यो भवेन्मन्दतरे हि मन्दः ॥९॥

इति सुरतभेदसमुद्देशः ॥

## अथेदानीं शशादिजातीनां नायकानां स्वरूपनिरूपणप्रकरणम्(२) ।

दीर्घाक्षाः सूक्ष्मदेहा लघुसमदशना लम्बकर्णाः सुवाचो
ग्रीवायां जानुदेशे करकमल(३)तले कालिमानं वहन्तः ॥
अल्पाहाराल्पशौचा दिनमधिशयिनः कान्तिमन्तो धनाढ्याः
क्रीडावन्तो विनीता लघुतरसुरता पुण्यभाजः शशाः स्युः ॥१०॥
सुचारुकेशो मृदुवाक्सुकेशः सुदीर्घकेशश्चपलः सुनेत्रः ॥
सुरक्तपाणिः समदन्तपङ्क्तिः सौभाग्ययुक्तः कथितो मृगोऽयम्॥११॥
स्फाराकाराः सहासा निधुवनकुशला लम्पटाः सुन्दराङ्गा(४)

---

(१) अत्र मन्दवेगयोर्यूनोर्मध्यवेगयोर्यूनोः प्रचण्डवेगयोश्च यूनोः सङ्गमे रतस्य त्रैविध्यम्, तत्रापि मन्दवेगया मध्यवेगस्य मध्यवेगया मन्दवेगस्य मन्दवेगया युवत्या चण्डवेगस्य तरुणस्य च सङ्गमे चेति पुनस्त्रैविध्यम्, तथा मध्यवेगया चण्डवेगस्य चण्डवेगया मध्यवेगस्य चण्डवेगया च युवत्या मन्दवेगस्य तरुणस्य सङ्गमे त्रैविध्यमित्येवं रतिरहस्योक्तं नवधारतं बोध्यम् ।

(२) पूर्वोक्तनवविधरते मन्दमन्द–मन्दमध्य–मन्दप्रचण्डादिप्रभेदेन प्रत्येकभेदस्य त्रैविध्याद्वर्तमान–भूत–भविष्यद्रूपकालत्रैविध्याद्वा सप्तविंशतित्वं सुधीभिर्विभावनीयम् ।

(३) चरणतले इति ग पु० पाठः।

(४) सदर्पाः सुरतरसकलालम्पटाः सुन्दराङ्गा इति ग० पु० पाठः।

व्यूढोरस्कास्सुरूक्षाः सुसमजठरिणो(१) मांसला लोलनेत्राः ॥
अत्यन्तप्रौढवाञ्छाः(२) परिलघुधृतयः क्रोधना मध्यवेगा
उक्षाणो लिङ्गमीपद्द्वितनवमितै(३)रङ्गुलीकैर्वहन्ति ॥१२॥
कार्ये धृष्टा(४) बलिष्ठाः सितसमदशनाः पीवरस्फारवक्त्रा(५)
ग्रीवाबाहूरुदीर्घाः परहितनिरताः सात्त्विकाः स्निग्धवाचः ॥
निर्लज्जाश्चारुशीलाः पृथुतरगतयश्चण्डसम्भोगरक्ता
अश्वा लिङ्गं वहन्तो युवतिजनमतं भानुसंख्याङ्गुलीकम् ॥१३॥

इति पुरुषजातिसमुद्देशः ॥

## अथ स्त्रीजातिस्वरूपस्वभावसमुद्देशप्रकरणम्(२)।

मृद्वङ्गी दीर्घनेत्रा वरबिसलतिकाकोमला दीर्घबाहुः
शोणाम्भोजाभिरामं वहति करयुगं वेदिमध्या सुकेशी ॥
सुश्रोणिः कम्बुकण्ठी पृथुकुचयुगला या वहत्यङ्गुलीकैः
षड्भिः कन्दर्पगेहं कथयति हरिणीं तामिह ज्योतिरीशः॥१४॥
व्यानिम्नोत्तुङ्गशीर्षा बहुतरकपिशस्थूलकेशप्रचारा
चञ्चन्नीलाम्बुजाक्षी सुललितगमना तुङ्गवक्षोजभारा ॥
गम्भीरस्निग्धनाभिर्वलिभिरुपगता श्रोणिभारावनम्रा(६)
रम्या रन्ध्राङ्गुलीकैर्वहति च वडवा गुह्यरन्ध्रं पुरन्ध्री(७)॥१५॥
स्थूलाङ्गी स्थूलगण्डा लघुतरनयना भूरिमध्यात्मकेशा(८)

---

(१) सुसमयगदिनो इति पाठान्तरम्।
(२) वाञ्छया इति ग पु० पाठः।
(३) मीपद्द्विगुणनवमितैरिति घपु० पाठः।
(४) 'हृष्टा' ग पु० पाठः।
(५) पीवरास्याधराश्च घ पु० पाठः।
(६) भारालसाङ्गीति ग० पु० पाठ.।
(७) सेयं रन्ध्राङ्गुलीकं वहति रतगुहारन्ध्रकं वै तुरङ्गीति ग पु० पाठः।
(८) स्थूलनीलाल्पकेशा ग पु० पाठः।

बिम्बोष्ठी पीनबाहुः कठिनगुरुकुचा खर्वगर्भा(१)तिदुष्टा ॥
निर्लज्जा रासभोक्तिस्तरलितवदना सर्वदा कष्टसाध्या
निर्दिष्टा हस्तिनीयं वहति रविसमैरङ्गुलैर्गुह्यदेशम् ॥१६॥
बाला षोडशहायनी च तरुणी सङ्कीर्त्यते त्रिंशतं
पञ्चाशद्दतुवर्जिता क्रमतया प्रौढेति यावत्पुनः ॥
वृद्धाख्यामुपयाति सैव समये षष्ठिं च वर्षं ततो
निन्द्या सर्वकलाविशेषरहिता त्याज्या भवेद्गर्हिता(२) ॥१७॥
बाला नूतनसङ्गमे रतिकरी सान्द्रान्धकारे भवे-
दालोके मुदमातनोति तरुणी सम्भोगलीलाविधौ ॥
आलोके तु सुखायते(३) सरभसं प्रौढा तमिस्रेऽङ्गना
वृद्धा जीवितहारिणी न कुरुते कुत्रापि सौख्यं मनाक् ॥१८॥

इति स्त्रीस्वरूपस्वभावसमुद्देशः ॥

## अथ देशविशेषनायिकालक्षणप्रकरणम्(४) ।

रूक्षाङ्गी बहुवल्गिनी(४) चलमतिः शीतप्रिया (५)वातुला
शैलाम्भोनिधिपार्श्वदेशवनिता प्रायो भवेदीदृशी ॥
वर्षायां कुसुमाकरे च बहुशः (६)सेव्या पुनः प्रीतिदा
गुर्वाहारसुगन्धिमाल्यवसनस्निग्धाङ्गरागादिभिः ॥ १९ ॥
गूढग्रन्थिरहर्निशं हि सकले गात्रे वहत्युष्णता(७)-

---

(१) हीनपर्वा ग पु० पाठः ।
(२) षोडशवर्षां बालामित्यालपन्ति धीमन्तः ।
विंशत्यब्दा तरुणी त्रिंशत्प्रौढा ततः परं वृद्धा ॥
इति ग०पु० पाठः
(३) आलोके सुखमातनोति इति ग० पु० पाठः ।
(४) वादिनीति ग० पु० पाठः ।
(५) गतिप्रियेति घ० पु० पाठः ।
(६) अम्भोदागमपुष्पकालसमये इति घ० पु० पाठः ।
(७) त्यच्छतामिति ग० पु० पाठः ।

मम्भोजप्रसवारुणोत्तमकरा शीतानिलप्रेयसी(१) ॥
सौराष्ट्रान्ध्रकलिङ्गसिन्धुयुवतिः(२) कामं भवेत्पित्तला
हेमन्ते शिशिरे नरैरनुदिनं सेव्या च साकाङ्क्षया ॥२०॥
ज्ञेया कोकिलकाकलीकलरवा मेदस्विनी शीतला
निद्रालुश्च शिरीषकोमलतनुः स्निग्धानना श्लेष्मला ॥
वङ्गस्त्री(३) हठकामरूपतरुणी शीतादिना सान्धिता
गन्तव्या शरदि प्रकृष्टमदना ग्रीष्मे नरैरादरात् ॥ २१ ॥
रक्तोत्तीर्णवपुर्महाविरहिणी षण्मासगर्भालसा
मासिकप्रसवा नवज्वरवती कोपप्रसन्ना तथा ॥
अव्यायामवती वसन्तसमये वर्षागमे सेविता
प्रायो रागवती कुरङ्गनयना स्यादल्पसाध्या रते ॥२२॥
सङ्क्षेपादिति गोणिकासुतमतं तत्त्वं प्रकाशीकृतं
क्षेमेन्द्रस्य च रन्तिदेवकथितादाकृष्य सारं पुनः ॥
किञ्चित्पल्लवयामिनीरुजदृशां देशस्वभावादिकं
यद्विज्ञाय मनोजकेलिषु चिरं नन्दन्ति विद्वज्जनाः(४)॥२३॥
शुचिचरितविचित्रा(५) चित्रसम्भोगमित्रा
नखदशनविरक्ता शिल्पशिक्षानुरक्ता ॥
सितवसनसुगन्धिः(६) कामसर्वस्वसिन्धु-
र्भवति रुचिरवेषा कामिनी मध्यदेशा ॥ २४ ॥
कुचकचकरजाग्राश्लेषविन्यासदक्षा

(१) अरुणोत्पलकरा शीतालये प्रेयसीति ग० पु० पाठः।
(२) सौराष्ट्री च कलिङ्गदेशयुवतिः इति ग० पु० पाठः।
(३) वङ्गश्रीहठकामरूपतरुणी शीतादिकालं विनेति ग० पु० पाठः। (४) पद्यद्वयमिदं ग पुस्तके न दृश्यते।
(५) रुचिररचितचित्रा इति क पु० पाठः।
(६) स्थिरमतिनिजबन्धुरिति ग पु०, स्थितमतिनिजबन्धुरिति ख घ पु० पाठः।

सकलसुरतबन्धज्ञानवैदग्ध्यदक्षा(१) ॥
नलघुनगुरुवेगा प्रायशः कामरक्ता
रमयति मधुरालपं सुन्दरी हन्त गौडी(२) ॥ २५ ॥
मृदुवचनविभागा कोमलानङ्गरागा
विगतरमणभीतिः कोकिलालापगीतिः ॥
द्रवति झटिति कान्ता चित्रसम्भोगशान्ता
रमयति किल गौडी कीर्तिता वङ्गगौरी(३) ॥ २६ ॥
करतलहतितुष्टा बाह्यसम्भोगहृष्टा
चिरनिधुवनसाध्या मालवी धूर्तराध्या(४) ॥
सुखयति खरवेगा व्यञ्जितानङ्गरागा
चपलपिशुनशीला(५) स्यादियं चोलबाला ॥ २७ ॥
कुवलयदलवर्णा चारुताटङ्ककर्णा
चकितहरिणनेत्रा फुल्लराजीववक्त्रा ॥
लघुनिधुवनरक्ता बाह्यसम्भोगसक्ता
सुललितगति(६)रेषा गुर्जरी चारुवेषा ॥ २८ ॥
अलस(७)वलितदृष्टिर्दिव्यरूपाङ्गयष्टिः
कठिनमदनगेहा(८) दुःखसाध्या प्रयोगे(९) ॥
विरमति सुरतान्ते कोपमायाति कान्ते(१०)

---

(१) करकुचकरजाताश्लेषविन्यासदक्षा सकलसुरतसिन्धुज्ञानवैराग्यदक्षेति ग० पु० पाठः ।

(२) रमयति किल कौली कीर्तिता वङ्गगौडीति घ० पु० पाठः ।

(३) गौडीति घ पु० पाठः । पद्यमिदं ग० पुस्तके नास्ति ।

(४) वाक्या इति ग० पु० पाठः ।

(५) लोला इति ग० पु० पाठोऽसङ्गत इव ।

(६) यतिरिति क पु० पाठः । (७) अमलेति ग० पु० पाठः ।

(८) वेगा इति ग० पु० पाठः ।

(९) दुःखसाध्यप्रयोगेति घ पु० पाठः ।

(१०) नित्यमिति घ पु० पाठः ।

विविधपुरुषलोला सैन्धवी दुष्टशीला ॥ २९ ॥
विपुलकरज(१)दात्री दुष्टवाक्याभिधात्री
विषमसुरतपात्री निश्चितं कालरात्री ॥
इति भवति पुरन्ध्री कोशलावन्तिकान्ध्री
कुवलयनिरतार्ताः सर्वथा पूर्ववृत्ताः(२) ॥ ३० ॥
पिकरवमृदुवाचः(३) कोमलाङ्ग्यः सुरम्याः
व्यपगतभयलज्जाः साहसिन्यः स्वतन्त्राः ॥
लघुनिधुवनसाध्याश्चीनसौवीरभद्र(४)-
द्रविडमलयजातास्तुल्यरूपास्तरुण्यः ॥ ३१ ॥
सकलसुरतशिक्षासिद्धसौभाग्यवश्यो(५)
दशनवसनपानप्रीतिभाजः सलज्जाः ॥
करजलिखनदक्षाश्चण्डवेगाभिरामा(६)ः
कुसुमपुरभवाः(७) स्युर्मद्रतैलङ्गनार्यः ॥ ३२ ॥
सुरतरसविमर्दाः प्रेमवत्यः(८)प्रचण्डाः
करजदशनकेशश्लेषणज्ञानहीनाः(९) ॥
सहजमलिनचित्ताः पौण्ड्रकाम्बोजजाताः
करतललयतुष्टाः कामरूपाङ्गनाः स्युः ॥ ३३ ॥

---

(१) पुलककरज इति ग० पु० पाठः ।

(२) वन्तिका स्त्री कवलयति रतार्ता श्रूयते पूर्ववार्ता इति ग० पु० पाठः । (३) पिकवरमृदु ग० पु० पाठः ।

(४) श्चीनसौवीरभेद इति ग० पुस्तके, स्युर्न सोदारभेदा इति घ० पु० पाठः ।

(५) सुरतदक्षाः सिद्धिसौभाग्यवश्या इति ग० पु० पाठः । सौभाग्यदक्षा इति च घ पु० पाठः ।

(६) भिरम्या इति ग पु० पाठः ।

(७) कुसुमसुरमयः इति ग पु० पाठः ।

(८) विमर्दप्रेमवत्य इति ग० पु० पाठः ।

(९) श्लेषसंज्ञाविहीना इति ग पु० पाठः ।

गाढं संश्लिष्य कण्ठे लिखति कररुहैः सर्वतः कान्तगात्रं(१)
केशेष्वाकृष्य चुम्बत्यधरमविरतं मुष्टिघातं ददाति ॥
तृप्तिं नायाति शीघ्रं द्रवति न च रते चण्डवेगा प्रगल्भा
ज्ञातव्या पण्डितेन्द्रै रतिकलिलमति(२)र्नाटकार्णाटनारी ३४
दुष्टा दुर्गन्धदेहाः पशुसमसुरताश्चुम्बनाश्लेषहीनाः
सर्वाः म्लेच्छाङ्गनाः स्युर्लघुसुरतरताः(३) पार्वतीयाश्च नार्यः॥
काश्मीराश्मीरजाद्याः सकलरसकलाकौतुकामोदहृष्टाः(४)
साध्या देशानुसारादिह पटुमतिभिर्योषितः सर्वदैव ॥ ३५ ॥
जातेस्तत्त्वं समस्तं निखिलशशिकलालोकनं(५) सत्त्ववृत्तिं
मृग्यादीनां वशित्वं मदनरसकलाकौशलादीनुपेत्य (६) ॥
इत्थं यः कामिनीनां कलयति चरितं देशसात्म्येन सम्यक्(७)
यावज्जीवं(८) स तस्याः प्रभवति हृदये प्राणनाथः स एव(९)॥३६॥

इति देशविशेषतः स्त्रीस्वभावसमुद्देशः ॥

## अथ प्रासङ्गिकं योनिस्वरूपसमुद्देशप्रकरणम्(४)।

स्पर्शेन पङ्कजसमस्तरुणीजनानाम्
अभ्यन्तरे च गुटिकासम एव कोऽपि ॥
योनिर्भवेदथ वलिप्रकरावकीर्णा
गोजिह्विकासुखदकर्कशगर्भदेशा ॥ ३७ ॥

---

(१) देहं केशाश्लेषनर्मप्रवीणा इति घ पु० पाठोऽसङ्गत एव वृत्तलक्षणहीनत्वात्। (२) रतिललितरतिरिति ग पु०पाठः।
(३) सेर्ष्या म्लेच्छाङ्गनाः स्युर्लघुरतनिरता इति ग पु०पाठः।
(४) भीरमध्या सकलरसकलामोदहन्त्री नितान्तमिति ग पु० पाठः योषित इत्यनेन हन्त्रीति एकवचनासङ्गत्याऽयुक्तः प्रतिभाति।
(५) बोधनं गपु० पाठः।
(६) कलाकौतुकं चाप्यशेषमिति ग०पु०पाठः।
(७) सात्म्यं निशम्येति कपु०पाठः।
(८) यावत्तावत्स इति गपु०पाठः। (९) सुखायेति गपु०पाठः।

अत्युत्तमा प्रकथिता प्रथमा कवीन्द्रै-
र्मध्या च मध्यमविधिः किल संप्रदिष्टा ॥
शेषद्वयी मदनकेलिकलावहित्वा(१)-
न्निन्द्या सदैव कथिता सुरतोत्सवेषु ॥ ३८ ॥

इति योनिस्वरूपसमुद्देशः ।

## अथ सामान्यधर्म-प्रीतिभेदसमुद्देशप्रकरणम्(५) ।

स्याद्भोजनं द्विगुणमेव नितम्बिनीनां
बुद्धिश्चतुर्गुणमिता सकलेऽपि कृत्ये ॥
सर्वत्र षड्गुणमिता व्यवसायचर्या
पुंसोऽष्टधा भवति मन्मथरागवेगः(२) ॥ ३९ ॥
वह्निर्न शाम्य(३)मुपयाति कदापि काष्ठै-
र्नाम्भोनिधिर्विरमति प्रचुरैः पयोभिः ॥
नाप्यन्तको जगति जन्तुभिरेति तुष्टिं (४)
रामापि नैव पुरुषैः खलु याति तृप्तिम्(५) ॥ ४० ॥
सौगन्धरागरतिभावमनःस्वभावमस्या न कोऽपि भुवने कथितुं समर्थः
सृष्टिर्विधातुरपरैव हि कामिनीनां पीयूषवह्निविषमारुतसंनिपातैः(६)४१
तस्मान्नरेण रतिरागविचक्षणेन
मायामुदस्य(७) सकलां स्वशरीरसाध्याम् ॥
तासां मनोहरणमेव परं विधेयं
नो वेद कोऽपि हृदयं हि विलासिनीनाम्(८) ॥४२॥

---

(१) केलिकलारसज्ञैरिति ग पु० पाठः । अत्र योनिशब्दस्य स्त्रीलिङ्गत्वात् गपुस्तके मुद्रितः अत्युत्तम इत्यादिपाठोऽसङ्गत एव ।
(२) इदं पद्यं गपुस्तके नास्ति । (३) शान्तिमिति गपु०पाठः ।
(४) तृप्तिमिति गपु०पाठः । (५) तोषमिति गपु०पाठः ।
(६) इदं पद्यं ग पु० न दृश्यते । (७) मुपास्येति गपु०पाठः ।
(८) किमु कामिनीनाम् इति गपु० पाठः ।

सम्भोगकर्मणि सदा पुरुषैः कृतज्ञैरारम्भतःप्रभृति कण्डुहरं भगस्य ॥
सप्रीतये निधुवनं परिसेवनीयमारोगविश्रमणमत्र कृशोदरीणाम्(१)॥

इति सामान्यधर्मसमुद्देशः ।

(२)नैसर्गिकी विषयजा प्रथमं भवेतां
तस्माद्भवेदपि समा च तथैव यूनोः ॥
आभ्यासिकी च कवयः कथयन्ति भेदं
प्रीतेश्चतुष्टयमिति प्रतिलक्षणेन ॥ ४४ ॥

नाभ्यासतो न च भवेद्विषयाभिमाना-
ज्जन्मान्तरीयसहजेन नरेण नार्याः ॥
प्रीतिः परस्परमतो निगडावधाना(३)
नैसर्गिकीति कथिता कविशेखरेण ॥ ४५ ॥

स्रक्चन्दनाम्बरविभूषणभक्ष्यभोज्यै(४)-
र्नानाविधैरुपचिता विषयैः सदैव ।
प्रीतिः स्मृता विषयजेति कविप्रवीरैः
सादृश्ययोगसुभगा कथिता समाग च ॥ ४६ ॥

आखेटशिल्पसुरपूजनकेलिरङ्ग-
सङ्गीतसेवनाविधावुपचीयते या ।
अभ्यासकौशलवशेन कृशोदरीणा-
माभ्यासिकीति कथिता(५)कविभिः पुराणैः ॥ ४७ ॥

इति प्रीतिकथनसमुद्देशः ॥

---

(१) इदमपि पद्यं नास्ति ग०पुस्तके ।

(२) प्रीतिभेदविधायकोयं श्लोको नास्ति गपुस्तके ।

(३) सहजा पुरुषस्य नार्यां प्रीतिः परस्परतया हृदयावनद्धा इति गपु०पाठः ।

(४) स्वरमनोहरभक्ष्यभोज्यैरिति ग पु० पाठः ।

(५) की निगदितेति ग० पु० पाठः ।

दारिद्र्यशोकभयविक्लवमानरोगै(१)-
रुद्वेगकोपतनुतादिभिरीश्वराणाम् ।
प्राय(२)स्त्यजन्ति वनिता इह विस्तरस्य
भीत्या न चास्य कथितः सकलो विवर्तः ॥ ४८ ॥

इति रागविरागसमुद्देशः(३) ॥

अथ सुगन्धौषधिसमुद्देशप्रकरणम्(६) ।

प्रायोऽङ्गरागः पुरुषेण कार्यः स्त्रियोपसम्भोगसुखाय गात्रे(४)।
तस्मादहं गन्धविधानमादौ विलासिनां सर्वमुदीरयामि ॥४९॥
हरीतकीलोध्रमरिष्टपत्रं सप्तच्छदो दाडिमवल्कलं(५)च ।
एषोऽङ्गनानां कथितः कवीन्द्रैः शरीरदौर्गन्ध्यहरः प्रलेपः ॥५०॥
हरीतकीचन्दनमुस्तनागैरुशीरलोध्रमपरात्रिमूलैः(६) ।
स्त्रीकामिनोर्घर्मजगात्रगन्धं विनाशयत्येष हठेन योगः(७) ॥५१॥
हरीतकी श्रीफलमूलयुक्ता(८) चिञ्चाफलं पूतिकरञ्जबीजम् ।
कक्षादिदौर्गन्ध्यहरं नराणां योगद्वयं गन्धविदो वदन्ति(९)॥५२॥
चिञ्चाफलं नागरुपत्रचूर्णं करञ्जबीजं च सुकुष्ठचूर्णम् ।
एतानि सर्वाणि हरन्ति शीघ्रं शरीरदौर्गन्ध्यमपि प्रभूतम्(१०)॥५३॥

---

(१) गात्ररोगैरिति ग० पु० पाठः ।

(२) रागं त्यजन्तीति ग० पु० पाठः ।

(३) गपुस्तकेऽत्रैव द्वितीयसायकसमाप्तिर्दृश्यते ।

(४) प्रागङ्गरागः...स्त्रिया च सम्भोगसुखाय रात्रौ इति ग० पु० पाठः ।

(५) सधातकीलोध्रमरिष्टपत्रं सचन्दनं दाडिमवल्कलं चेति ग पु० पाठः ।

(६) लोध्रोत्पलरात्रिमूलैरिति ग पु पाठः ।

(७) त्याशु विलेपनेनेति ग पु० पाठः ।

(८) फलमुस्तयुक्तमिति ग पु पाठः ।

(९) न्ध्यमपि प्रभूतं विनाशयत्याशु हठेन योगः इति ग पु०पाठः

(१०) पद्यमेतन्नास्ति ग पुस्तके ।

सचन्दनोशीरकवालपत्रैः(१) कोलास्थमज्जागरुनागपुष्पैः ।
लिप्त्वा शरीरं प्रमदा हठेन(२)चिरन्तनं गन्धमसौ निहन्ति॥५४॥
जम्बूदलं पीलुतरोः प्रसूनं खगेन तुल्यं मसृणं सुपिष्टम् ।
एतेन लिप्त्वा युवतीशरीरं घर्मं निहन्त्याशु निदाघकाले(३)॥५५॥
सदाडिमत्वग्लघुलोध्रयज्ञैः पिष्टैः समानैः पिचुमन्दपत्रैः ।
विलिप्य गात्रं तरुणी निदाघे दुर्गन्धिघर्माम्बुचयं(४) निहन्ति॥५६
सकेशरोशीरशिरीषलोध्रैश्चूर्णीकृतैरङ्गविलेपनेन
ग्रीष्मे नराणां न कदापि देहे घर्मस्रुतिः स्यादिति भोजराजः॥५७॥

इति दुर्गन्धिहरणसमुद्देशः ॥

आदौ बिल्वदलं ततो मरुवकं पुष्पाण्यशोकस्य च ।
प्रसादित्यमजस्रमेव हि रसैर्गाढीकृतैर्निःक्षिपेत्(५) ।
केतक्याः कुसुमानि तत्र च मुहुः शेषे क्षिपेत्कौशला(६)-
दित्थं कार्यमिदं महापरिमलं तैलं रतेः(७) सिद्धये ॥५८॥

सक्षोलजीमूतनखैः सचूतैः स्वर्णातसीपत्रकसंयुतैश्च ॥
सौरभ्यकान्ति किल मूर्द्धजानां स्नात्वा नरो विन्दति सर्वदैव ५९
स्वर्णाम्बुदोशीरमिषीयुतानां पथ्यायुतानां च विलेपनेन ।
स्नात्वा नरः सौरभमर्द्धमासं चैक्कण्यमाप्नोति(८)शिरोरुहाणाम् ६०
पथ्यारसालामलकीफलानां सजम्बुजीमूतदलामयानाम्(९) ।
मांसीयुतानां परिलेपनेन स्नायान्नरः सौरभकान्तिवृद्ध्यै ॥६१॥

इति स्नानीयसुगन्धिसमुद्देशः ॥

---

(१) बिल्वपत्रैरितिग०पु पाठः। (२) हवेनेति,ग पुस्तकपाठोऽसङ्गतः।
(३) पद्यमिदं न ग पुस्तके । (४) पचयमिति ग पु० पाठः।
(५) मेव हविषा ओटिस्तटां निःक्षिपेदिति ग पु०पाठः।
(६) मानि चेह मुहुशः शेषे क्षिपेदादरादिति ग पु० पाठः।
(७) नरैः इति ग० पु० पाठः।
(८) सौरभमेव मासाच्चैक्कण्यमिति ग० पु० पाठः।
(९) दलोत्पलानामिति ग० पु० पाठः।

हरीतकीतोयदतुल्यभागे(१)वनेचरस्यापि चतुर्थभागः ।
तदर्द्धभागः कथितो नखस्य स्यादेष गन्धो मदनप्रकाशः६२
एलाशचीपत्रक(२)चन्दनानि तोयाभयाशिग्रुघनामयानि(३) ।
ससौरभोऽयं सुरराजयोग्यः ख्यातः सुगन्धो नरमोहनाख्यः(४)६३
उशीरकृष्णागुरुचन्दनानि पत्राम्बुतुल्यानि(५)समानि पिष्ट्वा ।
(६)घृतानि गात्रेषु विलासिनीनां श्रीखण्डतुल्यं कथयन्ति गन्धम्६४

इति सामान्याङ्गरागसमुद्देशः ॥

क्षौद्रैलागुरुचन्दनामयशटीतोयाऽभयाकेशरैः
स्पृक्कोशीरतुरुष्कतोयदनिशामांसीत्वगेलाम्बुदैः ।
तुल्यैरेणमदेन गन्धकरणैः सर्वैरमीभिर्युतैः
पिष्ट्वा कार्यमिदं विलेपनमतः कुर्याज्जगन्मोहनम्(७) ॥६५॥

इति सर्वोत्तमसुगन्धिसमुद्देशः ॥

---

(१) भागैरिति ग० पु० पाठः ।
(२) शटीपत्रकेति ग० पु० पाठः ।
(३) तोयाभयाचन्द्रघनोत्पलानि इति ग० पु० पाठः ।
(४) अतः परं—
ऐणेयकाश्मीरघनाम्बुलोध्रनिशावरोशीरसमानि पिष्ट्वा ।
लेपः प्रियोऽयं सुरमानवानामुदीरितः पूर्वकवीन्द्रवर्यैः ॥
इत्यधिकं पद्यं ग पुस्तके ।
(५) घनानि ग० पुस्तके, शुभानीति घ० पुस्तके ।
(६) एतानि इति ग० पु० पाठः ।
(७) अत्र प्रकरणे—
जातीकंकटरक्तचन्दनघनश्रीवासशैलेयकं
कस्तुरीकनकं मतङ्गकुसुमैः स्थौणेयकैः संयुतम् ॥
एतानीन्दुयुतानि पर्णजरसैः पिष्टोऽङ्गरागः शुभः
कार्यो गन्धकलाकलापकुशलैः क्षोणीन्द्रयोग्यः सदा ॥१॥
पथ्याभागचतुष्टयं जलमुचो भागैकमात्रं मतं
जात्या भागयुतं तथैव शशिनः स्थौणेयभागद्वयम् ॥

रसालजम्बूफलगर्भसारः सकर्कटो माक्षिकसंयुतश्च ।
स्थितो मुखान्ते पुरुषस्य रात्रौ करोति सौरभ्यमसौ(१) मुखस्य ६६
चूतास्थिमज्जाकरिकेशरं च स्थौणेयजातीफलमाक्षिकाणि ।
पिष्ट्वा विधेया वटिका मुखस्था करोत्यपूर्वं वदनस्य वासम् ॥६७॥
चूर्णं वचाकेशरकुष्ठकानां प्रातर्दिनान्ते परिलेढि या स्त्री ॥
अभ्यर्धमासेन मुखस्य वासः कर्पूरतुल्यो भवति प्रकामम्(२) ॥६८॥

इति मुखवाससमुद्देशः ।

इति पञ्चसायकाख्यकामशास्त्रे रतिभेदादिनिरूपणो नाम द्वितीयः सायकः(३) ॥

---

## अथ तृतीयसायकः ।

### अथ वाजीकरणौषधिसमुद्देशप्रकरणम्(१) ।

आत्रेयार्जुनशाक्यसारणकविक्ष्मापालवागीश्वर-
व्याडीश्रीमतिमूलदेवमदनाचार्यादिविद्यावताम् ॥

---

भागाः पञ्च शिलाह्मकस्य कथिता भागो नखस्यापि च
कस्तूरीदलसंज्ञकं निगदितं सौरभ्यविज्ञैरिदम् ॥ २ ॥
पथ्याभागचतुष्टयं जलमुचो भागैकमात्रं सदा
श्रीखण्डागरुजातिका मृगमदस्योक्ताश्च भागास्त्रयः ॥
मांसीपत्रतुषारवालकमसैः सम्यक्तया पेषितः
सर्वैरेभिरिहोत्तमः प्रकथितः सौरभ्यगर्भाभिधः ॥ ३ ॥
इत्यधिकं पद्यत्रयं ग० पुस्तके।

(१) सुखं ग० पु० पाठः ।
(२) अत्र
गुडत्वगेलानलजातिकाद्यैः स्मर्णान्वितैः क्षुद्रवटी विधेया।
ताम्बूलगर्भा दिवसे च रात्रौ करोति पुंसां मुखवासमिष्टम्॥१॥
यः कुष्टचूर्णं मधुना घृतेन पिकाम्रबीजान्वितमात्ति नित्यम् ।
मासैकमात्रेण मुखं तदीयं गन्धायते केतकिपुष्पतुल्यम् ॥ २ ॥
एतत्पद्यद्वयं दृश्यते ।
(३) अत्रैव ३सायकसमाप्तिः घ पुस्तके द्रष्टव्या ।

ग्रन्थानेकमहं विलोक्य वहुशो विश्वोपकारक्षमं
वक्ष्ये सर्वविधोपदेशकुशलं योगाधिकारं स्फुटम्(१) ॥ १ ॥
वलेन नारी परतोषमेति न हीनवीर्येण कदापि सौख्यम् ।
अतो वलार्थं रतिलम्पटस्य वाजीविधानं(२) प्रथमं विदध्यात् ॥२॥
छागाण्डसिद्धे पयसि प्रकामं ये भाविताः सूर्यकरेण शुष्काः ।
माषास्तदीयं वटकं घृतेन संसाधितं यस्त्रिफलाम्बुशीतम् ।
भुक्त्वा प्रदोषे स्थविरोऽपि चूर्णं नितम्बिनीनां च शतं प्रयाति(३)॥३॥
चूर्णं विदार्याः स्वरसेन शुष्कं विभावितं भास्कररश्मिजालैः(४)।
मध्नाज्यसम्मिश्रितमाशु लीढ्वा दश स्त्रियो गच्छति निर्विशङ्कः ॥४॥
भूयो विभाव्यामलकस्य चूर्णं रसेन तस्यैव सिताज्यमिश्रम् ।
सक्षौद्रमालेढि निशामुखे यो नूनं स वृद्धस्तरुणत्वमेति ॥५॥
कर्षप्रमाणं मधुकस्य चूर्णं क्षौद्राज्यसंयोजितमेव लीढ्वा ॥
क्षीरानुपानं रमयेत तावद्यावन्नराणामुदरस्थमेतत्(५) ॥६॥
शतावरीगोक्षुरवानरीणां गोरक्षमातङ्गबलाञ्जनानाम्(६) ।
क्षीरेण चूर्णानि निपीय रात्रौ मथ्नाति दर्पं तरुणीशतानाम् ॥७॥
यो वर्तकीलावकपिञ्जलानां मांसं तथा वेश्मविहङ्गमस्य ।
घृतेन सिद्धं सह सैन्धवेन महावलं स्यादुपभुज्यमानात्(७) ॥८॥
शतावरीगर्भमिदं च सर्पिः पचेत्पयोभिर्दशभागयुक्तैः ।
सितोपलाभ्यां मधुसंप्रयुक्तं नास्माद्द्वितीयं भुवि वृष्यमुक्तम्(८)॥९॥

---

(१) एतत्पद्यं नास्ति ग पुस्तके ।
(२) वीजाभिधानमिति ग पुस्तकपाठोऽसङ्गतः ।
(३) षष्ठपादात्मकं पद्यमिदं ग पुस्तके नास्ति ।
(४) तस्याः सम्भावितं भास्कररश्मिजाले इति पु० पाठः ।
(५) पद्यमिदं नास्ति ग पुस्तके ।
(६) वलावलानाम् ग पु० पाठः ।
(७) महावलः स्यादुपभुज्य नूनं इति ग पु० पाठः ।
(८) इदं पद्यं नास्ति ग० पुस्तके ।

सितपिकतरुबीजं तण्डुलाः षष्टिकानां
सघृतमधुसमेतं प्रत्यहं योऽवलेढि ॥
जठरकुहरमध्ये याति यावन्न पाकम्
रमयति कृशदेहोऽप्यङ्गनानां समूहम् (१) ॥ १० ॥

इति वाजीकरणसमुद्देशः ॥

## अथ योनिसङ्कोचनौषधिसमुद्देशप्रकरणम्(२)।

प्रौढाङ्गनाया नवसूतिकायाः श्लथे वराङ्गे न सुखं नरस्य।
तस्माद्विधेयं सुखिभिः प्रयत्नात्सङ्कोचनं मन्मथमन्दिरस्य(२) ॥११॥

निशाद्वयं पङ्कजकेशरं च निष्पिष्य देवद्रुमतुल्यभागम्।
अनेन लिप्तं मदनातपत्रं प्रयाति सङ्कोचमलं युवत्याः ॥१२॥

सधातकीपुष्पफलान्विकेन जम्बूत्वचा सावरसंयुतेन(३)।
लिप्त्वा वराङ्गं मधुकेन तुल्यं वृद्धापि कन्येव भवेत्पुरन्ध्री ॥१३॥

पिकाक्षबीजेन मनोजगेहं विलिप्य योषा नियमं चरन्ती।
हठेन गाढं लभते वराङ्गं दृष्टः सदाऽयं किल योगराजः(४) ॥१४॥

सनालपद्मं पयसा सुपिष्ट्वा दृढा समाङ्गी गुटिका विधेया।
यस्या वराङ्गे निहितो क्षणेन कन्या भवेत्सा किल कामिनी च ॥१५॥

---

(१) अत्र—

मांसीं विदारीं च तथोच्चटां च क्षीरे गवां क्षौद्रघृतोपपन्नाम्।
पीत्वा नरः शर्करया सुयुक्तां कुलिङ्गवत् हृष्यति सर्वरात्रिम् ॥१॥

लघुशाल्मलिमूलेन तालमूलीं सुचूर्णिताम्।
सर्पिषा पयसा पीत्वा रतौ चटकवद्भवेत् ॥ २ ॥
वृद्धशाल्मलिमूलस्य रसं शर्करया पिबेत्।
एतत्प्रयोगात्सप्ताहाज्जायते रेतसोऽम्बुधिः ॥ ३ ॥

इति पद्यत्रयमधिकं ग पुस्तके।

(२) श्लथं वराङ्गं न सुखाय यूनाम्। तस्मान्नरैर्भेषजतो विधेया गाढक्रियामन्मथमन्दिरस्य इति ग० पु० पाठः।

(३) अत्र त्वचासारसमैर्युतेनेति ग० पु० पाठोऽसङ्गतः।

(४) तदङ्गं दृष्टो नरैरेष सदैव योग इति ग पु० पाठः।

निर्घातलोहस्य निधाय तोये निःक्षिप्य शम्बूकगणं सबीजम् ॥
सप्ताहमात्रं नियमेन गुह्यप्रक्षालनात् गाढतरं प्रदिष्टम् ॥ १६ ॥
इक्ष्वाकुबीजं सहसा नरेण पिष्ट्वा वराङ्गं परिलिप्य तेन ॥
नवप्रसूतापि हठेन नारी कन्या भवेत्सा नियता न चित्रम् ।१७।
कृष्णाहिवक्त्रे हयमूत्रदिग्धां मृदं विनिःक्षिप्य विधानयोगात् ॥
प्रियश्च वध्वा निशि नीलसूत्रैस्तस्या वराङ्गं कुरुते प्रगाढम्(१) ।१८।
इन्दीवरव्याधिविरोपणानां तुरङ्गगन्धामलयामिनीनाम्(२) ।
लेपेन नार्याः स्मरमन्दिरं(३) तु सङ्कोचयत्येष हठेन योगः ॥१९॥
सशक्रगोपं स्वयमेव पिष्ट्वा विलेपयेत्स्त्री स्ववराङ्गदेहम्(४) ।
अह्नाय तस्याः कठिनं च गाढं भवेच्च नात्रास्ति विचारचर्चा(५)२०

मदफलघन(६)सारैः क्षौद्रतुल्यैर्वराङ्गं
शिथिलितमपि यत्ना(७)त्पूरितं भूय एव ॥
भवति कठिनमुच्चैः कर्कशं कामिनीना-
मिति निगदति योगं रन्तिदेवो नरेन्द्रः ॥ २१ ॥

इति गाढीकरणसमुद्देशः ॥

## अथ कामिनीद्रावणौषधिसमुद्देशप्रकरणम्(३)

यद्यप्यष्टगुणाधिको निगदितः कामोऽङ्गनानां सदा
नो याति द्रवतां तथापि झटिति व्यवायिनां सङ्गमे ।
तस्माल्लेपजसम्प्रयोगविधिना संक्षेपतो द्रावणं

---

(१) एतत्पद्यचतुष्टयं ग० पुस्तके नास्ति ।

(२) व्याधिवचोपणानां तुरङ्गगन्धाह्वययामिनीनाम् इति ग०पु० पाठः, रजनीहयानामिति घ पु० पाठः ।

(३) स्मरवेश्मरन्ध्रं इति ग पु० पाठः ।

(४) विलिम्पति स्त्री कुसुमेषुवेश्म ग० पुस्तके, लिम्पेत्स्वकीयं कुसुमेषुवेश्म इति च घ पु० पाठः ।

(५) आहत्य काठिन्यमलं च गाढं भवेच्च नात्रास्ति विकल्पसत्ता इति ग० पु० पाठः ।

(६) मदनकघनेति ग पु० पाठः । (७) स्वया इति गपु० पाठः ।

किञ्चित्पल्लवयामिनीरजदृशां(१) प्रत्यायकं कामिनोः ॥२२॥
सिन्दूरचिञ्चाफलमाक्षिकाणि तुल्यानि यस्या मदनातपत्रे ।
निःक्षिप्यते सा(२) पुरुषप्रसङ्गात् प्रागेव रेतःस्रुतिमातनोति ॥२३॥
व्योषारजः (३)क्षौद्रसमन्वितं च क्षिप्तं यदीये स्मरपत्रगेहे(४)
द्रुता भवेत्सा हठमेव नारी दृष्टः सदायं किल योगराजः ॥२४॥
जातीरसं शङ्करबीजमुच्चैः सुमर्दितं कामगृहस्य मध्ये ।
साध्या विनिःक्षिप्य रमेदकाण्डं सा शुक्रवर्षं विदधाति नारी ॥२५॥
सुपक्वचिञ्चाफलघोषधूलिं गुडं तथा माक्षिकतुल्यभागम् ।
अमीभिरालिप्य नरः स्वलिङ्गं रतिं करोत्याशु नितम्बिनीनाम् २६
सटङ्कनैः क्षौद्रमहेशबीजैः कर्पूरतुल्यैरुपलिप्य लिङ्गम् ।
शेते नरो यः स विलासिनीनां रेतःप्रपातं कुरुते हठेन(५) ॥२७॥
अगस्त्यपत्रद्रवसंयुतेन मध्वाज्यसम्मिश्रितटङ्कणेन ।
लिप्त्वा ध्वजं यो रमतेऽङ्गनायाः सा शुक्रमावर्षति शीघ्रमेव॥२८॥
सलोध्रधत्तूरकपिप्पलीनां क्षुद्रोषणाक्षौद्रविमिश्रितानाम् ।
लेपेन लिङ्गस्य करोति रेतश्च्युतिं(६) विपक्षप्रमदाजनस्य ॥२९॥
व्योषारजो माक्षिककाकवन्ध्या पिष्ट्वा हठाद्यः परिलिप्य लिङ्गम् ।
प्रौढाङ्गनाः पञ्च विमोहयेच्च सा कामिनी स्पन्दयतीति दृष्टम्(७)।३०
सिद्धार्थमञ्जिष्ठतुरङ्गमानां जातीप्रसूनं च जलेन पिष्ट्वा ।
विलिप्य लिङ्गं प्रमदामुपेयात्स्पर्शेन रेतः क्षरति प्रकामम् ॥३१॥
तुरगसलिलमध्ये भावितं क्षेत्रमाषं
मरिचतुलनतुल्यां पिप्पलीं पेषयित्वा ॥

---

(१) पल्लवदायि पङ्कजदृशामिति ग पु० पाठः ।
(२) क्षिप्तानि वै सा घ० पु० पाठोयुक्तः ।
(३) व्योषं रजः इति घ० पु० पाठः ।
(४) मदनातपत्रे इति ग० पु० पाठः ।
(५) पद्यत्रयमिदं नास्ति ग० पुस्तके ।
(६) रेतःस्रुतिमितिग०पु०पाठः। (७) इदं पद्यं नास्ति ग०पुस्तके ।

परिरमति विलिप्य स्वीयलिङ्गं नरो यः
भवति स वनितानां कामकल्लोलमाला(१) ॥ ३२ ॥
तुषकणपरिमिश्रैर्बीजपूरस्य मूलै-
र्दिवसकरमयूखैर्मर्दितं वेश्मनीरम् ॥
द्रवति झटिति कान्ता योगराजस्य
योगादिति वदति तदार्यो रन्तिदेवो नरेन्द्रः(२)॥३३॥

इति द्रावणसमुद्देशः ।

## अथ ध्वजस्थूलदृढीकरणौषधिसमुद्देशप्रकरणम्(४) ।

सकुष्ठमातङ्गबलाञ्जनानां(३) वचाश्वगन्धागजपिप्पलीनाम् ।
तुरङ्गशत्रोर्नवनीतयोगाल्लेपेन लिङ्गं मुशलत्वमेति(४) ॥ ३४ ॥
सलोध्रकाशीसतुरङ्गगन्धा तुरङ्गशत्रोः परिपाचितेन(५) ।
तैलेन वृद्धिं परियाति शीघ्रं वराङ्गना लोकनलोभनीयम्(६)॥३५॥

इति लिङ्गस्थूलीकरणसमुद्देशः ॥

हयारिसन्धानवनीतमध्ये(७) वचाबलानागबलामयैश्च ।
लेपेन लिङ्गं सहसैव पुंसां लोहोपमं स्यादिति दृष्टमेतत् ॥३६॥
यः कर्कटीमूलमजाजलेन व्यामुक्तकेशश्शयने निशायाम् ।

---

(१) पद्यद्वयमेतन्नास्ति ग० पुस्तके ।

(२) भेषजस्यास्य योगादिति ग पुः पाठः, वदति नरेन्द्रो रन्ति-देवः कवीन्द्रः इति चाऽत्र ग० पु० पाठः ।

(३) बलाबलानामिति ग पु० पाठः ।

(४) अतःपरं—
किमत्र चित्रं यदि ब्रह्मवल्लीवचाश्वगन्धाजलशूकचूर्णम् ।
उन्मत्तबीजं बृहतीफलाढ्यं क्षणेन कुर्यान्मुशलप्रमाणम् ॥
इत्यधिकं ग पुस्तके ।

(५) हेमप्रसूनैः परिपाचितेन इति ग पुस्तके, मातङ्गगन्धाप-रिपाचितेनेति च घ पु० पाठः ।

(६) खलु याति लिङ्गं वराङ्गना लोकनमोहनं चेति ग०पु०पाठः

(७) हयारिपत्रं नवनीतमध्ये इति ग पुस्तके ।

पिष्ट्वा ध्वजं लिम्पति तस्य कामं भवेदयोदण्डमिव क्षणेन ॥३७॥
इति दृढीकरणसमुद्देशः ॥

## अथ वीर्यस्तम्भनौषधिसमुद्देशप्रकरणम् (५) ।

पुष्योद्धृतं श्वेतपिकाख्यबीजं कटीतटे लोहितसूत्रबद्धम् ।
वीर्यस्रुतिं वारयति प्रसङ्गे दृष्टः सदाऽयं किल योगराजः ॥३८॥

लघुशाल्मलिमूलेन तालमूलीसचूर्णितम् ।
सर्पिषा पयसा पीत्वा नरश्चटकवद्भवेत् ॥ ३९ ॥
वृद्धशाल्मलिमूलस्य रसं शर्करया पिबेत् ।
एतत्सप्ताहयोगेन जायते रेतसोऽम्बुधिः॥ ४० ॥

पीता निशायां पयसा नरेण सञ्जातवेगालुफलस्य मज्जा ।
स्तम्भाति वीर्यं सहसा प्रचण्डं सेतुर्यथा निर्झरिणीप्रवाहम्(१) ४१
क्षीरेण वस्तस्य च वत्समूलं(२)लज्जालुमूलं स्वयमेव पिष्ट्वा ।
यस्तेन(३)पादौ परिलिप्य शेते रेतो न तस्य द्रवते कदापि॥४२॥
श्वेतान्यकृष्णाख्यतरोर्दलानि(४) क्षीरेण पिष्ट्वा वटपादपस्य ।
करञ्जबीजोदरमध्यगानि स्तम्भाति(५) वीर्यं वदने धृतानि ॥४३॥
आदित्यवारोद्धृतसप्तपर्णवृक्षस्य बीजं विनिधाय वक्त्रे ।
जयत्यकाण्डं सुरतावतारे देवारिमन्त्रीखरतीव्रवेगम् ॥ ४४ ॥
कौसुम्भतैलेन विलिप्य पादौ यदृच्छया दीप्यति वद्धवीर्यः ।
पुनर्नवाचूर्णविलेपनेन जहाति वीर्यं न कदाचिदेव(६)॥४५॥
श्वेतेषुपुंखाचरणं(७)गृहीत्वा पुष्यार्कयोगे पुरुषस्य कट्याम् ।

---

(१) यः कर्कटीत्यारभ्य पद्यपञ्चकं ग पुस्तके नास्ति ।
(२) वस्रस्य च वत्समातुरिति क पु पाठः ।
(३) यत्तु स्वपादौ इति ग पु० पाठः ।
(४) श्वेतेपुपुंखाख्यतरोः फलानीति ग पु० पाठः ।
[५) वध्नन्ति इति ग पु० पाठः । ( ६ ) पद्यद्वयं न ग पुस्तके ।
( ७ ) श्वेतेपुपुष्पाचरणं इति क० पुस्तके ।

कुमारिकाकर्तितसूत्रकेण वद्धं न यात्याशु मनोजवीजम्ः(१)॥४६॥
आदाय कृष्णेतरकाकजङ्घामूलं सिताम्भोरुहकेशरं च ।
क्षौद्रेण पिष्ट्वा परिलिप्य नाभिं स्तम्भं प्रयायात्पुरुषस्य(२)वीजम् ४७
कर्पूरशम्पाकमहेशवीजैर्वद्धेन्दुवीजं पुरुषस्य नाभौ ।
विलिप्य कान्ताजघने च कामं न लम्वते शुक्रमधः कदापि ४८
इन्द्रवारुणिकामूलं पुष्ये नग्नः समुद्धरेत् ।
कटुत्रयैर्गवां क्षीरैस्सुपिष्ट्वा गोलिकीकृतम् ॥ ४९ ॥
छायाशुष्कं स्थितं वक्रे वीर्यस्तम्भकरं नृणाम् ।
सूरणं तुलसीमूलं ताम्बूलैः सह भक्षयेत् ॥ ५० ॥
न मुञ्चति नरो वीर्यमेकैकेन न संशयः ।
वीजमीश्वरलिङ्गयास्तु सूतं वृश्चिककण्टकः ॥ ५१ ॥
क्षिपेत्पूगफलस्यान्तस्त्रिलोहैस्तच्च वेष्टितम् ।
जिह्वोपरि स्थिते तस्मिन्नरो वीर्यं न मुञ्चति ॥ ५२ ॥
हिमशिशिरवसन्तार्द्धे वर्षार्द्धे वृष्टिसंयुते ।
वीर्यं स्तम्भयते कामी कालात्पञ्चत्रिपर्ययम् ॥ ५३ ॥
मूत्रकृच्छ्रं च दाहं च मोहोऽङ्गऽजडता पुनः ।
तस्मात्कालविचारेषु वृद्धां वेश्यां च वर्जयेत्(३)॥ ५४ ॥
इति वीर्यस्तम्भनसमुद्देशः ॥

## अथ वशीकरणतिलकौषधिसमुद्देशप्रकरणम्(६)

माञ्जिष्ठतोयदवचासितभानुमूलैः ।
स्वीयाङ्गशोणितयुतैः समकुष्ठकैश्च ।
कृत्वा ललाटफलके तिलकं कृतज्ञो
लोकत्रयं वशयति क्षणमात्रकेण ॥ ५५ ॥

---

(१) वीरमिति ग पु० पाठः ।
(२) प्रयात्याशु नरस्येति ग पु० पाठः ।
(३) कर्पूरेत्यारभ्येतदन्तः पाठो नास्ति ग पुस्तके ।

मूलं जटातगरिमषोवषाणिकानां
पञ्चाङ्गजं निजशरीरमलं तथैव ।
एकीकृतानि मधुना च दिने कुजस्य
कुर्वन् ललाटतिलकं वशयेज्जगन्ति ॥ ५६ ॥

गोरोचनाकुसुमशोणितभाविताया:
तस्याः सदैव तिलकः कुरुते वशित्वम् ।
वात्स्यायनेन बहुधा प्रमादाजनानां
सौभाग्यकृत्यविषये प्रकटीकृतोऽसौ ॥ ५७ ॥

शोकावलाकुजदिनाधरणीधरस्य
सम्भावनाद्यदिवसंयुतयेनयत्नात् ।
यस्यानने विलिखितं तिलकं तदीयं
सर्वे जनास्सपदि तस्य वशीभवन्ति ॥ ५८ ॥

शम्भोर्जलं च मधुकं च कृताञ्जलिं च
द्रव्यं समं निजशरीरमलेन मिश्रम् ।
आलेपभक्षणविधौ तिलके कृते वा
योगोऽयमेव भुवनानि वशीकरोति ॥ ५९ ॥

गोवत्सिकाचरणमेहनताशिखानां
चेतःशिलासुरभिरोचनसम्पदानाम् ।
व्योमं गते निशि कुमारिकया सुपिष्टं
चूर्णं करोति तिलकेन वशी त्रिलोकम्(१)॥ ६० ॥

इति तिलकसमुद्देशः ।

अथ वशीकरणाञ्जनौषधिसमुद्देशप्रकरणम्(७) ।

देवीमहोत्सवदिने किल कज्जलं(२)यत्
सिद्धार्थकस्य च रसेन नरोत्तमाङ्गे ।

(१) मूलमित्यारभ्य पद्यपञ्चकमेतन्नास्ति ग पुस्तके ।
(२) तिलकाञ्जनं यदिति ग पु० पाठः ।

निष्पातितं नरवरेण निशि श्मशाने
तन्नेत्रगं भुवनमेव वशी करोति ॥ ६१ ॥
तालीसकुष्ठतगरैः परिलिप्य वर्त्तिं सिद्धार्थतैलसहितां दृढपट्टबद्धाम्।
पुंसः कपोलफलके विनिपातितेन तेनाञ्जनेन वशतां किल याति लोकः
चेतःशिलायुवतिकेशररोचनाभि-
र्यो लोचनं नरवरोऽञ्जति सम्मुखस्थः।
तस्याः स दास इव याति वशं मनुष्यो
योगो मयाऽत्र लिखितो हरमेखलायाः ॥ ६३ ॥
चेतःशिला सफलिनी रविपुष्ययोगे गोरोचना च गजकेशरजं रजश्च ।
एकीकृतं सुविहितं नयनाञ्जनोऽयं स्त्रीकान्तयोरनुदिनं वशतां करोति
पृथ्वीशिवेक्षणफलं जमलं जलौका
संवृत्य पट्टवसनं परिकल्प्य वर्त्तिम् ॥
संसाधितं तिलजलेन यदञ्जनं त
त्संमोहयेन्नयनगं वनितासमूहम् (१) ॥ ६५ ॥
इत्यञ्जनसमुद्देशः ॥

## अथ वशीकरणचूर्णौषधिसमुद्देशप्रकरणम् (८)।

कुष्ठोत्पलं च मधुकस्य च पक्षयुग्मं (२) मूलं तथा तगरजं सितकाकजङ्घा।
यस्याः शिरोगतमिदं विहितं सुचूर्णं
दासीभवेज्झटिति सा तरुणी न चित्रम् ॥ ६६ ॥
वास्थान्तिकोत्थितदलं मृतकस्य माल्यं
सौगन्धवानरमलं भ्रमरस्य पक्षौ ॥
चूर्णं विधाय शिरसि प्रविकीर्णमेतत्
यस्याः सदैनमनुधावति पृष्ठतः सा ॥ ६७ ॥
सप्तच्छदस्य रसशोषितटङ्कणेन क्षौणेयकृष्णत्रयसा हृदयस्य चूर्णम्।

(१) अञ्जनविधावष्येतत्पद्यचतुष्टयं तालीसेत्यारभ्य ग पुस्तके नास्ति। (२) पत्रयुग्ममिति ग० पु० पाठः।

एकीकृतं शिरसि गोपनया प्रकीर्णं
व्यामोहयेद्गुरुकुलं किमु कान्तमेकम्(१) ॥ ६८ ॥

इति चूर्णसमुद्देशः ॥

अथ वशीकरणलेपनौषधिसमुद्देशप्रकरणम् (९)।

भृङ्गस्य पक्षयुगलं शुकमांसयुक्तम्
स्वानामिकारुधिरकर्णमलं सबीजम्।
एतानि लेपविधिनाऽप्यथ भक्षणाद्वा
कुर्वन्ति वश्यमखिलं जगदप्यकस्मात्(२) ॥ ६९ ॥

सव्येन(३) पाणिकमलेन रतावसाने(४)
यो रेतसा निजभवेन विलासिनीनाम्।
वामं विलिम्पति पदं सहसैव वश्या
तस्यैव सा भवति नात्र विकल्पभावः ॥ ७० ॥

सम्भोगशेषसमये निजकान्तमेढ्रं
या कामिनी स्पृशति वामपदाम्बुजेन।
तस्याः पतिः सपदि विन्दति दासभावं
गोणीसुतेन कथितः किल योगराजः ॥ ७१ ॥

पत्राणि पञ्चमदनानि समानि नीत्वा
तत्र त्रिभागतुलितां फलिनीं च दत्वा।
पिष्ट्वा विलिप्य भजते मदनाङ्कशेफः
प्रत्यक्ष एव स भवेन्मदनः पृथिव्याम्(५) ॥ ७२ ॥

सिन्धूत्थमाक्षिककपोतमलानि पिष्ट्वा
लिङ्गं विलिप्य तरुणीं रमते नरो याम्।

---

(१) चूर्णसमुद्देशे पद्यद्वयमिदं नास्ति ग पुस्तके।
(२) एतत्पद्यं नास्ति ग पुस्तके।
(३) मध्येनेति ग पुस्तके।
(४) निशावसाने इति ग पुस्तके पाठः।
(५) इदं पद्यं ग पुस्तके न दृश्यते।

साऽन्यं न याति पुरुषं मनसापि(१)नूनं
दासीभवेदतिमनोहरदिव्यमूर्त्तिः ॥ ७३ ॥
भल्लूकपेद्रूघनसारमधूनि पिष्ट्वा लिप्तध्वजो निधुवनं विदधीत यस्याः।
आह्लादयेत्कुसुम(२)मायकसन्नताङ्गी वश्या भवेच्चिरतरं न हि संशयोऽत्र
लिङ्गं च लोहितवलीनदनस्य पिष्ट्वा दुग्धेन या व्रजति साधनकं विलिप्य
एणीदृशः सुरतसङ्गमकेलिरङ्गे कामायते प्रतिदिनं स महीतलेषु ॥ ७५॥
गोरोचनाशिशिरदीधितिशंभुवीजैः कर्पूरचन्दनयुतैः(३)कनकद्रवैश्च
लिप्तध्वजः परिरमत्यबलां नरो यस्तस्याः स एव हृदये मुकुटत्वमेति ॥
सिन्धूत्थकुष्ठविमलाञ्जनपिप्पलीभिर्माञ्जिष्ठकं सहयफेनकपित्थतुल्यैः
जातीभवं च कुसुमं च दलं च दत्वा सिद्धार्थमाक्षिकयुतैरतिसूक्ष्मपिष्टैः
एतेन लिङ्गपरिलेपनकं विधाय
यः सेवते निधुवनं तरलायताक्ष्याः ।
वश्यत्वमेति वनिता नियतं क्षणार्द्धा-
दित्याह सत्यभणतिः किल मूलदेवः(४) ॥ ७८ ॥

इति लिङ्गलेपनसमुद्देशः ॥

अथ मोहकधूपौषधिसमुद्देशप्रकरणम् (१०) ।

कन्यारते युवतिसङ्गमने नराणा-
मालोकने नरपते क्रयविक्रयादौ ।
आज्ञाविधौ सकलकर्मणि कौतुकेऽपि
धूपस्सदैव कृतिभिर्विनियोजनीयः(५) ॥ ७९ ॥
शृङ्गीवचानलद(६)सर्जरसं समानं

(१) याम्,सान्यं प्रयाति पुरुषं न कदापि काममिति ग पु० पाठः ।
(२) साह्लादिनी कुसुमेत्यादि ग पु० पाठो युक्तः प्रतिभाति ।
(३) काश्मीरचन्दनयुतैरिति ग पु० पाठः ।
(४) अत्र लेपनसमुद्देशेऽन्तिमं पद्यद्वयं ग पु० नास्ति ।
(५) धूपोद्देशे आद्यं पद्यमिदं ग पुस्तके न दृश्यते ।
(६) युवतिसर्जरसमिति ग पु० पाठः ।

कृत्वा वर्टि मलयजं च षडैक(१)मिश्रम् ॥
या धूपयेन्निजगृहं वसनं शरीरं
तस्यास्तु दास इव मोहमुपैति लोकः ॥ ८० ॥

इति धूपसमुद्देशः ।

इतिश्रीकविशेखरज्योतिरीश्वरविरचिते पञ्चसायके
तृतीयः सायकः ॥ ५ ॥

अथ चतुर्थः सायकः ।

## अथ वशीकरणमन्त्रसमुद्देशप्रकरणम्(१)

मद मद पदमादौ मादयेति द्विवारं
तदनु च लिखनीयं ह्रींपदं तत्र पश्चात् ।
अथ च पदमुपास्यन्नामरूपादिसंज्ञा
भवति मदनमन्त्रः स्वाहया संयुतोऽयम्(३) ॥ १ ॥
कनकरुचिरमूर्त्तिः कुण्डलाकृष्टचापो
युवतिहृदयमध्ये निश्चलारोपिताक्षः ।
इति मनसि मनोजं ध्यायते यो जपस्थो
वशयति च समस्तं भूतलं मन्त्रसिद्ध्या ॥ २ ॥
शतशतपरिजापात्स्यादयं सिद्धिदाता
दशशतकुसुमानां लोहितानां च होमात् ॥
इह तु सकलकार्यं वामहस्तेन कार्यं
उपदिशति स मन्त्रो(४)ज्योतिरीपः स्वरूपम् ॥ ३ ॥

इतिमन्मथमन्त्रसमुद्देशः(१) ॥

---

( १ ) षडेवांमिश्रमिनि ग पु० पाठः ।

( २ ) ग पुस्तकेऽत्र ३ सायकसमाप्तिर्नास्ति ।

( ३ ) ग पुस्तके एतत्पद्योद्धृतो-ॐ मद मद मादय मादय ह्रीं अमुकीं वशमानय स्वाहा-इति मन्त्र एव मुद्रितः ।

( ४ ) समासादिति घ पुस्तके । श्लोकश्चायं ग पुस्तके न दृश्यते किन्तु 'अस्य मन्त्रस्य दशसहस्रसंख्याकोन्मितो जपः । रक्तवर्णैः प्रसूनैर्मधुना घृतेन च होमः करणीय' इति गद्येनैवतद्विधिः प्रदर्शितः ।

चामुण्डे प्रथमं जयेति कथितं सम्बोधने मोहय
ज्ञातव्यं वशमानयेत्यपि पदं साध्यद्वितीयायुतम् ।
स्वाहान्तः प्रणवादिरेष कथितस्तज्ज्ञैर्महामोहनः
सन्मन्त्रः कविसार्थसेवितपदो नास्माद्द्वितीयो भुवि ॥४॥
दंष्ट्राकोटिविसङ्कटा सुवदना सान्द्रान्धकारे स्थिता
खट्वाङ्गासिनिगूढदक्षिणकरा वामेन पाशं शिरः ।
श्यामा पिङ्गलमूर्धजा भयकरी शार्दूलचर्माम्बरा
चामुण्डा शववाहिनी जपविधौ ध्येया सदा साधकैः ॥ ५ ॥
जप्तो लक्षमसौ पलाशकुसुमैरङ्गैर्दशांशैर्हुतैः
सिद्धिं गच्छति वामकर्मविधिना निःसंशयं मन्त्रतः ।
पुंसां सप्तविधानमन्त्रणकृतां सिद्धिं ददात्यादरा-
द्दत्तं रागवतां करोति वशतामित्याह वागीश्वरः(१) ॥ ६ ॥

इतिचामुण्डामन्त्रः(२) ॥

आदौ कामपदं ततो निगदितं सम्बोधने निश्चितम्
प्रोक्तं कर्मपदान्वितं मृगदृशां नाम स्फुटं निर्दिशेत् ।
तस्मादानय तां ततो ममपदं ज्ञेयं वशं चेत्यतो-
प्योङ्कारान्वितभूमिति प्रकटितो मन्त्रो मया मान्मथः ॥ ७ ॥
आकर्णाञ्चितकार्मुको हरपदे विध्यन्हरं सायकै-
र्भानोर्मण्डलमध्यगो दयितया सानन्दमालिङ्गितः ।
प्रत्यालीढपदोऽथ वारिजतनुर्नग्नः परेतासनः
कन्दर्पो जयकर्मणि प्रतिदिनं ध्येयो नरैरीदृशः ॥ ८ ॥
जप्त्वा वारशतं कदम्बकुसुमं पुष्पं पलाशस्य वा

---

(१) अत्र ग पुस्तके 'ॐ चामुण्डे जय चामुण्डे मोहयामुकीं वशमानय स्वाहा' इति मन्त्रः । अस्य मन्त्रस्य जपो लक्षमेकम् । मदिरामिश्रितपलाशकुसुमैर्होमः करणीयः । सर्वं वामहस्तेन कार्यम्, इति गद्येनानुवादमात्रं विहितम् । एवमग्रेऽपि ।

दत्वा पञ्चसहस्रमेति नियतं सिद्धिं मनोवञ्छिताम् ।
ताम्बूलं कुसुमं सुगन्धमथवा वस्त्रं मदत्तं हठा-
त्सम्प्रावर्त्तितमेव सिद्धिरहितः कामं जगन्मोहयेत् ॥ ९ ॥
शम्भोरायतने चतुष्पथतटे नद्यां स्मशाने गिरौ मध्ये
मन्त्रवरः करोति वशगामष्टौ महासिद्धयः ।
वश्याकर्षणमोहमान्मथमनस्तंभादयो हस्तगाः
प्रायः प्राकृतसिद्धयस्तु कृतिनां केऽमी कवित्वादयः ॥१०॥

इति कामेश्वरमन्त्रसमुद्देशः(३) ॥

ॐकारं प्रथमं ततो नम इति प्रोक्तं च तस्मात्पदं
चामुण्डेति च कीर्त्तितं हिलि हिलि ज्ञेया च संज्ञा ततः ॥
ज्ञातव्यं वशमानयेति च पदं स्वाहापदं मन्त्रिणां
मन्त्रोऽयं कविशेखरेण कथितः ख्यातो महासिद्धिदः(१)११॥
वज्रासक्तशरासना त्रिनयना सव्येतरेणाङ्कुशं
वामेनापि करेण पाशमुरसि न्यस्तोत्तमाङ्गस्रजा ।
व्यासक्तोरुकचा करालवदना वन्हिप्रभा मध्यगा
ध्येया जप्यविधौ नरैश्चिरतरं विश्वेश्वरी सिद्धये ॥ १२ ॥

इति विश्वेश्वरीमन्त्रसमुद्देशः(४) ।

ॐ कामेश्वरमोहयेति विलिखेत्स्वाहान्तमन्त्रं क्रमा-
त्पुष्पं माक्षिकसंयुतं हुतवहे चादित्यवारोद्धृतम् ।
पद्मिन्यै मुनिनाभिमन्त्रणकृतं वश्याय देयं बुधै-
स्ताम्बूलेन सहेति विश्वविभवो वागीश्वरः प्रोक्तवान्(२) ॥१४॥

इति पद्मिनीवशीकरणमन्त्रः(५) ।

---

(१) अत्र 'ॐनमश्चामुण्डे हिलि हिलि अमुकीं वशमानय स्वाहा' अस्य मन्त्रस्य जपो लक्षपरिमितः, पलाशकुसुमैश्च होमः करणीय इति ग पुस्तके पाठो द्रष्टव्यः ।

(२) अत्र 'ॐ कामेश्वर मोहय स्वाहा' इति मन्त्रः । अनेन

ॐ कारं प्रथमं जयेत्यपि पदं वारद्वयं कीर्त्तये-
त्तस्मात्तं च विहङ्गमद्वयमतः प्रोक्तं च तत्रोमिति ।
ज्ञेयं कामपदं ततश्च कथितं देवाय तस्मात् पदं
स्वाहान्तः परिकीर्त्तितः कविवरैः कन्दर्पमन्त्रः स्फुटम् ॥१५॥
रम्भामूलजलेन भास्करकरैर्जातीफलं भावितं
तुष्ट्या तेन निमन्त्रितं बहुविधं मन्त्रेण भानोर्दिने ।
ताम्बूलोदरमध्यगं नरवरैर्दत्तं सदा चित्रिणीं
वश्यां कारयति क्षणेन कथितः साक्षादयं मान्मथः(१) ॥१६॥

इति चित्रिणीवशीकरणमन्त्रसमुद्देशः(६) ।

ॐ कारं पुरतस्ततो हरहरप्रोक्तं ततश्चोमिति
ज्ञेयं वारयुगं ततः पचपच देवाय कामाय च ।
स्वाहान्तेन निमन्त्रितं तगरजं मूलं तथा श्रीफलं
मन्त्रेण प्रकरोति दत्तमचिरात्कामं वशां शंखिनीम्(२) ॥१७॥

इति शङ्खिनीवशीकरणमन्त्रः(७) ।

ओङ्कारं प्रथमं ततो चिरिरिति ज्ञेयं वशीकुर्वतो
प्रोक्तं कामपदं ततो निगदितं देवाय तस्मात्पदम् ।
स्वाहान्तः परिकीर्त्तितः प्रपठतां कामस्य मन्त्रो निजो-(?)

---

मन्त्रेण मधुमिश्रितजातीकुसुमसहितं ताम्बूलमादित्यदिने पञ्चश-तवारमभिमन्त्रितं पद्मिन्यै दातव्यम् पद्मिनी वश्या भवति इति ग पुस्तके पाठः।

(१) अत्र "ॐ पच पच ॐ विहङ्ग-विहङ्ग ॐ कामदेवाय स्वाहा" "इति गपुस्तके" रिवि रिवि अमुकीं वश्यं कुरु कामदेवाय स्वाहा इति ख पुस्तके च पाठः, किन्तूद्धारानुसारेण जय जयेतिघटितो मन्त्रोऽत्र युक्तः ।

(२) ॐ हर २ पच पच ॐ २ कामदेवाय स्वाहेति मन्त्रः, अनेन तगरमूलं श्रीफलं चादित्यवारेऽष्टोत्तरशतवारमभिमन्त्रितं शंखिन्यै दातव्यं सा वश्या भवतीति ग० पु० पाठो द्रष्टव्यः।

क्षौद्राक्तौ करिणीं हठाद्वशयति किं जल्पितैर्विस्तरैः(१) ।१८।

इति हस्तिनीवशीकरणमन्त्रः(८) ।

## अथ स्तनोन्नतिकरणौषधिसमुद्देशप्रकरणम्(२)

क्षीरौदनं द्विजवराय पुनः प्रदाय
पुष्योद्धृतं शितवलाचरणं कुमार्याः ।
पिष्ट्वा प्रदत्तमिति वै विकृतामनिष्टा-
न्निःसारयेद्विधिवशाद्विदितप्रभावः ॥ १९ ॥

सन्ताडयेद्यदि पतिः शरवच्च बद्ध्वा यो वै रवेर्निशि सुसंभृतकामभावः ।
योगात्कृतां सहजजामथवाप्यनिष्टां
निस्सार्य एष सहसैव करोति चेष्टाम्(२) ॥ २० ॥

इत्यनिष्टाहरणसमुद्देशः ।

मातङ्गकृष्णाभयवाजिगन्धावचायुताः पर्युषिताम्बुमिश्राः ।
हयारिपत्नीनवनीतयोगात्कुर्वन्ति पीनं कुचकुम्भयुग्मम् ॥ २१ ॥
वसा भुजङ्गस्य हयारिपत्न्यो कोलस्य मेदः समभागयुक्तः
वक्षोजयुग्मं मदिरायताक्ष्याः करोति पीनं सकलं हठेन ॥२२॥
तैलं हठाद्दाडिमकल्कसिद्धं सिद्धार्थजं लेपनतो नितान्तम् ।
नारीकुचौ चारुतरौ च पीनौ कुर्यादसौ योगरसः सदैव ॥२३॥
श्रीपर्णिकाया रसकल्कसिद्धं तिलोद्भवं तैलवरं प्रदिष्टम् ।
द्रुतेन वक्षोजयुगे प्रदेयं प्रयाति वृद्धिं पतितोऽपि नार्याः ॥२४॥
तिलस्य तैलं कृतिना नरेण कृताञ्जलैर्भावितमाग्निसिद्धम् ।
घृतं गवीनां महिषीमलं च कटुत्रयं तत्र निशां च दत्वा ॥२५॥

---

(१) 'अत्र 'ॐ चिरि २ वशं कुरु कामदेवाय स्वाहा' इति मन्त्रः, अनेन आदित्यदिने क्षौद्राक्तौ कपोतभ्रमरौ ताम्बूलदले विन्यस्याष्टो-त्तरशतमभिमन्त्रितं कृत्वा हस्तिन्यै देयम्, हस्तिनी वश्या भवति इति ग पु० पाठो द्रष्टव्यः ।

(२) अस्मिन् प्रकरणेऽयं श्लोको नास्ति, अनिष्टाहरणेति च ग० पुस्तके पाठो द्रष्टव्यः ।

तत्तैलयोगेन कुचौ विशालौ स्त्रीणां भवेतां सहसा न चित्रम् ।
वृद्धापि तारुण्यमुपैति भूयस्त्रिःसप्तकृत्वो विनियुज्यमानम् ॥२६॥
प्रथमकुसुमकाले तस्य योगेन पीतं
सनियममथ पीतं तण्डुलाम्भो युवत्या ॥
कुचयुगमतिपीनं क्वापि नो याति पातं
कथित इति पुराणश्चक्रदत्तेन योगः(१) ॥ २७ ॥
इति स्तनोन्नतिकरणसमुद्देशः ।

## योनिसंस्कारौषधिसमुद्देशप्रकरणम्(३)

प्रक्षालयेन्निम्बकषायनीरैर्निशाज्यकृष्णागुरुगुग्गुलूनाम् ।
धूपेन योनिं निशि धूपयित्वा नारीप्रमोदं विदधाति भर्तुः २८
जातीप्रसूनैः सितसर्षपस्य तैलं पचेद्वाप्यनले विधानम् ।
अभ्यञ्जयेत्तेन(२)सदैव योनिं सौभाग्यमाप्नोति रते पुरन्ध्री २९
प्रक्षाल्य निम्बस्य जलेन भूयः तस्यैव कल्केन विलेपयेच्च ।
त्यजेद्युवत्याश्चिरकालभूतगन्धं वराङ्गस्य न संशयोऽत्र ॥३०॥
सहेमनिम्बार्जुनदेवकाष्ठैः कल्कीकृतैः क्वाथकृतैस्तिलस्य ।
तैलं विपक्वं कुरुतेऽङ्गनायाः सौभाग्यमासादयति प्रसङ्गे(३)३०
इति योनिसंस्कारसमुद्देशः ॥

## अथ रोमशातनौषधिसमुद्देशप्रकरणम्(४)

भुजङ्गचूर्णं कटुतैलमध्ये सप्ताहमादित्यकरे निधेयम् ।
तत्तैलयोगेन विलासिनीनां रोमाणि नश्यन्ति समूलमेव।३१।
पलाशभस्मान्वितताल चूर्णै रम्भाम्बुमिश्रैरुपलिप्य भूयः ।
कन्दर्पगेहे मृगलोचनानां रोमाणि रोहन्ति कदापि नैव॥३१॥

---

(१) तिलस्येत्यारभ्य श्लोकत्रयमस्मिन् प्रकरणे ग पुस्तके नास्ति ।

(२) पचेल्लघ्वनले प्रधानम्, अभ्यङ्गयोगेनेति ग पुस्तके पाठः ।

(३) श्लोकद्वयमन्त्यमत्र प्रकरणे ग पुस्तके नास्ति ।

एकः प्रदेयो हरितालभागः पञ्च प्रदेया जलजस्य भागाः।
रक्षस्तरोर्भस्मन एव पञ्च प्रोक्ताश्च भागाः कदलीजलार्द्राः॥३२
सन्मिश्रपात्रे खलु सप्तरात्रं कृत्वा स्मरागारविलेपनं च।
रोमाणि सर्वाणि विलासिनीनां पुनर्न रोहन्ति कदाचिदेव(१)
रम्भाजले सप्तदिनं विभाव्य भस्मानि कम्बोर्मसृणानि पश्चात्।
तालेन युक्तानि विलेपनेन रोमाणि निर्मूलयति क्षणेन॥३३॥
शङ्खचूर्णस्य भागौ द्वौ हरितालश्च भागिकः।
मूत्रेण सह पिष्टस्तु लोमशातन उत्तमः(२)॥३४॥

इति रोमशातनसमुद्देशः॥

अथ नष्टपुष्पपुष्पोद्भवसमुद्देशप्रकरणम्(५)

ज्योतिष्मतीकोमलपत्रपथ्यौ भृष्टं जपायाः कुसुमं च पिष्ट्वा।
गृह्याम्बुना पीतमिदं युवत्या करोति पुष्पं स्मरमन्दिरस्य॥३५॥
दूर्वादलं तण्डुलतुल्यभागं निष्पिष्य पिष्टं परिपाचयेत्ततः।
तद्भक्षयित्वा वनिता प्रमृष्टं पुष्पं पुनर्विन्दति पूर्वरूपम्(३)॥३६॥

इति नष्टपुष्पसमुद्देशः(४)।

धात्रीं च पथ्यां च रसाञ्जनं च कृत्वा विचूर्णं सजलं च पीतम्
आत्यन्तिकं योनिजमुग्रवेगं निवारयेत्सेतुरिवाम्बुपूरम्॥ ३७॥
शेलुत्वचोन्मिश्रिततण्डुलेन विधाय चूर्णं विनियोजनीयम्।
कन्दर्पगेहे मृगलोचनाया रक्तं हरत्येष हठेन योगः॥३८॥

इति पुष्पोद्भवसमुद्देशः(५)।

---

(१) एक इत्यादिश्लोकद्वयं ग पुस्तके नास्ति।
(२) इदमप्यन्तिमं पद्यं नास्ति ग पुस्तके।
(३) इदं पद्यमत्र प्रकरणं ग पुस्तके न दृश्यते।
(४) स्मरमन्दिरपुष्पसमुद्देश इति ग० पु० पाठः।
(५) एतत्प्रकरणमेव नास्त्यतिरिक्तं ग पुस्तके।

अथ गर्भधारण-चालितस्थापनसमुद्देशप्रकरणम् [६]।

मूलं सितायाः किल लक्ष्मणायाः ऋतौ निपीय त्रिदिनं पयोभिः।
क्षीराम्बुवर्जं नियमेन भुङ्क्ते पुत्रं प्रसूते वनिता न चित्रम् ॥३९॥
स्नातापि वन्ध्या फणिकेसरस्य रजो घृतेन त्रिदिनं पुरन्ध्री ।
स्थिरासना सुस्थिरचित्तवृत्तिर्गर्भं विधत्ते पुरुषप्रसङ्गात् ॥४०॥
सपिप्पलीकेसरशृङ्गवेरक्षुद्रोपणा गव्यघृतेन पीत्वा ।
वन्ध्यापि पुत्रं लभते हठेन योगोत्तमोऽयं मुनिभिः प्रदिष्टः(१)॥४१॥
तुरङ्गगन्धाशृतवारिसिद्धमाज्यं पयः स्नानदिने च पीत्वा ।
प्राप्नोति गर्भं नियमं चरन्ती वन्ध्यापि पुत्रं पुरुषप्रसङ्गात् ॥४२॥
पुष्यार्कयोगोद्धृतलक्ष्मणायाः मूलं तथा वज्रतरोश्च पिष्ट्वा ।
अप्येकवर्णापयसा निपीतं तत्तु स्मृतं पुत्रकरं मुनीन्द्रैः(२) ॥४३॥
पुष्योद्धृतं श्वेतबलार्कमूलं कर्षप्रमाणं मधुकस्य चूर्णम् ।
जलं सकर्षं निहितं निशायामेकीकृतं कन्यकया सुपिष्टम् ॥४४॥
गौरैकवर्णान्वितवत्सकायाः कृताधिकं क्षीरयुतं च पीत्वा ।
नैतद्दिने किञ्चिदपि प्रदेयमाहारमाकान्तसमागमान्ते ॥ ४५ ॥
क्षीरौदनं पायसभोजनं च कृत्वा प्रभाते पुरुषाख्यऋक्षे ।
योगे शुभं कान्तमुपेत्य हृष्टा सूते सुतं निश्चितमेव नारी ॥४६॥
पुष्योद्धृतं लाक्ष्मणमेव चूर्णं पुंसा निघृष्टं सघृतं च पीतम् ।
क्षीरौदनं प्राश्य पतिप्रसङ्गाद्गर्भं विधत्ते तरुणी न चित्रम् ॥४७॥
कृताङ्गरागाः सुविवस्त्रयुक्ता सन्माल्यकेशाश्वतलम्ब(?)पुष्टा ।
सकाममासाद्य पतिं निरान्नं प्राप्नोत्यवश्यं तरुणी सुपुत्रम्(३) ॥४८॥

---

( १ ) मूलमित्यादि पद्यत्रयं नास्ति ग पुस्तके ।

( २ ) पुष्योद्धृतं लाक्ष्मणमेव मूलं पुंसा निपिष्टं सघृतं च पीतम् । क्षीरोदनं प्राश्य पतिप्रसङ्गात् गर्भं विधत्ते तरुणी न चित्रम् ॥ इति ग पुस्तकेऽत्र पठितः श्लोकोऽग्रे द्रष्टव्यः ।

( ३ ) पुष्योद्धृतमित्यारभ्य श्लोकपञ्चकं ग पुस्तके नास्ति ।

या बीजपुरद्रुममूलमेकं क्षीरेण सिद्धं हविषा विमिश्रम् ।
ऋतौ निपीय स्वपतिं प्रयाति दीर्घायुषं सा तनयं प्रसूते ॥४९॥

कुलतिलजलचैकं गोकरीषाग्नियोगा-
त्तरुणवृषभमूत्रं प्रस्थयुक्तं विपक्कम् ।
ऋतुदिवसविमध्ये सप्तरात्रं निपीतं
जनयति सुतमेकं निश्चितं पुष्पितैव(१) ॥ ५० ॥

इति गर्भाधानसमुद्देशः ।

धान्यञ्जनं शाबरयष्टिकाख्यं त्र्यहं निपीय प्रमदा हठेन ।
सप्ताहमात्रं विनियुज्य मानं स्तम्भाति गर्भं बलिनं न चित्रम् ॥५१॥
क्षौद्रं द्रुपं चन्दनसिन्धुजातं माहेन्द्रमोजः पयसा सुपिष्टम् ।
गर्भं क्षरन्तं प्रतिहन्ति शीघ्रं योगोऽयमुक्तः किल मौलदेवः ॥५२॥
कुलालहस्तोद्भवकर्दमस्य कृत्वा रसं क्षौद्रयुतं प्रयत्नात् ।
गर्भच्युतिं शूलभयं निवार्य करोति गर्भं प्रकृतं हठेन(२) ॥५३॥
कसेरुशृङ्गाटकजीवनानि पयो-घनेरण्डशतावरीभिः ।
सिद्धं पयः शर्करया विमिश्रं संस्थापयेद्गर्भमुदीर्णशूलम् ॥५४॥

कन्दं कौमुदकस्य माक्षिकयुतं क्षीराज्यमिश्रं पिबे-
त्सप्ताहं सितया सुपक्कमबला शीतीकृतं वायुना ।
गर्भस्रावमरोचकं सपवनं शोथं त्रिदोषं वमिं
शूलं सर्वविधं निहन्ति नियमादेवं च तद्वात्स्थितम्(३)॥५५॥

इति चलितगर्भस्थापनसमुद्देशः ॥

अथ सुखप्रसवौषधि-मन्त्रोद्देशप्रकरणम् [७] ।

गुञ्जातरोर्मूलयुगं विधानादुत्पाट्य निष्पिष्य तरौ निबद्धम् ।
कटेस्तटे मूर्द्धनि नीलसूत्रैः शीघ्रं प्रसूतिं कुरुतेऽङ्गनानाम् ॥५६॥

---

(१) अयमपि अन्तिमः श्लोको न दृश्यते ग पुस्तके ।
(२) अत्र प्रकरणे आदिमं पद्यत्रयं ग पुस्तके नास्ति ।
(३) इदमन्तिमं पद्यमपि ग पुस्तके न दृश्यते ।

आगारधूमं गृहवारिणा वा पीत्वाऽबला शीघ्रतरं प्रसूते ।
अलम्बुषामूलमथो निबद्धं योगद्वयं भूपतिरित्यवादीत् ॥५७॥
समातुलुङ्गं मधुकं विचूर्ण्य मध्वाज्यमिश्रं प्रमदा निपीय ।
व्यथाविहीनं प्रसवं हठेन प्राप्नोति नैवात्र विकल्पबुद्धिः(१) ॥५८॥
ॐ इहामृतं च सोमश्च चित्रभानुश्च भाविनी(२) ।
उच्चैःश्रवास्तुरङ्गेशो मन्दिरे निविसन्तु ते ॥ ५९ ॥
ॐ इदममृतमपां समुद्धृतं यस्तव लघु गर्भमिमं विमुञ्चतु स्त्री ।
तदनु च पवनार्कवासवास्ते सह लवणाम्बुधरैर्दिशन्तु शान्तिम्॥६०॥
ॐ मुक्ताः पाशा विपाशाश्च मुक्ताः सूर्यस्य रश्मयः ।
मुक्तः सर्वभयाद्गर्भ एह्येहि मा चिरं स्वाहा(३) ॥ ६१ ॥
एभिर्जलं च्यावनमन्त्रराजैर्जप्त्वा प्रदेयं किल गर्भवत्यै ।
सद्यः प्रसूते नवगर्भयुक्ता(४) योगोऽयमात्रेयमुनिप्रदिष्टः(५) ॥६२॥
क्षितिर्जलं वियत्तेजो वायुर्विष्णुर्जगत्पतिः ।
सगर्भां त्वां सदा पातु वैशल्यं च दिशत्वपि ॥ ६३ ॥
प्रसूय त्वमविदूयनविकृष्टा च शुभानना ।
कार्तिकेयद्युतिं पुत्रं कार्तिकेयाभिमन्त्रितम्(६) ॥ ६४ ॥

ॐ मन्मथ मन्मथ वाहि वाहि लाव लम्बो-
दरि(७) मुञ्च मुञ्च लघु स्वाहा ॥

अनेन मन्त्रेण जलं सुजप्तं पातुं प्रदेयं शुचिना नरेण ।

---

(१) अस्मिन्प्रकरणे श्लोकद्वयमाद्यं ग पुस्तके न दृश्यते ।

(२) भामिनीति ग पु० पाठः ।

(३) भयाद् एहि माचिरं माचिरम् इति ग पु० पाठः ।

(४) गूढगर्भा इति ग० पु० पाठः ।

(५) अत्र एभिर्मन्त्रैः सप्तवारमभिमन्त्रितं जलं गर्भवत्यै पातुं दातव्यम् इति ग पु० पाठो द्रष्टव्यः ।

(६) श्लोकद्वयं ग पुस्तके नास्तीदम् ।

(७) मन्मथ २ मन्मथवाहिनि लम्बोदरमिति ग पु० पाठः ।

तोयाधिपानात्खलु गर्भवत्या प्रसूयते शीघ्रतरं सुखेन(१) ॥६५॥
उभयलिङ्ग शकवापिदष्टाचोभयविंशकम् ।
चक्रव्यूहं च दृष्ट्वा च सुखं नारी प्रसूयते(२) ॥ ६६ ॥
इति सुखप्रसवसमुद्देशः ॥

अथ वन्ध्याकरणसमुद्देशप्रकरणम् [८] ।

तुषाम्बुना यावकवृक्षमूलं निःक्वाथ्य पीत्वा नियमं चरन्ती ।
ऋत्वन्तकाले त्रिदिनं पिबन्ती वन्ध्या भवेदामरणान्तमेव(३)॥६७॥
फलं कदम्बस्य च माक्षिकाणि तुषोदकेन त्रिदिनं सकृद्वा ।
स्नानावसाने नियमेन पीत्वा वन्ध्या भवेत्स्त्री नियतं हठेन(४)।६८।
कर्षद्वयं राक्षसवृक्षबीजं सप्ताहमात्रं शितशालिधारा ।
ऋतौ निपीतं मृगशावकाक्ष्या वन्ध्यात्वमेतान्नियतं करोति ॥६९॥
इति वन्ध्याकरणसमुद्देशः ॥

इत्येवं कथिता मया नरपते योगावली कौतुकात्
ये योगाः कृतिभिः सदैव हृदये धार्या न कार्या बुधैः ।
वन्ध्यानामुपकारकर्मकुशलास्ते वै महाशक्तयः
क्षन्तव्यं कविशेखरस्य विनयाद्दौर्वन्ध्यमाजीवितम्(५) ॥७०॥

इति ज्योतिरीश्वरविरचिते पञ्चसायके चतुर्थः सायकः(६) ॥

---

(१) एतच्छ्लोकस्थले 'अनेन मन्त्रेण सप्तवारमभिमन्त्रितं जलं गर्भवत्यै पातुं दातव्यं सुखप्रसवो भवति'। इति ग पु० पाठः ।

(२) एतत्प्रकरणे ग पुस्तकेऽयं श्लोको न दृश्यते । श्लोकार्थश्च स्वयं विद्वद्भिर्निर्धारणीयः ।

(३) एतत्प्रकरणेऽयं श्लोको नास्ति ग पुस्तके, किन्तु—
पलाशक्षीरद्रुमयोः फलानि पुष्पाण्यथो शाल्मलिपादपस्य ।
मद्येन मासार्द्धदिनं निपीय वन्ध्या भवेन्निश्चितमेव नारी ॥
इति अधिकपद्यं दृश्यते ।

(४) 'निपीय, स्नानावसाने नियमेन चापि वन्ध्यामवश्यं कुरुते हठेन' इति ग० पु० पाठः ।

(५) अयं श्लोको ग पुस्तके नास्ति ।

(६) ग पुस्तके ऽत्र ४ सायकसमाप्तिर्नास्ति ।

## अथ पञ्चमसायकः ।

### अथ केशसंस्कारप्रकरणम् [१] ।

तिलप्रसूनं सह गोक्षुरेण शतावरं(१) गव्यघृतेन पिष्टा ।
सप्ताहमात्रेण शिरःप्रलेपाद्भवन्ति दीर्घाः प्रचुराश्च केशाः ॥१॥
मदन्तिकासावरकल्कसिद्धं तिलोद्भवं तैलमिदं नराणाम् ।
अकालपातं कृशतां च रौक्ष्यं केशस्य खर्वत्वमलं निहन्ति ॥२॥
फलत्रिकं सूदतरोः प्रसूनं पिण्डारकं पाण्डववानिताकम् ।
प्रस्थप्रमाणं च तिलस्य तैलं पचेदमीभिर्विदितापदेशः ॥ ३ ॥
तस्मिन्मध्ये यदीशयक्षः क्षिप्तो भवेन्मेचकवर्णयुक्तम् ।
पाकस्तदैतस्य नरैर्विधेयः ख्यातं पृथिव्यामिति नीलतैलम् ॥४॥
एतेन लिप्तं पलितं नराणां शङ्खावदातं सकलं त्रिरात्रम् ।
पुष्यत्यधःश्रोणिसमानवर्णं चित्रं भवेद्दृष्टमिति प्रयोगः ॥ ५ ॥
सनीलिकासैन्धवपिप्पलीभिर्वचाज्ययुक्ताभिरुपेत्य केशम् ।
क्रमेण शङ्खोपममाशु शुक्लं शिरोरुहं मेचकतामुपैति(२) ॥ ६ ॥
कर्षार्द्धमात्रं प्रसवं फलेन निम्बस्य तैलं नियमेन पीतम् ।
क्रमेण कुन्देन्दुतुषारगौरं शिरोरुहं मेचकतामुपैति ॥ ७ ॥
शतावरी कृष्णतिलेन युक्ता गोरोचना काकसमाभिधा च ।
अमीभिरालिप्य पुनः स्वकेशान्करोति शुक्लानपि कृष्णवर्णान् ॥८॥
विडङ्गगन्धोपलकल्कयोगाद्गोमूत्रसिद्धं कटुतैलयुक्तम् ।
अभ्यङ्गयोगेन शिरोरुहाणां यूकादिलिक्षाप्रचयं निहन्ति(३) ॥९॥

इति केशसंस्कारसमुद्देशः ॥

गुञ्जाफलैः क्षौद्रयुतैर्विलिप्य शीर्षप्रदेशे सकलेन्द्रलुप्तम् ।
अनेन योगेन सदैव केशा रोहन्ति कृष्णाः कुटिला विशालाः ॥१०॥

---

(१) ससारवं इति ग पु० पाठः, शस्पाकबीजञ्चेति ख पु० पाठश्चात्र द्रष्टव्यः ।
(२) अत्र मदन्तिकेत्यारभ्य श्लोकपञ्चकं ग पु० नास्ति ।
(३) अत्र शतावरीत्यारभ्य श्लोकद्वयं ग पु० नास्ति ।

मातङ्गदन्तस्य मसीं विधाय श्रयोऽञ्जनं तुल्यतया सुपिष्टम् ।
लिम्पेदनेनैव महेन्द्रलुप्ताः केशाः प्ररोहन्त्यपि हस्तमध्ये(१)॥११॥
इतीन्द्रलुप्तसमुद्देशः(२) ॥

क्षीरेण शक्राख्यमहीरुहस्य विभाविता माक्षिकया सधात्री ।
यो स्नाति मुक्ताः परिलेपयोगाद्गलन्ति केशाः स्वयमेव नूनम्॥१२॥
इति च्युतीकरणसमुद्देशः ॥

क्षीरेण वज्रद्रुमसम्भवेन ये भाविताः कृष्णतिला नितान्तम् ।
तत्तैलयोगेन विलासिनीनां भवन्ति केशाः कुटिला घनाभाः॥१३॥
इति केशरञ्जनसमुद्देशः ॥

## अथ मुखकण्टकादिहरण-योनिसंस्कारसमुद्देश-प्रकरणम् [२] ।

सिन्धूत्थसिद्धार्थकसावराणां वचायुतानां परिलेपनेन ।
स्त्रीपुंसयोर्यौवनजो हठेन विनाशमायाति मुखेन कण्टः ॥ १४ ॥
पिष्ट्वा मसूरं घनसारपासा मुहुर्मुहुस्तेन विलिप्य वक्त्रम् ।
नश्यन्ति गण्डे पिटकाः प्ररूढा मासार्द्धमात्रेण विलासिनीनाम्॥१५॥
या कण्टकैः शाल्मलिपादपस्य क्षीरेण पिष्टैर्वदनं विलिप्य ।
गण्डप्ररूढाः पिटकास्त्र्यहेण प्रयान्ति नाशं पुरुषास्त्रियाश्च ॥१६॥
धान्यं यवा सावरतुल्यभागं पिष्ट्वा लिपेत्तेन मुखं नितान्तम् ।
मुखोद्भवा यौवनजा नराणां नश्यन्ति नूनं पिकटाः क्रमेण ॥१७॥
इति मुखकण्टकहरणसमुद्देशः ॥

---

(१) अयं श्लोकोऽत्र प्रकरणे नास्ति, किन्तु—
तिलप्रसूनं सह गोक्षुरेण ससारघं गव्यघृतेन पिष्टम् ।
सप्ताहमात्रेण शिरःप्रलेपात् भवन्ति दीर्घाः प्रचुराश्च केशाः॥
कर्षार्द्धमात्रं प्रसवं फलेन निम्बस्य तैलं नियमेन पीतम् ।
क्रमेण कुन्देदुतुषारगौरं शिरोरुहं मेचकतामुपैति ॥
इति पद्यद्वयमधिकं दृश्यते ।

(२) अत्र ग पुस्तके तृतीयसायकसमाप्तिर्दृश्यते, अग्रिमं च्यु. तीकरणकेशरञ्जनादिप्रकरणपञ्चकं च तत्र न दृश्यते ।

मार्गस्य मूलं सह सैन्धवेन ताम्रेण घृष्टं दधिवारियोगात् ।
तेनोपलिप्तो नयनस्य मार्गो हरेद्द्रुतं चिप्पटकं नराणाम् ॥१८॥

इति चिप्पटहरणसमुद्देशः ।

यो भूतलावैः सुरगोपचूर्णं गुप्तं क्षिपेद्योषिदुपस्थगर्भे ।
तस्यैव लिङ्गस्य परं प्रवेशः स्यात्तत्र नान्यस्य कदाचिदेव ॥१९॥
गव्येन दध्ना क्वथितं विशेषात्प्रक्षालयेत्तेन तदङ्गमुच्चैः ।
भवेद्वराङ्गं प्रकृतं युवत्यारित्याह कर्त्ता हरिमेखलायाः ॥ २० ॥
आकाशदेशे पतितं गृहीत्वा यो वाखलीदन्तमलं सुपिष्ट्वा ।
लिप्त्वा ध्वजं तेन भवेन्नराणां तस्या विनाशं पुरुषश्चरन्ति (?)२१
निर्धौतलोहस्य जलेऽपि भूयः प्रक्षालनं कामगृहस्य कुर्यात् ।
पुनः समादाय चैव प्रकृष्टं नारी तदङ्गं खलु पूर्वरूपम् ॥ २२ ॥
मुहुर्मुहुर्या मथते न नारी प्रक्षालयेत्सप्तदिनानि यत्नात् ।
तस्यास्तदङ्गं पुनरेव भूयात्पूर्वानुरूपं न हि संशयोऽत्र ॥ २३ ॥
या गोविषाणं पतितं निघृष्य लिम्पेद्व्रते यस्य मनोभवास्त्रम् ।
एकाण्डकान्तं कुरुतेऽन्ययात्रां नो तिष्ठते तामपहाय तस्य ॥२४॥
अभ्युन्नतं वाथरगोविषाणं घृष्ट्वा पुनस्तेन विलिप्य लिङ्गम् ।
प्रयाति भूयः प्रकृतं तदङ्गं दृष्टो नरैरेष सदा प्रयोगः ॥ २५ ॥
जम्बीरबीजं च निशावचूर्णं समीकृतं वस्तपयाविपक्वम् ।
भुक्तं निपीतं कुरुते निकामं नरस्य षण्ढत्वमिति प्रदिष्टम् ॥२६॥
निशास्वदंष्ट्राविटपस्य चूर्णैः प्रसाधिता वस्तपयोर्द्धमासम् ।
ससार्द्धमाशर्करयान्वितं च पीत्वा हरेच्छण्ढकतामवश्यम् ॥२७॥
स्त्रीपुंसयोर्नाम विलिप्य मध्ये त्रिरोधिजीरद्वितयेन रात्रौ ।
निम्बस्य पत्रे ध्रियते तदा च भवेद्द्रुतं शाश्वतिको विरोधः॥२८॥

इति श्रीकविशेखरज्योतीश्वरविरचिते पञ्चसायके अनेकौषधि-
भेदो नाम पञ्चमसायकः ॥

## अथ षष्ठस्तबकः ।

### अथ कन्यालक्षण-दूषणसमुद्देशप्रकरणम् [१] ।

गख्यातेऽनमिते प्रभूतविभवे चारित्रिणीये कुले
कन्या भ्रातृमती सुशीलतनया रूपोज्ज्वला दक्षिणी ।
त्रैवर्गीकथया तथा बहुगुणा चाह्लादिनी सर्वदा
सा बाला बहुपुण्यपाकफलदा यत्नेन साध्या नरैः(१) ॥१॥

अम्भोजास्या बहलनयना भूरिकेशप्रचारा
तुल्या स्निग्धा सुसमदशना पद्मरागाधरोष्ठी ।
रम्यश्रोत्रा मधुरवचना कम्बुकण्ठी शुभाङ्गी
मध्ये क्षीणा सुललितकरा दक्षिणावर्त्तनाभिः ॥ २ ॥

पीनश्रोणी कतककदलीस्तम्भजङ्घाभिरामा
रत्नाम्भोजप्रचलकलिका(२)स्निग्धशाखाङ्गुलीका
इत्थं युक्ता सुललिततनुर्लक्षणैरुत्तमैर्या
कन्या सद्भिश्चटुलचरिता सा विधेया(३) गुणज्ञैः ॥ ३ ॥

इति कन्यालक्षणसमुद्देशः ॥

खर्वा पिङ्गलकुन्तला कृशतनुर्दीर्घाऽतिलोमाकुला(४)
अल्पाधोकरलोचना पृथुगला कृष्णाधरा दन्तुरा ।
रूक्षाङ्गी विकटस्तनी च शबला निच्छूरवीरात्मजा(५)
सा बाला(६)बहुभोजनी च गदिनी प्रौढा च दुःखान्विता॥४॥

---

(१) अत्र-प्रख्याते महति प्रभूतविभवे चारित्रशीलान्विते
विद्याधैर्यविवेकशौर्यविभवश्लाध्ये कुलीने कुले ।
) अयं प्. भ्रातृयुता सुशीलविनया रूपोज्ज्वला दक्षिणा
प्रसूनं सद्भिरतशुद्धवंशनिलया सद्भिर्विवाह्या नरैः ॥
पात्रेण ग्रन्थके पाठो द्रष्टव्यः ।

(२) रक्त...प्रसव प. ...चरणा इति ग पुस्तके पाठः ।

(३) विवाह्यो... पु० पाठः ।

(४) तिरोमाकुला, कृष्णा सौकरलोचनेति ग पु० पाठः ।

(५) निष्ठूरवीरात्मजेति ग पु० पाठः ।

(६) वाचालेति ग० पु० पाठः ।

पुष्पक्ष्माधरवृक्षदेशतटिनीनक्षत्रसंज्ञा च या
हास्ये कूपयुगं कपोलफलकं यस्या भवेतामलम्(१) ।
अङ्गुष्ठाधिकपर्वणी चरणयोर्यस्याश्च जाताङ्गुली
पादस्यापि कनिष्ठिका न पतति क्ष्मायां तदाऽन्याथवा(२)॥५॥
अज्ञातान्वयजा स्वभावपिशुना लम्बोष्ठिका चञ्चला
कूटा चित्रकुलोद्भवा(३) च वितता यस्याः कटिर्नासिका ।
निन्द्या सा चलजिह्विकाऽद्भुतगति(४)र्न्यूनाधिकाङ्गी पुन-
स्त्याज्या कामकलाकलापकुशलैः कन्या विवाहे सदा ॥६॥

इति कन्यादूषणसमुद्देशः ॥

## अथ वरलक्षण-दूषण-समुद्देशप्रकरणम् [२]

प्रख्यातोऽमलवंशजो नववयाः सच्छौर्यशीलाशयो(५)
साचारः स्थिरसौहृदो गुणयुतो नानाकुटुम्बी धनी(६) ।
अर्थी भोगरतो विशिष्टवचनो दाक्षिण्यधैर्याश्रयो
जामाता जगतीतले नरवरैरेवंविधो वर्णितः ॥ ७ ॥

इति जामातृलक्षणसमुद्देशः ॥

पापिष्ठो व्यसनी ऋणैरुपहतो हीनक्रियो(७) भिक्षुको
रोगी पुंस्त्वविवर्जितश्चलमतिर्वैदेशिकः कातरः ।
मूर्खो दुष्टकुलोद्भवश्च कृपणो वृद्धो द्विचर्मा खलो
कर्त्तव्यो न वरः कदापि कुशलैरेवंविधो भूतले ॥ ८ ॥

---

(१) भवेत्सत्वरम् ग पु० पाठः ।
(२) तदन्यैव वेति ग पु० पाठः ।
(३) कुष्ठिश्वित्रिकुलोद्भवेति ग पु० पाठः ।
(४) पल्लवजिह्विका द्रुतगतिरिति ग पु० पाठः ।
(५) शूरश्च शीलाश्रय इति ग पु० पाठः ।
(६) गुणानिधिर्ना…वलीति ग पु० पाठः ।
(७) द्यूतप्रिय इति ग पु० पाठः ।

## अथ विवाहभेदसमुद्देशप्रकरणम् [३]

चातुर्वर्ण्यसमीहिता मुनिवरैरष्टौ विवाहाः स्त्रियो
ब्राह्मो दैवतकस्ततो निगदितौ गान्धर्वपैशाचकौ ।
आर्षो राक्षसकस्तथाऽसुर इति ख्यातः परश्चाष्टमः
प्राजापत्यसमाभिधः पृथुगतिः प्रोक्तानुपूर्वी मया(१) ॥९॥
आर्षो दैवतकः प्रजापतिभवो ब्राह्मो द्विजानां मतो
गान्धर्वः सह राक्षसेन कथितो ये क्षात्रजात्यादयः ।
पैशाचासुरसंज्ञकौ निगदितौ वैश्यस्य शूद्रस्य वा
संक्षेपादुपवर्णितं क्रमवशात्पौराणिकं लक्षणम् ॥ १० ॥
विद्यावान्गुणपूजितः सुचरितः सद्वंशजातो मुनिः
सौम्यो मानरतः सुशीलविनयो गेहागतः प्रार्थकः ।
कन्यागद्गदवाचकः(२) सपुलकस्तस्मै ददात्यादरा-
दार्षो गोयुगदक्षिणः स कथितस्तज्ज्ञैर्विवाहो वरः ॥११॥
ऋत्विग्भिः परिमण्डिते बहुविधं(३) यज्ञोत्सवे याजिनां
नानारत्नसुवर्णवस्त्रकुसुमैराभूषिताङ्गी शुभा ।
कन्या दक्षिणजा द्विजाय विधिना यद्दीयते गौरवा-
द्दैवः सोयमुदीरितो मुनिवरैरित्थं विवाहोऽपरः ॥ १२ ॥
कन्या बान्धवसन्निधौ सुललिता विप्रोत्तमायादराद्
भक्त्या(४)तुभ्यमियं मया स्वतनया दत्ताऽतिहर्षान्विता ।
धर्मं सञ्चरतां यथासुखमुभावामन्त्र्य योगात्सदा(५)
प्राजापत्यकरग्रहः कविवरैरेषः प्रमाणीकृतः ॥ १३ ॥
आहूयार्चनपूर्वकं द्विजवरायाच्छाद्य वासोवरैः

---

(१) अयं श्लोको ग पुस्तके नास्ति ख पुस्तके वर्तते ।
(२) कन्याया गृहनायकः इति ग पु० पाठः ।
(३) बहुतिथमिति ग पु० पाठः ।
(४) उक्त्वेति ग० पु० पाठः ।
(५) उभौ सम्पद्य योगं सदेति ग० पु० पाठः ।

विद्याशीलविवेकवंशविनयाचारान्विताय स्वयम् ।
कन्या प्रीतिमते वराय विधिना यद्दीयते सादरं
ब्राह्मोऽसौ मुनिपुङ्गवैर्निगदितः श्रेष्ठो विवाहोऽपरः ॥१४॥
कन्या यौवनकामिनी पतिममुं या स्वीकरोति स्वयम्
गान्धर्वः स हि कथ्यते, भुजबलादाकृष्यते यत्पुनः ।
ज्ञेयो राक्षस एष पण्डितवरैः, चौर्याद्विवाहोऽपरः
पैशाचः कविशेखरेण कथितस्त्याज्यः सदा यत्नतः ॥१५॥
आदाय प्रथमं वराद्बहुतरं शुल्कं यथाकाङ्क्षया
वस्त्रालङ्कृतिवैभवेन तनयासन्तोषमुत्पाद्य च ।
पश्चाद्दुष्कुलसम्भवाय मलिनं कन्याप्रदानं वृथा
प्रख्यातो निजवंशजापरिणयस्तज्ज्ञै रसावासुरः ॥ १६ ॥

इति विवाहभेदसमुद्देशः ॥

## अथ परदारागमनागमनसमुद्देशप्रकरणम् [ ४ ]

नो कार्यं विदुषा नरेण सततं चान्याङ्गनासङ्गतं
कृत्वा नाशमुपैति दुःसहतमां लोकत्रये गर्हताम् ।
अश्रद्धामुपहास्यतां मलिनतां चार्थक्षतिं लाघवं
गर्ह्यां ग्लानिमधोगतिं विकलतामायुःक्षतिं दुःखिताम्(१) १७
पौलस्त्यः सुरदैत्यमर्त्यमुकुटव्याघृष्टपादाम्बुजो
मैथिल्याहरणाद्विनाशमगमद्वाली पुनस्तारया(२) ॥
पाञ्चालीं प्रति कांक्षितेन निभृतं भङ्गं गतः(३) कीचक॰

---

( १ ) एतत्स्थले उत्तरार्धं प्रथमं पठित्वा,
इत्थं ते परदारकर्मनिरता लोकत्रये निन्दिता
विन्दन्ते परमापदः सुखधिया दुःखं नरास्ते सदा ॥
इति ग॰ पु॰ पाठः।

( २ ) दवाप मरणं वालिश्च्युतो राज्यतः इति ग पु॰पाठोऽ॰
संस्कृतत्वादयुक्तः ।

( ३ ) भीमान्मृत इति ग पुस्तके पाठः ।

स्तस्मादन्यवराङ्गनाऽपि मनसा नालापनीया भुवि(१)॥१८॥

इति परदाराभिगमननिषेधसमुद्देशः ॥

चक्षुःप्रीतिरुदाहृता प्रथमतश्चित्तभ्रमः स्यात्ततः
सङ्कल्पस्तदनन्तरं निगदितो निद्राविनाशस्ततः ॥
वैराग्यं विषयस्य कीर्त्तनमतो व्रीडानिवृत्तिस्ततो
ह्युन्मादो मरणं दश प्रकटिताः कन्दर्पचेष्टा इति ॥ १९ ॥

धम्मिल्लाकलनं दृशोर्नियमनं सद्बाहुमूलोद्धृति-
र्निश्वासोच्छ्वसनं विभूषणगुणप्रख्यापनं जृम्भणम् ।
बालालिङ्गनमालिवृन्दहसनं सत्कर्णकण्डूयनं
नीवीविश्लथनं पुनर्नियमनं सद्भूषणोद्घाटनम् ॥२०॥

मुद्राविभ्रमणं प्रकोष्ठवलयप्रत्याधृतिप्रेक्षणं
कस्तूरीपलयुक्तकण्ठपदकप्रक्षालनोत्पादनम् ।
उत्तुङ्गस्तनमण्डले परिलसत्कार्पासिकप्रेक्षणं
ज्ञेयानीति विलासिभिर्ननु वधूकामेङ्गितानि स्फुटम्(२)॥२१॥

कामिन्या नवयौवने न मिलति स्वेच्छाविहारो नृणाम्
तेषां जन्म निरर्थकं गतमिति ख्यातं परं मन्मथैः(३) ॥
तस्मान्मन्मथकौतुकाय(४)पुरुषैरन्याङ्गना चात्मभि-
र्द्रष्टव्येति वदन्ति काश्यपमरुत्क्षोणीन्द्रवात्स्यायनाः ॥२२॥

तारापीडसुतो विनाशमगमत्कादम्बरीकाङ्क्षया
व्यामुक्तः किल पुण्डरीकमुनिरप्युच्चैर्महाश्वेतया ॥
ऊर्वश्या च पुरूरवा नरपतिः संत्याजितो जीवितं

---

(१) वन्यवधूर्नरैर्न मनसा व्यालापनीया भुवीति ग० पु० पाठः ।

(२) श्लोकद्वयं ग पु० नास्ति ।

(३) मुन्मादो मरणं तदा मनसिजव्यामोहतो जायते इति ग पु० पाठः ।

(४) चित्तनिवारणायेति ग० पु० पाठः ।

तस्माज्जीवितरक्षणाय कृतिभिर्गम्या परप्रेयसी(१) ॥२३॥

इति परदाराभिगमनसमुद्देशः ॥

## अथ दूतीलक्षणसमुद्देशप्रकरणम् [५]

दासीकारवधूर्नटी च विधवा बाला च धात्री सखी
मान्या प्रव्रजिता च भिक्षुवनिता सम्बन्धिनी शिल्पिनी ॥
मालाकारनितम्बिनी प्रभृतिका दौत्ये स्मृता योषित-
श्चाळाप्या कविभिः सदैव मदनव्यापारलीलाविधौ ॥२४॥

इति दूतीसमुद्देशः ॥

## अथ कष्टसाध्य-सुखसाध्य-त्याज्यस्त्रीसमुद्देशप्रकरणम् [६]

प्रौढा कान्तविमानिता बहुगुणा वन्ध्याऽऽलयन्त्याजिता(२)
रण्डा स्वैरपरा स्वतन्त्रगमना शिल्पप्रिया गायिनी ॥
षण्डोन्मत्तदरिद्रसेवकवधू रोगार्तिसम्पीडिता
नूनं सिद्ध्यति दूतिकानिगदिता रम्याभिसारोत्सवे ॥२५॥

इति स्वल्पसाध्यसमुद्देशः ॥

एका वल्लभरक्षिता परिजनालापे विरक्ता दृढा
निःस्नेहा गुरुयौवना गुरुजनाद्भीता च लज्जावती ।
श्लक्ष्णा सुन्दरनायका पतिरता शिष्यादिकान्ता तथा
दुःसाध्या कविशेखरेण तरुणी प्रोक्ता रतप्रार्थने(३) ॥२६॥
अज्ञाता द्विजवल्लभा गुरुवधूर्मित्राङ्गना रोगिणी
चेटी प्रव्रजिता सती (४)स्वसृजना चास्पृश्यजा योगिनी ॥

---

(१) तस्माद्गर्हितजीवितं बहुविधं लन्त्याजितं राजभिः इति ग० पुस्तके धृतः पाठः प्रकृताऽसम्बद्ध इव प्रतिभाति ।

(२) बहुगुणा रम्याऽनपत्या तथेति ग पु० पाठः ।

(३) रतिप्रार्थने ग पुस्तके पाठः ।

(४) रिपुवधूः शिष्या च गर्भान्विता । भ्रूणघ्नी मृतसन्ततिः खलजना चास्पृश्यजा गोत्रजा, गन्तव्या न कदापि तत्र पुरुषैरेताः स्त्रियः कामिभिः इति ग पु० पाठः ।

कौमारी रजकी च राजवनितस्त्वन्याश्च पुण्याङ्गना
गन्तव्या न कदाचिदेव पुरुषैरेताः स्त्रियः कामिभिः ॥२७॥
नद्यां देवगृहे चतुष्पथतटे शैलस्य सानौ जले
मान्याग्नि(१)द्विजसन्निधौ परगृहे दुर्गे श्मशाने वने ।
सन्ध्यायां दिवसे कदापि सुरतं पुंभिर्विवाहोज्ज्वलै-
र्दृष्टान्तेन(२)विरोधसङ्कटमिति त्याज्यं सदा यत्नतः ॥२८॥
अष्टम्यां हिमरश्मिशेखरतिथौ हीने च पूर्णाभिधे
भानोः संक्रमणे व्रते च शरदि ग्रीष्मे निशायामपि ।
यातायातपरिश्रमे खरगदे सम्भोगचेष्टां
नरः कुर्यान्नैव कदाचिदेव सुरतीत्याहुर्मुनीन्द्राः स्फुटम्(३)२९

इति त्याज्यसमुद्देशः ॥

## अथ सुरतस्थानाभिलाषसमुद्देशप्रकरणम्[७]

स्फूर्जद्दीपशिखोज्ज्वले सुलळिते रम्योत्तमे सुस्थले(४)
धूपोद्गारमनोहरे सुकुसुमस्रग्गन्धशोभान्विते ।
वीणातालरवाकुले मनसिजप्रस्तावनामण्डिते
सम्भोगः कुशलैः स्वकीयभवने कार्यो यथाकाङ्क्षया ॥३०॥

इति विहितस्थानसमुद्देशः ॥

उक्त्वा गच्छति लज्जिता विरमते प्रेम्णा मनागीर्ष्यते
केशानां च विजृम्भणं (५)रचयते चुम्बत्यसौ बालकम् ।
गात्रं भञ्जति सादरं विहसति व्यक्तं च नो भाषते

---

(१) गुर्वग्नि ग पु० पाठान्तरम् ।
(२) विवेकाञ्चलि दृष्ट्वाऽनेनेति ग पु० पाठः ।
(३) नास्त्ययं श्लोको ग पुस्तके ।
(४) सुभ्रते ग पु० पाठः ।
(५) रचयति प्रस्तौति गाथां मुहुः । आलिङ्गत्यपरां विरौति पुरुषं चुम्बत्यसौ बालकम् , गात्रं भञ्जति जृम्भते विहसति प्रत्युत्तरं याचते । इति ग पु० पाठः ।

भावैरेभिरिह स्फुटं मृगदृशां ज्ञेयोऽभिलाषः सदा ॥ ३१ ॥

## अथालिङ्गनभेदसमुद्देशप्रकरणम् [८]

मालयापूरितकुन्तलः सुवसनः श्रीरागरागो(१)ज्ज्वलो
नानाभूषणसुन्दरः स्मरवशात्ताम्बूल(२)पूर्णाननः :
स्फूर्जद्दीपमनोज्ञचारुभवने शय्यातले नायको
रागार्थं परिरम्भणं प्रथमतः कुर्यात्समं योषिता ॥ ३२ ॥
वृक्षारूढकसञ्ज्ञकं प्रथमतः प्रोक्तं लतावेष्टितम्
तस्माज्जाघनविद्धकावपि मतावूरूपगूढं ततः ॥
ज्ञातव्यं तिलतण्डुलं रसविदामालिङ्गनं योषिताम् ।
क्षीरं नीरपुरःसरं निगदितं तस्माच्च लालाटिकम् ॥ ३३॥
एकेन पादेन पदं स्वभर्त्तुरन्येन चाक्रम्य तदूरुभागम् ।
आपीड्य दोर्भ्यामपि कान्तपृष्ठं वृक्षाधिरूढं प्रवदन्ति सन्तः(३) ३४
ऊर्ध्वं भुजाभ्यामवलम्ब्य यष्टिं(४) क्षोणीरुहं वल्लिरिवाधिरुह्य ।
नारी प्रियञ्चुम्बति निस्तरङ्गा आलिङ्गनं वल्लरिवेष्टितं तत् ।३५।
श्रोणीतटे बाहुयुगेन कान्तमापीड्य मुक्ताम्बरकेशभागा ॥
वक्त्रासवं स्वादयति प्रहृष्टा तज्ज्ञैः स्फुटं जाघनमेतदेव ॥३६॥
स्थिरोपविष्टं स्वविभु(५)म्पुरन्ध्री सम्मीलिताक्षं स्वकरप्रबन्धात्।
आविद्ध्यति प्रेमवशं कुचाभ्यामालिङ्गनं विद्धकमेतदाहुः ॥३७॥
कान्तो मनोजव्यथिताङ्गयष्टेरापीडयेदूरुयुगं युवत्याः
ऊरूपघातेन कविप्रवीरैरूरूपगूढं तदिति प्रदिष्टम् ॥ ३८ ॥
यद्बाहुवक्षोजघनेन गाढमन्योन्यससंक्तशरीरयष्ट्योः(६)

---

(१) सुवसनः स्निग्धाङ्गरागो ग पु० पाठः ।
(२) स्मररसस्ताम्बूलेति ग पु० पाठः ।
(३) तज्ज्ञाः—ग पु० पाठः ।
(४) भुजाभ्यां सरलाङ्गयष्टीति ग पु० पाठः ।
(५) पुरुषम्— ग पु० पाठः ।
(६) यष्ट्या—ग पु० पाठः ।

सानन्दगाढं बहुधा कृतं यदाश्लेषणं(१) तत्तिलतण्डुलाख्यम् ॥३९॥
गात्रोपरिष्टादथ तल्पमध्ये संलीयते यन्मिथुनं शरीरे ।
कामाँभिधानं क्षतपूर्वचेष्ट(२)मालिङ्गनं क्षीरजलं तदुक्तम् ॥४०॥
अन्योन्यसंसक्तमुखं कपोलं नेत्रं ललाटं हृदयं च बाहु ।
सानन्दमालब्धनिमीलिताक्षं(३)लालाँटिकं तत्त्वविदो वदन्ति॥४१॥

इत्यालिङ्गनसमुद्देशः ॥

## अथ चुम्बनसमुद्देशप्रकरणम् [ ९ ]

गण्डस्थलीमस्तकदन्तवासोग्रीवाकुचोरस्तनचूचुकानि ॥
आलिङ्गनानन्तरमेव यूनोः स्थानानि चुम्बस्य वदन्ति तज्ज्ञाः॥४२॥
कक्षायुगं रागनितम्बिनीनां कन्दर्परागस्फुरणप्रवीराः ॥
चुम्बन्ति कामं तरलायताक्ष्या देशस्य सात्म्येन सदैव लाटाः॥४३॥
कान्तोऽङ्गनाया वदने स्वकीयं(४) वक्त्रं समारोप्य बलेन यत्र ।
न चुम्बति क्रोधवशेन नारी स्याच्चुम्बनं तन्निमिताभिधानम् ॥४४॥

पत्युर्मुखे स्वं च मुखं निवेश्य
प्रेम्णा मनागश्चति दन्तवस्त्रम्(५) ।
तच्चेन्न(६) गृह्णात्यपि कम्पितोष्ठी
प्रोक्तं मुनीन्द्रैः स्फुरितं विनोदात् ॥ ४५ ॥
हस्तेन नेत्रे परिमील्य भर्तुः
सम्मीलिताक्षी वदने स्वजिह्वाम् ।
निःक्षिप्य च क्रीडति यत्र लोला
ख्यातं रसज्ञैरथ(७) घृष्टसंज्ञम् ॥ ४६ ॥

---

( १ ) कान्तस्य गाढं समुपाकृतोयमालिङ्गनामिति ग पु० पाठः ।
( २ ) भिधानात्कृतपूर्णचेष्टमिति ग पु० पाठः ।
( ३ ) आनन्दभावभ्रममीलिताक्षं ग पु० पाठः ।
( ४ ) यमाक्षिप्य वक्त्रं कुतुकेन यत्रेति ग पु० पाठः ।
( ५ ) वेष्टम्—ग पु० पाठः ।
( ६ ) उच्चैर्नेति ग पु० पाठः । ( ७ ) ज्ञैः खलु—ग पु० पाठः ।

हस्ताङ्गुलीसम्पुटकेन यत्र कान्तोष्ठमादाय रसज्ञया च ।
आच्छादयन्ती रसनां विलासात्(१) स्याच्चुम्बनं पीडितमेतदेव ॥४७
कान्तामुखं स्वाधरसम्पुटेन पीत्वा मुहुः स्वादयति क्रमेण ।
नारी च तेनैव विधानकेन ज्ञेयं मुनीन्द्रैरिति सम्पुटाख्यम् ॥४८॥
ओष्ठेन कान्तस्य मुखोष्ठयुग्मं निपीय जिह्वाञ्चिततालुभागा(२) ।
चुम्बोत्सवे नृत्यति यत्र नारी प्रोक्तं समोष्ठं मुनिभिः पुराणैः॥४९॥

इति चुम्बनसमुद्देशः ॥

## अथ नखाघातसमुद्देशप्रकरणम् [ १० ]

कक्षाकुचोरुस्तन(३)कुक्षिनाभिश्रोणीललाटाङ्घ्रिकरेषु सद्यः ।
साङ्गुष्ठसर्वाङ्गुलिकैश्च सर्वैः सेव्यः स एष स्तनकन्धराणाम्(४)॥५०॥
संस्थापनं मन्मथरागराशेरुक्तं कृतज्ञैश्छुरिताभिधानम् ।
वक्षोजकन्दर्पगृहाऽधरेषु देयं नवोढाप्रमदाजनानाम् ॥ ५१ ॥
कण्डूयनेनैव शिरोरुहाणां यत्सोपयोगं(५) परिकीर्त्तयन्ति ।
अर्धेन्दुसङ्काशमिदं नखज्ञैरर्द्धेन्दुसंज्ञं कथितं समासात् ॥ ५२ ॥
कक्षानितम्बस्तनपार्श्वकण्ठे दातव्यमेतत्करजं सदैव ।
अर्द्धेन्दुरेखद्वितयं प्रयुक्तं स्यान्मण्डलाख्यं मदनावतंसम् ॥५३॥
ऊरूपदे(६) कामगृहे नितम्बे प्रोचुर्मुनीन्द्रा विनियोगमस्य ।
स्यादेव सर्वैर्नखरैः सुलग्नैस्तज्ज्ञैः किलोक्तं(७)शशसम्प्लुताख्यम् ५४
सीमन्तपार्श्वे हृदि चूचुकादावेतत्प्रयोज्यं सुरतोपयोगे ।

---

( १ ) आस्वादयेन्निर्दशनं विनोदात्—ग पु० पाठः ।

( २ ) ओष्ठेन कान्तोष्ठयुगं निपीय जिह्वां निधायाप्यथ तालु-भागे इति ग० पु० पाठः ।

( ३ ) कुचोरःस्थल इति, कुचोरुस्थलेति च पाठान्तरम् ।

( ४ ) सेव्यः सदैव स्तनकन्धरादाविति ग० पु० पाठः ।

( ५ ) णामस्योपयोगमिति ग० पु० पाठः ।

( ६ ) ऊरुतटे इति ग० पु० पाठः ।

( ७ ) शशकप्लुताख्यमिति ग० पु० पाठः ।

सर्वाङ्गुलीयैः स्तनमध्यभागे पश्चादधोऽङ्गुष्ठभवेन रेखा(१) ॥५५॥
व्यक्तीकृता कोमनखा पदे यन्म(२)यूरपादं तदुदीरयन्ति ।
अत्यर्थमेव(३) स्फुरितोर्ध्वरेखां प्राहुः क्षतं पङ्कजपत्रसंज्ञम् ॥५६॥
रेखायुगं चोज्ज्वलकामभावः स्तनान्तकक्षाजघनस्थलेषु ।
विश्लेषदेशान्तरगे च नारीसंस्कारकं दुर्दरकं वदन्ति ॥ ५७ ॥
पुंसः शरीरे युवतीकुचे वा क्षतं नखस्य प्रतिवीक्ष्य सद्यः ।
कन्दर्परागाकुलचित्तप्रवृत्तिर्मुनेरपि स्यात्किमुतो नरस्य(४) ॥५८॥
सर्वस्वमेवास्ति मनोभवस्य प्रेम्णा प्रयुक्तं करजं रतज्ञैः ।
नास्माद्द्वितीयं भुवि रागबीजमित्याह शीतांशुकलापकीरः(५) ५९

इति नखसमुद्देशः ।

## अथ दन्ताघातसमुद्देशप्रकरणम् [ ११ ]

दन्तप्रकाराश्च नखप्रकारैर्ज्ञेयाः समासेन समाश्रसद्भिः(६) ।
सीत्कारहुङ्कारविचेष्टिताद्यैः प्रायो विशेषाः पुनरेव नार्याः ॥६०॥
तथा नखास्तीव्रमुखाः समग्रा रागस्पृशो निर्मलदीप्तिभाजः ।
दन्ताः प्रदेया नखदानदेशे वक्त्रान्तराक्षिद्वितयं विहाय ॥६१॥
दन्तोष्ठसंयोगवशेन गण्डे दन्तप्रकाराः किल विभ्रमोऽयम् ।
अभ्यासयोगाद्युवतीजनानां स्यादन्यथा क्वापि विनोददेशम् ६२
(७)सन्दंशतो दत्तसमस्तबिन्दुरन्वर्थ एवाद्यशनप्रसङ्गात् ।
वक्षोजगण्डोदरसीमशोभी प्राप्नोति दन्तोयमिति प्रदिष्टः ॥६३॥

---

(१) सर्वाङ्गुलिक्रूरनखैः स्तनान्तः पश्चादधोऽङ्गुष्ठभवेन रेखेति ग० पु० पाठः ।

(२) व्यक्तीकृतायां मुनयस्तदेतदिति ग० पु० पाठः ।

(३) अलस्यमेवमिति ग० पु० पाठः ।

(४) किमु चित्रमस्येति ग० पु० पाठः ।

(५) केतुरिति ग० पु० पाठः ।

(६) समा एव समैश्च सद्भिरिति ग० पु० पाठः ।

(७) एतत्प्रकरणेऽन्तिमं पद्यत्रयमिदं नास्ति ग० पु० ।

ऊरुस्तने कण्ठकपोलयुग्मे मण्डाभ्रकं मण्डलतुल्यरूपम् ।
संशोभनं दन्ततमं युवत्याः प्रायो मुनीन्द्राः समुदीरयन्ति ॥६४॥
दीर्घाः क्षुरक्षाक्षतकाञ्जिनांग्या रेखाः स्तने चूचुकयोः प्रदेयाः ।
विशेषकाले स्मरणाय तज्ज्ञैर्दन्तोपयुक्तः किल लोकचर्यः ॥६५॥

इति दशनसमुद्देशः ॥

### अथ केशाकर्षणसमुद्देशप्रकरणम् [ १२ ]

भाव्या घना रौक्ष्यविवर्जिताश्च श्यामा विशाला बहलाः कचाः स्युः ।
चुम्बप्रदानावसरे प्रयोज्या रागोदयार्थं तरुणीजनानाम् ॥ ६६ ॥
द्वाभ्यां कराभ्यां च शिरः प्रकामं कृत्वा कचं चुम्बति वल्लभश्चेत् ।
तदेतदिष्टं च समस्तसंज्ञं स्यादेकहस्तेन तरङ्गरङ्गम् ॥ ६७ ॥
संवेष्ट्य सर्वाङ्गुलिभिः कचोष्टं सदा परा धारयति स्मरार्त्ता ।
भुजङ्गवल्लीपरिकीर्त्तितोऽयं रतोत्सवे केशकलाविधिज्ञैः ॥ ६८ ॥
कर्णप्रदेशे च कचे निपीड्य प्रेम्णा पतिश्चुम्बति वल्लभास्यम् ।
अन्योन्यहस्तग्रहविभ्रमेण कामावतंसं कवयो वदन्ति(१) ॥६९॥

इति केशसमुद्देशः ॥

इत्यादयो बाह्यरतप्रकाराः पूर्वं रतज्ञैरुपकल्प्यमानाः ।
अन्येऽप्यथो सन्ति बहुप्रभेदा नोक्ता मया विस्तरभीतिबुद्ध्या ॥७०॥

इति श्रीकविशेखरज्योतीश्वरविरचिते पञ्चसायके बाह्यभोगसमुद्देशो नाम षष्ठः सायकः(२) ॥

अथ सप्तमः सायकः ।

### अथ नाडीज्ञानसमुद्देशप्रकरणम् [ १ ]

अथाभिदध्मः सुरतप्रबन्धानशेषवैदग्ध्यविशेषरम्यान् ।
मनोभवागारविशेषमादौ यथास्वरूपं कथयन्ति धीराः(३) ।

---

(१) द्वाभ्यामित्यारभ्य पद्यत्रयमेतत्प्रकरणीयं ग० पु० न दृश्यते, घपुस्तके तु मध्यस्थमुपलभ्यते ।
(२) अत्र ग पुस्तके चतुर्थसायकसमाप्तिर्निर्दिष्टा ।
(३) इदं पद्यमादिमं ग० पु० नास्ति ।

मनोभवागारमुखेऽबलानां तिस्रोऽथ नाड्यः प्रमदाजनानाम्(१)।
समीरणी(२)चान्द्रमसी च गौरी विशेषमासामुपवर्णयामि ॥१॥
प्रधानभूता मदनातपत्रे समीरणी नाम विशेषनाडी।
तस्या मुखे यत्पतितं नृवीर्यं तन्निष्फलं स्यादिति चन्द्रमौलिः ॥२॥
या चापरा चान्द्रमसी च नाडी कन्दर्पगेहे भवति प्रधाना।
सा सुन्दरी योषितमेव सूते लाव्या भवेदल्परतोद्गमेन ॥ ३ ॥
गौरी च नाडी यदुपस्थमध्ये प्रधानभूता कथिता तु तज्ज्ञैः(३)।
पुत्रं प्रसूते च वराङ्गना सा (४)कष्टोपभोग्या सुरते प्रदिष्टा ॥ ४ ॥

अथ बन्धसमुद्देशप्रकरणम् [ २ ]

प्रसारितोरुद्वितयस्य योगा(५)द्गाढापि नारी श्लथतामुपैति।
संलग्नजानुद्वयसम्प्रयुक्ता श्लथापि सङ्कोचमलं प्रयाति(६)॥५॥
तस्माद्युवत्याः प्रकृतिस्वभावं देशं च सत्त्वं मदनातपत्रम्(७)।
आलोक्य बन्धाः परिकल्पनीयाः सम्भोगकाले पुरुषै रतज्ञैः(८) ६
उत्तानसुप्तप्रमदोरुमध्ये स्थितः पतिः कामयते प्रकामम्।
तयोर्द्वयोः प्रीतिकरः प्रदिष्टो बन्धो नराणामतिवल्लभोऽग्रम्(९) ।७।
उत्तानसुप्ता युवती स्वपादौ स्कन्धे समारोप्य रमेत रम्या।
बन्धोऽयमुक्तः समपादसंज्ञः प्रयोजनीयं करिणीरतेषु(१०) ॥८॥

---

(१) तु नाड्यस्तिस्रो भवन्ति प्रमदाजनानामिति ग० पु० पाठः।
(२) समीरणा इति ग० पु० पाठः।
(३) भवति स्वभावात् इति ग० पु० पाठः।
(४) बहुधाङ्गना सेति ग० पु० पाठः।
(५) रुद्वयमध्ययोगादिति ग० पु० पाठः।
(६) मलं युवत्या इति घ पु० पाठः।
(७) तस्या युवत्याः प्रकृतिञ्च सत्त्वं देशं च भावं मदनातपत्रम् इति ग० पु० पाठः।
(८) रसज्ञैरिति ग० पु० पाठः।
(९) नागरोऽयमिति घ पु० पाठः।
(१०) यस्तरुणीरतेषु इति ग० पाठः।

एवंविधायाः स्त्रिय एव जङ्घे निजस्य जङ्घोपरि सन्निवेश्य ।
उद्भ्राम्य भूयः कटिमारमन्त्याः स्यादेष बन्धः किल नागराख्यः ९
धृत्वा स्वजानू गगने स्वपादौ शय्यातले स्त्री प्रथमं प्रसुप्ता ।
कुचौ पतिः पाणियुगेन(१) धृत्वा रमेत तद्व्योमपदाभिधानम् १०
एवं युवत्याश्चरणौ पृथिव्यामूर्द्धं तथान्यं परिकल्प्य कान्तः ॥
पद्भ्यां स्थितो हस्तयुगं च भूमौ त्रैविक्रमः स्यादिति बन्धराजः(२)॥
नितम्बबिम्बं किल नायकेन नार्यास्त्रिकं हस्तयुगेन धृत्वा ।
गुल्फौ निधाय स्थित एव स स्याद्बन्धोऽप्ययं चाटुककामुकः(३) स्यात्
ऊर्ध्वं मनागुरुयुगं प्रसार्य नारी तदीयोपरितामुपेत्य ।
दण्डायमानः सरलीकृताङ्गो ज्ञेयो रतज्ञैर्मदनध्वजोऽयम्(४) ॥१३॥
कान्तस्य वक्षःस्थलगौ स्वपादावालिङ्ग्य गाढं प्रमदा कराभ्याम् ।
(५)किञ्चित्स्तनोरुद्वययोगतश्चेद् ज्ञेयो बुधैरिङ्किविदाविनोयम्(६) १४

इत्युत्तानबन्धसमुद्देशः।

एवं युवत्या हृदये स्वपादं तल्पार्पितश्चान्यपदं नरस्य(७) ।
प्रौढाङ्गनावल्लभ एष बन्धः ख्यातः पृथिव्यामुपवीतिकाख्यः१५॥
(८)ऊर्ध्वं पतिर्मध्यगतो युवत्याः पार्श्वं गतायाः परिरभ्य देहम् ।
यूनोस्त्रिकालोलनतो रतज्ञैरुदाहृतः(९) सम्पुटनामधेयः ॥१६॥
पार्श्वे स्थितायाः मृगशावकाक्ष्याः पृष्ठावलम्बी(१०) रमणः प्रसुप्तः।

(१) पाणितलेन इति ग० पु० पाठः ।
(२) त्रिस्वराज इति ग० पु० पाठः ।
(३) चाटुकफेलुक इति ग०पु०, चाटुकफेरुक इति च घ०पु०पाठः
(४) नास्त्ययं श्लोको ग० पु० ।
(५) किञ्चिन्नतोरुद्वययोगकश्चेति ग० पु० पाठः ।
(६) रित्यवदारितोयमिति ग० पु० पाठः ।
(७) तथार्पितं तल्पगतं तदन्यमिति ग० पु० पाठः ।
(८) ऊर्ध्वोरिति ग पु० पाठः।
(९) इत्याहृत इति ग० पु० पाठः ।
(१०) तत्पृष्ठवर्तीति ग० पु० पाठः ।

लिङ्गस्मरागारनिवेशयोगादिहोपदिष्टः किल नागबन्धः ॥ १७ ॥

इति पार्श्वबन्धसमुद्देशः ॥

पद्मासनं सम्परिकल्प्य भर्ता क्रोडोपविष्टां युवतीं रमेत ।
अन्योन्यकण्ठार्पितबाहुबन्धं(१) पद्मासनाख्यं प्रवदन्ति सन्तः॥१८॥
कान्तो नितम्बस्थित एव नार्याः श्रोणीं कराभ्यां यदि याति धृत्वा ।
आस्फालनात्सापि(२) कटिप्रबन्धात्प्रोक्तो मुनीन्द्रैरिति कीर्त्तिबन्धः॥

इत्युपविष्टसमुद्देशः ॥

अधोमुखस्थां रमयेच्च नारीं तत्पृष्ठवर्ती पशुतुल्यरूपः ।
भर्ता परिक्रीडति भावहीनो निर्दिश्यते हारिण एष बन्धः ॥२०॥
(३)स्वयं स्वहस्ते धृतगुल्फयुग्मा नम्राननां यत्र मृगीव नारी ।
ऊर्ध्वं स्थिता भर्तरि मण्डुकाख्यः प्रोक्तो मुनीन्द्रैः कठिनाङ्गनायाः॥
दन्तावलच्छागरङ्गमाणां नानाप्रबन्धैश्च भवेत्प्रबन्धः(४) ।
इत्थं रसज्ञैरनुलापनीयं नोदाहृतं विस्तरभीतितस्तत्(५) ॥२१॥

इत्यधोमुखसमुद्देशः ॥

अन्योन्यदोःपञ्जरमध्ययाताः स्तम्भं यदा जानुयुगेन मग्नाः ।
निष्पीड्य नारी पतिमध्यसंस्था रमेत दध्यायतकं वदन्ति(६) ॥२३॥
एको युवत्या यदि कान्तहस्ते जानुः स्थितः स्यादपरः पृथिव्याम् ।
कान्तं कराभ्यामुपगूहयन्त्याः ज्ञेयं(७) रसज्ञैः करणं त्रिपादम् २४

इत्यूर्ध्वस्थितसमुद्देशः ॥

---

(१) बाहुयोगादिति ग० पु० पाठः ।

(२) आस्फालयेद्वापीति ग० पु० पाठः ।

(३) अयं श्लोको नास्ति ग पु० ।

(४) क्रीडाप्रकारैश्च भवन्ति बन्धाः इति ग० पु० पाठः ।

(५) विस्तरभारतस्ते इति ग० पु० पाठः ।

(६) मध्यजाता, स्तम्भा यदा बाहुयुगेन भग्ना,'''पतिमूर्ध्व संस्थं रमेत्तदा व्यापतकं वदन्ति इति ग० पु० पाठः ।

(७) मुपगूह्य यस्माज्ज्ञेयमिति ग० पु० पाठः ।

सम्भोगतुष्टिर्न भवेद्युवत्याः कान्ते प्रसुप्ते लभते च नारी।
भर्ता च शय्यां विपरीतरत्यां कुर्यात्पुरन्ध्री पुरुषायितं सा(१)॥२५॥
अधोमुखी कान्तहृदि प्रसुप्ता दोर्भ्यां समालिङ्ग्य यदि प्रयाति।
गाढाङ्गनावल्लभ एष तज्ज्ञैर्बन्धः प्रदिष्टो विपरीतरूपः॥ २६॥
धूर्त! त्वमेवं विजितोऽस्यकस्माद्युद्धे मया पञ्चशरस्य नार्या।
इत्यादिकं भूरिविधं रटन्ती प्रायः सुखं विन्दति केलिरङ्गे॥२७॥
अल्पप्रसूता(२) ऋतुयोगयुक्ता गर्भालसा गर्भयुता च नारी(३)।
क्षीवा(४) नवोढा ज्वरिता च नारी वर्ज्या रतज्ञैर्विपरीतबन्धे॥२८॥

इति पुरुषायितबन्धसमुद्देशः॥

वामस्वभावान्मदनस्य रागो हस्तप्रहाराद्रतिमभ्युपैति।
तस्माद्यथास्थानमसौ विधेयो वराङ्गनायां सुरतप्रबन्धे(५)॥२९॥
यद्यङ्गना कान्तहृदि प्रहारं मुष्ट्या भजन्ती सुरतावतारे(६)।
सन्ताडितं नाम वदन्ति तज्ज्ञा विस्तीर्णहस्तेन तदा पताकम्॥३०॥
साङ्गुष्ठमध्याङ्गुलिसम्प्रहारात्सञ्जायते गण्डननामधेयम्(७)।
यः केवलाङ्गुष्ठभवोऽभिघातः प्रोक्तः कवीन्द्रैः स तु बिन्दुमालः ३१

(८)इति सन्ताडितादिसमुद्देशः॥

## अथ सीत्कृतादिसमुद्देशप्रकरणम् [ ३ ]

द्रवति न यदि नारी प्रौढरागादियुक्ता
मृदुनिधुवनयोगे दन्तसन्धौ समीरम्।

---

(१) अयं श्लोको ग० पु० न दृश्यते।
(२) अल्पप्रयुक्तेति ग० पु० पाठः।
(३) स्थूलतनुर्नताङ्गीति ग० पु० पाठः।
(४) क्षीणेति ग० पु० पाठ।
(५) सुरतोपदेशे इति ग० पु० पाठः।
(६) सुरतोपचारैः इति घ० पु० पाठः।
(७) कुण्डलनामधेयं इति घ० पु० पाठः।
(८) इदं प्रकरणं ग० पु० नास्ति।

पिबति दशनवासः किञ्चिदुद्भूय(१) भूयः
कविवदनमुनीन्द्रैः(२) सत्कृतं रागकारि ॥ ३२ ॥
नखकरयुगयोगात्पाटितो यो स्वदन्तैः
स्फुटति रटनशब्दस्तादृशं यत्कृतं स्यात् ।
जलधरजलबिन्दुर्यादृशं वारिमध्ये
पतति रटति नादं तादृशं सीकृतं स्यात्(३) ॥ ३३ ॥
पिकशिखिकलहंसक्रौञ्चपक्षिप्रजानां
ध्वनितमनुकरोतीत्यङ्गना यत्र चार्ता ।
मुखदशनविवर्त्तास्तत्कवीन्द्रा वदन्ति
स्तनितमिति समं स्याच्चित्रसंभोगकाले ॥ ३४ ॥

इत्यादियोगैः पृथुकामभावं सम्पाद्य नारीपुरुषौ चिरेण ।
नानानुरागौ रहसि प्रकामं सौख्यं समासादयतौ महान्तम् ॥३५॥
एते प्रयोगा न च सर्वदैव सर्वत्र योज्याः सुरते रतिज्ञैः ।
स्थाने च काले च वराङ्गनानां व्यक्तीकृतास्सुन्दरतां प्रयान्ति ३६
पञ्चेषुघोरान्तकनोद्धृताक्ष्णे लज्जाभयादुत्तमकं विलम्ब्य ।
कण्ठस्थलस्थोऽपि हि मूर्खबुद्ध्या संरम्यमाणो नरकं व्रजेत(४)३७

इति सीत्कृतादिसमुद्देशः ॥

## अथाष्टनायिकासमुद्देशप्रकरणम् [ ४ ]

यस्याः पतिर्निखिलकेलिकलानुरक्तः
पार्श्वं न मुञ्चति मनोभवविभ्रमेण ।
सा सुन्दरी सकलकेलिकलानिधाना
स्वाधीनपूर्वपतिकेति वदन्ति तज्ज्ञाः ॥ ३८ ॥

---

(१) दुग्मुच्येति ग० पु० पाठः ।
(२) कथितमिह रसज्ञैरिति ग० पु० पाठः ।
(३) अयं श्लोको ग० पु० नास्ति ।
(४) श्लोकद्वयं ग० पु० नास्ति ।

पुष्पाङ्गरागरुचिरा तरुणी प्रियस्य
तिष्ठत्यनागमनहेतुविचारलोला ।
या वासवेश्मनि चिरं प्रतिदेविताशा(१)
सोत्कण्ठितेति कथिता कविभिः पुराणैः ॥ ३९ ॥
स्रक्चन्दनाम्बरविभूषणभूषिताङ्गी
या वल्लभागमनमार्गनिबद्धदृष्टिः ।
तल्पं गता रुचिरवासगृहे च शेते
सङ्कीर्त्तिता जगति वासकसज्जितेयम् ॥ ४० ॥
क्रोधात्प्रयाति चरणे पतितेऽपि कान्ते
प्रायः प्रचण्डवचनोच्चरणैर्निरस्य ।
पश्चात्तदीयविरहज्वरदीपिताङ्गी
सा कीर्त्तितेति कलहान्तरिता रतज्ञैः ॥ ४१ ॥
सङ्केतकं प्रियतमः स्वयमेव दत्वा नैवागतः समुचिते समयेऽपि यस्याः ।
दूतीवचोमृतरसप्रधृताङ्गयष्टिः सा वर्णिता कविवरैरिह विप्रलब्धा ४२
प्रातर्विलक्षवदनः स्मरभावयुक्तो
निद्रालसालसगतिर्नखरक्षताङ्गः ।
यस्याः प्रयाति पतिराभिमुखं युवत्याः
सा खण्डितेति कथिता कविशेखरेण(२) ॥ ४३ ॥
आरब्धरङ्गरचना च विचक्षणा च (३)
या निर्जिता च मदनेन मदेन याति ।
गुप्ताभिसाररसिका पतिवेश्मगन्तुं
सा कीर्तिता मुनिवरैरभिसारिकेति ॥ ४४ ॥
देशान्तरं प्रवसितो रमणश्च यस्याः

---

( १ ) प्रपावला नहि चिरं परिदेवनीयेति ग० पु० पाठः ।
( २ ) कविभिः पुराणैरिति ग० पु० पाठः ।
( ३ ) आरम्भसभङ्गचरिता विकला च नारीति ग० पु० पाठः ।

दत्त्वाऽवधिं चिरतरं गुरुकार्ययोगात् ॥
दुर्वारदुःखदहनैःप्रतिदीपिताङ्गी
सा प्रोषितेति कथिता कविभिः पुराणैः ॥ ४५ ॥

इत्यष्टनायिकासमुद्देशः ॥

यावच्चन्द्रकला किरीटहृदये शैलात्मजा वर्तते(१)
यावद्वक्षसि माधवस्य कमला सानन्दमानन्दति ।
यावत्कामकला विवर्तचटुला क्षोणीतले सर्वदा(२)
तावच्छ्रीकविशेखरस्य कृतिनः कीर्त्तिस्तु देदीप्यताम्(३) ४६
ये दीनेषु दयालवः स्पृशति यानल्पे न च श्रीमदो
व्यग्रा ये च परोपकारकरणे रुष्यन्ति नो याचिताः ।
स्वस्थाः सत्यपि यौवनोदयमहाव्याधिप्रकोपेऽपि ये
ते भूमण्डलमण्डनैकतिलकाः सन्तः कियन्तो जनाः ॥ ४७ ॥
यावल्लेखां वहति शिरसा शङ्करः शीतरश्मे-
र्यावद्वेदा वदनकमले ब्रह्मणः सान्ति साङ्गाः ।
यावद्गङ्गा वहति भुवने यावदाभाति भानु-
स्तावल्लोकान्सुखयतु कृतिर्ज्योतिरीशस्य रम्या (४)॥ ४८ ॥

इति श्रीकविशेखराचार्यविरचिते पञ्चसायके सप्तमः सायकः(५)॥

समाप्ता पञ्चसायक(५)मञ्जरी ।

---

(१) शैलाधिराजात्मजेति ग० पु० पाठः ।
(२) चटुलं क्षोणीतलं राजते इति ग० पु० पाठः ।
(३) काव्यं मुदे दीव्यतामिति ग० पु० पाठः ।
(४) यावदाकाशभानुस्तावत्कीर्तिर्वसतु विमला सा त्रिलोकीञ्च पायात् इति ग० पु० पाठः ।
(५) अत्र गपुस्तके पञ्चमसायकसमाप्तिर्दृश्यते ।

## अथ नर्मकेलिकौतुकसंवाद (८)मञ्जरी ।

अथा(१)नङ्गनाराचैरिषुभिश्छिन्नगात्रस्य कस्यचिद्यून:(२) परकीयया(३) सह नर्मकेलिक्षमनायिकां(४) वचनोक्तिमाह—

संपीतेऽधरमधुनि स्तने गृहीते
सञ्जाते गतवसने तवोरुयुग्मे ॥
सम्भोगे नवतरुणि ! वृथा हठस्ते
विक्रीते करिणि किमङ्कुशे विवादः ॥ १ ॥

संपीतेति । हे नवतरुणि—नवा चासौ तरुणी च नवतरुणी तस्याः संबोधनं हे नवतरुणि ! "यूस्त्र्याख्यावि"त्यनेन नदीसंज्ञायां सत्यां अम्बार्थसूत्रेण ह्रस्वविधानं बोध्यम् । सम्भोगे ते(५) वृथा हठः । सम्भोगशब्देन सर्वाङ्गीणव्यापार उपलक्षितः । अंज्युदंज्योः परस्परं घर्षणरूपो व्यापारः सम्भोगः । "अञ्जिमुदंञ्जिमन्वजेतीति" अश्वमेधे अश्वमैथुने तथा दृष्टत्वात्(६) । सार्दि(७)गृदिमभिव्याप्य रेतसेचनान्तः पुरुषकर्तृकव्यवसाययुक्तो नर्मव्यापार इति यावत् । निधुवनकर्त्तुर्वाक्यं परिहृत्य तद्वाक्यप्रतियोगिताकरणं हठः । अस्मिन्काले तादृशस्य हठस्यानुपयोगात् , अङ्गकार्यस्यानुष्ठानानन्तरं प्रधानकार्यस्याननुष्ठाने मनसिजक्रतोः साकल्येन विध्वंसदोषप्रसङ्गात् । तस्मात्कारणात्त्वदीयनिर्बन्धोऽस्मिन् रतिरहस्येऽतीव व्यर्थतर इत्यर्थः । तत्र दृष्टान्तप्रदर्शनेन दार्ष्टान्तिकवाक्यं द्रढयति विक्रीत इति । तस्मा-

---

(१) नाराचानां शल्यैः ।

(२) यशोदातनुजस्य । (३) गोकुलविषयस्थया गोपाङ्गनया ।

(४) नर्मकेलिव्यापारसम्बन्धिनीम् । (५) ते इत्यत्र कर्मणि षष्ठी

(६) "य आसां कृष्णे लक्ष्मणि सार्दिगृर्धि परावधीदि"ति श्रुतेः ।

(७) "रेतःपातस्य यत्स्थानं तद्वै सार्दिगृदि स्मृतम्" इति वैजयन्ती ।

द्विरदस्य विक्रयानन्तरं तत्संबन्धिनोऽङ्कुशस्य विक्रेतृसात्करणे विवादकरणस्यानवकाश इति भावः ॥ कतमस्मिन्नङ्गकार्ये अनुष्ठिते सति कतमत्प्रधानकार्यमननुष्ठितं येन मनसिजक्रतोः साकल्येन विध्वंसदोषता प्रसज्येत इत्युक्तं चेत्तत्राङ्गानुष्ठानकार्यं तस्यै साकल्येन विविच्य प्रदर्शयति संपीत इति । अधरस्य मधु अधरमधु तस्मिन् अधरमधुनि मया संपीते सतीत्यर्थात् तत्पानाशनकर्मणि असाधारणकर्तृत्वं मल्लक्षणजनस्यैव अभिप्रेतम् । द्वितीयमङ्गानुष्ठानं तस्यै निर्दिशति स्तने गृहीते इति । स्तनग्रहणव्यापारेऽपि मल्लक्षणजनस्यैवासाधारणकर्तृत्वं प्राधान्येन विख्यापितं भवति । अन्यदप्यनिर्वचनीयमङ्गकार्यस्यानुष्ठानं तस्यै निर्दिशति सजात इति । ऊर्वोः सकाशात् आभ्यन्तरीयशाटकनिराकरणे मल्लक्षणजनस्यैवाऽसाधारणकर्तृत्वं बोध्यम् ॥ सर्वत्राङ्गानुष्ठाने मल्लक्षणजनस्य यथा प्राधान्येन कर्तृत्वं प्रतिपादितं तथा प्रधानकर्मानुष्ठानेऽपि मल्लक्षणजनस्यैव प्राधान्येन कर्तृत्वं प्रतिपाद्यत इत्यर्थः ॥ १ ॥

अस्मिन् रहःप्रदेशे तव विवादकरणमतीवायुक्ततरमित्याह —

नारब्धं स्तनपरिरम्भणेषु वाक्यं
वैमुख्यं न व्यरचि न चुम्बने कदापि ।
किन्नीवीं गतभवले! रुणत्सि पाणिं
विक्रीते करिणि किमङ्कुशे विवादः ॥ २ ॥

नारब्धमिति । हे अबले! न विद्यते बलं यस्याः सा अबला तस्याः सम्बोधनं हे अबले—ननु स्त्रीणां अबलेति नामधेयं याथार्थ्यप्रकाशकत्वेन कथं युक्तत्वेनावभासते। सत्यम्, नर्मकर्मव्यवसायेषु नञ्समासस्य प्राधान्येन तादृगर्थस्याप्रमितिरूपत्वात्, नर्मकर्मव्यवसायेषु तादृक्समासपरिहारेण तत्प्रतियोगिकार्थस्य विवक्षितत्वात् । सबलेति नामधेयं(स्य) निर्दोषत्वेनाव-

गम्यते(१) । अन्यथा पञ्चशरसङ्ग्रामे आश्रयस्वरूपेणावस्थातुमधिकाराभावप्रसक्तेः । नीवीं गतं पाणिं किं किमर्थं रुणत्सि स्वकीयेन पाणिना मदीयपाणेः निःसारणं किमभिप्रायेण करोषि । अत्र नीवीशब्दः प्रधानस्थलोपलक्षणार्थः । ननु मनसिजक्रतोरङ्गप्रधानकर्मसु तादृक्स्थलविशेषे शयस्थापनविधेः(२) परिसंख्यानाभावात्–रतिरहस्यादिषु विधायकत्वेनाननुदर्शनान्निरर्थककर्मानुष्ठानेन क्रतुजन्यापूर्वस्य तादृक्कर्मानुष्ठानं विघातकं स्यादिति न च वाच्यम् । रतिरहस्यादिष्वनुक्तत्वेऽपि उत्पत्तिसूत्रेषु विधायकत्वेनानुदर्शनान्न तादृक्कर्मणो निरर्थकता, अपि तु चुम्बनादिव्यापारेषु शयस्थापनविधेः मनसिजस्योद्बोधदर्शनेऽव्यभिचारस्वरूपेण कारणरूपत्वान्न निरर्थकप्रयासो मदीयपाणिस्थापनस्य । तथाच सूत्रम्–"आलिङ्गनकुचधारणादि(३)रिव नीवीशयस्थापनस्याप्यभिमतत्वात् स्मरोद्दीपने ऽसाधारणकारणरूपत्वात्" । तस्मात्सफलप्रयासे त्वदीयनिरोधकरणमतीव निरर्थकमित्यर्थः । किञ्च हे प्रिये ! स्तनपरिरम्भणेषु मया क्रियमाणेषु स्तनधारणेषु प्रातिकूल्यप्रधानं वाक्यं नारब्धं यत्किञ्चिदपि नोच्चारितं, किन्तु तूष्णीम्भावमाश्रित्यानन्दरसनिम्नगायां निमज्ज्य स्थितमिव स्थितम् । किञ्च चुम्बने मयि क्रियमाणेऽपि वैमुख्यं विमुखस्य भावः वैमुख्यं पराङ्मुखत्वं न व्यरचि न रचितम् । यद्यपि तव तत्र पराङ्मुखीकरणमुचितमेव, तथापि मयि निर्व्यलीकप्रीतेरुपचयाधिक्यात् तादृक्रचनाभावस्य प्रादुष्करणं तव युक्तमेव, अप्रादुष्करणे क्रियमाणे तादृग्रसानन्दस्य विध्वंसनापत्तेः ॥ २ ॥

---

(१) अवलेत्यत्र नञः प्रसज्यप्रतिषेधार्थकत्वाभावात् इत्यर्थः ।

(२) हस्तस्थापनविधेरित्यर्थः । पञ्चशाखः शयः पाणिरित्यमरः ।

(३) आदिशब्देन ओष्ठपर्वस्य दक्षिणोत्तरपार्श्वयोः द्विजैः सङ्ग्रहणमिति भाष्यकृत् ।

किञ्च कञ्चुकीसंश्लेषान्तरायसंश्लिष्टे कुसुमशरस्य नर्मव्यापारे निर्गुणानन्दस्यानुपलभ्यमानत्वान्मदीयपाणिरोधनं तव युक्ताभिप्रायम्। उपाधिनिवृत्तौ सत्यां त्वदीयनिर्बन्धस्यानवकाशता प्रसक्तैव, अतः कारणात् निर्बन्धकरणं परिहृत्याऽनुकूलां नर्मसरणिमनुवर्त्तस्वेत्यनुशिक्षयति—

निःक्षिप्ता शशिमुखि ! कञ्चुकी स्तनाभ्यां
जङ्घाभ्यां ललितदुकूलमप्यपास्तम् ।
वैमत्यं कथमिह धार्यते भवत्या
विक्रीते करिणि किमङ्कुशे विवादः ॥ ६ ॥

निक्षिप्तेति । हे शशिमुखि–शशीव मुखं यस्याः सा शशिमुखी तस्याः सम्बोधनं हे शशिमुखि ! "यूस्त्र्याख्येति" सूत्रेण नदीसंज्ञायां सत्यां "अम्बार्थनद्येति" सूत्रेण ह्रस्वविधानं बोध्यम्। स्तनाभ्यां कञ्चुकी निःक्षिप्ता कुचस्थानादपहृत्य उपबर्हणस्याधस्तात्प्रज्ञातं(१) निहिता । ननु कञ्चुकीनिष्कासनस्य परमानन्दाविर्भावरसोत्पत्तौ कारणत्वाभावादाभ्यन्तरीयशाटकरूपस्य महदन्तरायस्य विद्यमानत्वान्निरर्थकोऽयं तव प्रयास इत्युक्ते चेत्तत्रोत्तरं प्रियां लक्षीकृत्यानुवदति जङ्घाभ्यामिति । अनेन वाक्येन तादृक्रसोत्पत्तौ महदन्तरायस्य विध्वंसनं मया कृतमित्यर्थः ! सूरसूतोः प्रादुर्भावे जायमाने कृत्स्नस्यान्धतमसः विध्वंसनमिवान्तरायद्वयस्य निर्हरणे क्रियमाणे सति अनुकूलवाक्यप्रतियोगिताकरणं तवातीवायुक्ततरमित्याह वैमत्यमिति । भवत्या त्वया इह वैमत्यं कथं धार्यते–अभीप्सितार्थप्रदातृत्वेन कथं प्रमाणीक्रियते, अपि तु तादृक्वैमत्यकरणं तवातीवानुचितम् । तत्र दृष्टान्तनिदर्शनेन प्रतियोगिताकरणस्य व्यर्थत्वं दर्शयति विक्रीत इति ।

---

(१) उपधानस्याधोभागे, नायिकया ज्ञातं यथा स्यात्तथेति क्रियाविशेषणमिदं बोध्यम् ।

चरमवाक्यस्य व्याख्यानं तु कृतप्रायत्वात्पूर्ववदेव। तद्वाक्यतात्पर्यार्थज्ञानस्य वैयर्थ्यप्रकाशकत्वेन प्रधानकार्यस्याऽननुरञ्जनेनाऽभिमतकार्यविध्वंसनेन विवादवाक्यस्य साधकतमत्वं बोध्यम् ॥३॥

मनोवृत्तित्रयेणान्यसात्कृतस्य वस्तुजातस्य तदवयवस्यानन्यसात्करणे अतिनिर्बन्धस्यानवकाशता प्रसज्ज्येतेति रघूद्वहयोः संवादमुखेनाऽतिनिर्बन्धवाक्यं दूषयति—

सौमित्रिर्वदति विभीषणाय लङ्कां
देहि त्वं भुवनपते! विनैव कोशम्।
एतस्मिन् रघुपतिराह वाक्यमेतत्
विक्रीते करिणि किमङ्कुशे विवादः ॥ ४ ॥

सौमित्रिरिति। सुमित्रायाः अपत्यं पुमान्सौमित्रिः, "अत इञ्" इत्यनेन सूत्रेण अपत्यार्थे इञ्प्रत्ययः। वदति ज्येष्ठभ्रातरं लक्षीकृत्येति यावत्। किं वदतीत्यपेक्षायामाह देहीति। हे भुवनपते-भुवनानां पतिः भुवनपतिः तस्य संबोधनं हे भुवनपते! कोशं विनैव, कोशशब्देन अकुप्यं वसुसञ्चयं लक्ष्यते। विभीषणाय रावणस्य कनीयसे भ्रात्रे, लङ्काख्यां पुरीं देहि, कृत्स्नं द्रव्यजातमात्मसात्कृत्य निष्केवलां(१) लङ्कां तस्मै प्रयच्छेत्यर्थः। ननु विभीषणाय कोशविशिष्टा लङ्का समर्पिता यथा तथा निरर्थकनिर्बन्धवाक्यं तिरस्कृत्य बाह्यनर्मकेलिवैशिष्ट्येनआ(२)सौमित्रिवाक्यश्रवणानन्तरं रघुपतिः श्रीरामचन्द्रः एतस्मिन्काले एतत् वक्ष्यमाणं वाक्यमाह उवाचेत्यर्थः॥ किमुवाचेत्याशंक्याह विक्रीत इति। हे सौमित्रे! लङ्कायाः समर्पणानन्तरं तत्सम्बन्धिकोशस्य तदधीनसात्करणे दुराग्रहस्यावसरः, अतः कारणात् कोशविशिष्टां लङ्कां तस्मै अर्पयिष्यामीत्यर्थः।

---

(१) धनरहितामित्यर्थः। अत्रात्यर्थो निःशब्दो चिन्तनीयः।
(२) अत्र कश्चित्पाठो भ्रष्ट इति प्रतिभाति।

हे प्रिये! सौमित्रिवाक्यं परिहृत्य कौशल्यात् आभ्यन्तरीयनर्मके-
लिषु अभ्यनुज्ञाप्रदानेन मां सभोगं(१)कारयस्वेति भावः ॥

इति श्रीकविराजमुकुटेन दण्डिना विरचितः नर्मके-
लिकौतुकसंवादः समाप्तः ॥ ० ॥
॥ ग्रन्थ संख्या ९० ॥
इति नर्मकेलिकौतुकसंवाद(६)मञ्जरी समाप्ता ।

---

(१) सम्भोगं कारयस्वेत्यनेन वाक्येन तव तादृशे कर्मणि स्वातंत्र्येण कर्तृत्वप्राधान्यं मम तु प्रयोज्यकर्तृत्वप्राधान्येनौपसर्ज-निककर्तृत्वप्राधान्यमिति वाक्यतात्पर्यार्थः ।

---

श्रीगणेशायनमः ।

# रतिमञ्जरी(७)मञ्जरी ।

नत्वा सदाशिवं देवं नागराणां मनोहरम् ।
रचिता जयदेवेन सुबोधा रतिमञ्जरी ॥ १ ॥
रतिशास्त्रं कामशास्त्रं तस्य सारं समाहृतम् ।
सुप्रबन्धं सुसाङ्गतं जयदेवेन भण्यते ॥ २ ॥

## पद्मिन्यादिनायिकालक्षणप्रकरणम्[१]

पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा ।
शशो मृगो वृषोऽश्वश्च स्त्रीपुंसोर्जातिलक्षणम् ॥ ३ ॥
भवति कमलनेत्रा नासिकाक्षुद्ररन्ध्रा
अविरलकुचयुग्मा चारुकेशी कृशाङ्गी ।
मृदुवचनसुशीला गीतवाद्यानुरक्ता
सकलतनुसुवेशा पद्मिनी पद्मगन्धा ॥ ४ ॥
भवति रतिरसज्ञा नातिखर्वा न दीर्घा
तिलकुसुमसुनासा स्निग्धनीलोत्पलाक्षी ।
घनकठिनकुचाढ्या सुन्दरी बद्धशीला
सकलगुणसमेता चित्रिणी चित्रवक्त्रा ॥ ५ ॥
दीर्घातिदीर्घनयना वरसुन्दरी या
कामोपभोगरसिका गुणशीलयुक्ता ।
रेखात्रयेण च विभूषितकण्ठदेशा
सम्भोगकेलिरसिका किल शङ्खिनी सा ॥ ६ ॥
स्थूलाधरा स्थूलनितम्बभागा
स्थूलाङ्गुलिः स्थूलकुचा सुशीला ।
कामोत्सुका गाढरतिप्रिया या
नितान्तभोक्त्री करिणी मता सा ॥ ७ ॥

शशके पद्मिनी तुष्टा चित्रिणी रमते मृगम् ।
वृषभे शङ्खिनी तुष्टा हस्तिनी रमते हयम् ॥ ८ ॥
पद्मिनी पद्मगन्धा च मीनगन्धा च चित्रिणी ।
शङ्खिनी क्षारगन्धा च मदगन्धा च हस्तिनी ॥ ९ ॥
बाला च तरुणी प्रौढा वृद्धा भवति नायिका ।
गुणयोगेन रन्तव्या नारी वश्या भवेत्सदा ॥ १० ॥
आषोडशाद्भवेद्बाला तरुणी त्रिंशका मता ।
पञ्चपञ्चाशका प्रौढा भवेद्वृद्धा ततः परम् ॥ ११ ॥
फलमूलादिभिर्बाला तरुणी रतियोगतः ।
प्रेमदानादिभिः प्रौढा वृद्धा च दृढताडनात् ॥ १२ ॥
बाला तु प्राणदा प्रोक्ता तरुणी प्राणहारिणी ।
प्रौढा करोति वृद्धत्वं वृद्धा मरणमादिशेत् ॥ १३ ॥

## कामकलावर्णनप्रकरणम् [२]

अङ्गुष्ठे चरणे च गुल्फनिलये जानुद्वये बस्तिके
नाभौ वक्षसि जङ्घयोर्निगदिता कण्ठे कपोलेऽधरे ।
नेत्रे कर्णयुगे ललाटफलके मौलौ च वामभ्रुवा—
मूर्ध्वाधश्चलनक्रमेण कथिता चान्द्री कला पक्षयोः ॥१४॥
सीमन्ते नयनेऽधरे च गलके कक्षस्तटे चूचुके
नाभौ श्रोणितटे मनोभवगृहे जङ्घातटे गण्डके ।
गुल्फे पादतले तदङ्गुलितटेऽङ्गुष्ठे च तिष्ठत्यसौ
वृद्धिक्षीणतया समं शशिकला पक्षद्वयोर्योपिताम् ॥ १५ ॥
शुक्लपक्षे वसेद्वामे पादाङ्गुलिकनिष्ठिके ।
शुक्लप्रतिपदादौ च कृष्णे चाधः प्रलम्बते ॥ १६ ॥
पुंसः सव्ये स्त्रियो वामे शुक्ले कृष्णे विपर्ययः ।
एतानि कामस्थानानि ज्ञेयानि नागरैः सदा ॥ १७ ॥

## सम्भोगसामान्यप्रकारवर्णनप्रकरणम् [३]

बलयुक्ता यदा नारी विपरीतरतिर्भवेत् ।
सञ्चाल्य तु कलास्थानं रन्तव्या कामिनी तदा ॥ १८ ॥
नेत्रे कण्ठे कपोले च हृदि पार्श्वद्वयेऽपि च ।
ग्रीवायां नाभिदेशे च कामी चुम्बति कामिनीम् ॥ १९ ॥
मुखे जङ्घे नितम्बे च जघने मदनालये ।
स्तनयुग्मे सदा प्रीतिः कामी चुम्बति कामिनीम् ॥ २० ॥
प्रेम्णा स्त्रियं समालिङ्ग्य सीत्कारं मुखचुम्बनम् ।
कण्ठासक्तं पुनः कृत्वा गाढालिङ्गनमाचरेत् ॥ २१ ॥
विधृत्य हस्तौ जघनोपविष्टः सीत्कृत्य वक्त्रे च मुदा प्रचुम्ब्य ।
भगे च लिङ्गं स्तनमर्दनञ्च दत्त्वापि कृत्वा प्ररमेच्च कामी ॥२२॥
केतक्यग्रनखं कृत्वा नखाङ्कान् पञ्च चैव वा ।
पृष्ठे च जघने योनौ दत्त्वा कामी रमेत्स्त्रियम् ॥ २३ ॥
नखरोमाञ्चितं कृत्वा दन्तेनाधरपीडनम् ।
ग्रीवामाकृष्य यत्नेन योनौ लिङ्गेन ताडनम् ॥ २४ ॥
लिङ्गप्रवेशनं कृत्वा धृत्वा गाढप्रयोगतः ।
पार्श्वद्वयेन सम्पीड्य निस्पृहं ताडयेद्भगम् ॥ २५ ॥
समालिङ्ग्य स्त्रियं गाढं स्तनयुग्मे च मर्दनम् ।
योनौ नाभौ च संमर्द्य निष्ठुरं लिङ्गताडनम् ॥ २६ ॥
केशं करेण संगृह्य दृढं सन्ताडयेद्भगम् ।
वदने चुम्बनं कृत्वा भगं हस्तेन मर्दयेत् ॥ २७ ॥

## नायिकारतिविशेषवर्णनप्रकरणम् [४]

कुचं करेण सम्मर्द्य पीडयेदधरं दृढम् ।
रमणं पद्मबन्धेन पद्मिनीरतिमादिशेत् ॥ २८ ॥
सीत्कारं चुम्बनं पीडा गले हस्ते च चुम्बनम् ।
क्षणे क्षणे स्तने हस्तं चित्रिणीरतिमादिशेत् ॥ २९ ॥

स्त्रीपुंसयोस्तथान्योन्यं भगे लिङ्गे च चुम्बनम् ।
रमणन्तु तथा गाढं शङ्खिनीरतिमादिशेत् ॥ ३० ॥
केशं करेण संगृह्य सुदृढं गजबन्धनम् ।
भगं करेण सन्ताड्य हस्तिनीरतिमादिशेत् ॥ ३१ ॥

## भगलिङ्गगुणदोषवर्णनप्रकरणम् [५]

कूर्मपृष्ठं गजस्कन्धं पद्मगन्धं सुगन्धि यत् ।
अलोमकं सुविस्तीर्णं पश्चैतद्भगमुत्तमम् ॥ ३२ ॥
शीतलं निम्नमत्युच्चं गोजिह्वासदृशं परम् ।
इत्युक्तं कामशास्त्रज्ञैर्भगदोषचतुष्टयम् ॥ ३३ ॥
मुसलं वंशकवीरं द्विविधं लिङ्गलक्षणम् ।
स्थूलं मुसलमित्युक्तं दीर्घं वंशकवीरकम् ॥ ३४ ॥

## नायकलक्षणप्रकरणम् [६]

स्त्रीजितो गायकश्चैव नारीसत्यपरः सुखी ।
षडङ्गुलशरीरश्च स श्रीमान् शशको मतः ॥ ३५ ॥
श्रेष्ठस्तु धार्मिकः श्रीमान् सत्यवादी प्रियम्वदः ।
अष्टाङ्गुलशरीरश्च रूपयुक्तो मृगो मतः ॥ ३६ ॥
उपकारपरो नित्यं स्त्रीजितः श्लेष्मणः सुखी ।
दशाङ्गुलशरीरश्च मनस्वी वृषभो मतः ॥ ३७ ॥
काष्ठतुल्यवपुर्धृष्टो मिथ्यावाक्यश्च निर्भयः ।
द्वादशाङ्गुललिङ्गश्च दरिद्रश्च हयो मतः ॥ ३८ ॥

## षोडशबन्धनिरूपणप्रकरणम् [७]

न रमन्ते यदा नार्यस्तृप्ता वा रमते च या ।
नानाबन्धांस्तथा वक्ष्ये रन्तव्या कामिभिः स्त्रियः ॥ ३९ ॥
पद्मासनो नागपादो लतावेष्टोऽर्द्धसम्पुटः ।
कुलिशः सुन्दरश्चैव तथा केशर एव च ॥ ४० ॥

हिल्लोलो नरसिंहोऽपि विपरीतस्तथाऽपरः ।
क्षुद्गारो धेनुकश्चैव उत्कण्ठश्च ततः परः ।
सिंहासनो रतिर्नागो विद्याधरस्तु षोडशः ॥ ४१ ॥
हस्ताभ्यां च समालिङ्ग्य नारीं पद्मासनोपरि ।
रमेद्गाढं समाकृष्य बन्धोऽयं पद्मसंज्ञकः ॥ ४२ ॥
पादौ स्कन्धयुगे हस्तौ क्षिपेल्लिङ्गं भगे लघु ।
प्ररमेत्कामुको नारीं बन्धो नागपदो मतः ॥ ४३ ॥
बाहुभ्यां पादयुग्माभ्यां वेष्टयित्वा रमेत्स्त्रियम् ।
लघु लिङ्गं ताडयेद्योनौ लतावेष्टोऽयमुच्यते ॥ ४४ ॥
स्त्रीपादावन्तरिक्षे तु किञ्चिद्भूमौ च जानुनि ।
स्तनयोर्मर्दने पीडा बन्धोऽयमर्द्धसम्पुटः ॥ ४५ ॥
स्त्रीपादद्वयमास्फाल्य हठाल्लिङ्गस्य ताडनम् ।
योनिमापीडयेत्कामी बन्धः कुलिशसंज्ञकः ॥ ४६ ॥
नारीपादद्वयं स्वामी धारयेदूर्ध्वदेशतः ।
कुचौ धृत्वापिबेद्वक्त्रं बन्धोऽयं रतिसुन्दरः ॥ ४७ ॥
स्त्रियो जङ्घे समापीड्य दोर्भ्यां गात्रस्य मर्दनम् ।
पुनः प्रपीडयेद्योनिं बन्धः केशरसंज्ञकः ॥ ४८ ॥
हृदि कृत्वा स्त्रियः पादौ कराभ्यां धारयेत्करौ ।
यथेष्टं ताडयेद्योनिं बन्धो हिल्लोलसंज्ञकः ॥ ४९ ॥
पादौ सम्पीड्य योनौ च हठाल्लिङ्गप्रवेशनम् ।
हस्तयोर्वेष्टनं गाढं बन्धो नृसिंहसंज्ञकः ॥ ५० ॥
पादमेकमुरः कृत्वा द्वितीयं कटिसंस्थितम् ।
नारीञ्च सुरमेत्कामी विपरीतस्तु बन्धकः ॥ ५१ ॥
पार्श्वोपरि पदौ कृत्वा योनौ लिङ्गेन ताडयेत् ।
बाहुभ्यान्ताडयेद्गाढं क्षुद्गारो बन्ध एव सः ॥ ५२ ॥
सुप्तां स्त्रियं समालिङ्ग्य स्वयं सुप्तो रमेत्पुनः ।

यल्लिङ्गं चालयेद्योनौ बन्धोयं धेनुकः स्मृतः ॥ ५३ ॥
नारीपादौ च हस्तेन धारयेद्गलके पुनः ।
स्तनार्पितकरो कामी बन्धश्चोत्कण्ठसंज्ञकः ॥ ५४ ॥
स्वयं जङ्घाद्वयं बाहौ कृत्वा योषित्पदद्वयम् ।
स्तनौ धृत्वा रमेद् कामी बन्धः सिंहासनो मतः ॥ ५५ ॥
पीडयेदूरुयुग्मेन कामुकः कामिनीं यदि ।
रतिनागः समाख्यातः कामिनीनां मनोहरः ॥ ५६ ॥
नार्याश्चोरुयुगं धृत्वा कराभ्यान्ताडयेत्पुनः ।
रमयेन्निर्भरं कामी बन्धो विद्याधरो मतः ॥ ५७ ॥
स्त्रियमानीय यत्नेन विधृत्य चरणद्वयम् ।
वशं नयति यः कामी रतिशास्त्रविचक्षणः ॥ ५८ ॥
रतिशास्त्रं समाकर्ण्य बन्धान्पद्मादिषोडश ।
नानाविधरतिं कुर्यात्कामिनीं कामुको जनः ॥ ५९ ॥
सर्वशास्त्रार्थवक्त्रेण जयदेवेन धीमता
मञ्जरी रतिशास्त्रस्य कृता नीता समाप्तताम् ॥ ६० ॥

इति श्रीजयदेवेन विरचिता रतिमञ्जरी समाप्ता ॥

इति रतिमञ्जर्याख्या(७)मञ्जरी ।

श्रीगणेशायनमः ।

## बाभ्रव्यकारिका(८)मञ्जरी ।

हरनयनानलकीलप्रदग्धकायस्य कामस्य ।
पुनरुज्जीवनकर्त्री कामेशी नः सदा पायात् ॥ १ ॥

करधृतकुसुमशरासनतच्छरपञ्चकविनिर्जितेशानौ ।
त्रिभुवनजयैकवीरौ रतिकामौ नः सदा शरणम् ॥ २ ॥

जनुषः प्रथमं पिता स्वकीयः स्ववशं येन समायितोऽधिकक्षि ।
जनविस्मयकारिवीरभावो मदनो मे मदनोदनं तनोतु ॥ ३ ॥

अभिसारिकानिगूहनचटुलचमत्कारिचन्द्रिकाचञ्चुः ।
कामस्य प्रियबन्धुर्बन्धुरघातङ्करोतु कुमुदबन्धुः ॥ ४ ॥

संसारपङ्कविनिमग्नजनोद्दिधीर्षु-
रालोच्य शास्त्रमखिलं परिगृह्य सारम् ।
सूत्रं चकार करुणाकुलतान्तरात्मा
वात्स्यायनाय ऋषयेऽस्तु मम प्रणामः ॥ ५ ॥

सङ्क्षिप्य वार्त्तिकं चक्रे बाभ्रव्यो ऋषिपुङ्गवः ।
कामित्रिवर्गसंसिद्ध्यै तमहं प्रणतः सदा ॥ ६ ॥

तातागुरोश्च किल दीक्षितसामराजा-
च्छास्त्रस्य तत्त्वमधिगम्य स कामराजः ।
सीमन्तिनीतरुणमानसनन्दनाय
बाभ्रव्यवार्त्तिकमिदं विवृणोति सद्यः ॥ ७ ॥

कामिनीकामविषयं कामतन्त्रं स्वकामतः ।
स्वाभिधानप्रसिद्ध्यर्थं कुर्वेऽहं कामिनन्दिनीम् ॥ ८ ॥

ज्ञानिनो योगिनो नैनां वीक्षन्ते कर्मिणो यदि ।
काकोपभोगविरसः किमाम्रः कटुतामियात् ॥ ९ ॥

काणादाः पाणिनीयाश्च विरुद्ध्यन्तेऽश्मबुद्धयः ।
न कण्टकेच्छुः करभोऽश्नाति माकन्दपल्लवम् ॥ १० ॥

अत्र (१)साधारण (२)साम्प्रयोगिक (३)कन्यासम्प्रयुक्तक (४)भार्याधिकारिक (५)पारदारिक (६)वैशिको(७)पनिषद्काख्यानि सप्ताधिकरणानि । तत्राद्ये (१)शास्त्रसङ्ग्रहः (२)त्रिवर्गप्रतिपत्तिः (३)विद्यासमुपदेशः (४)नागरिकवृत्तं (५)सहायदूतीकर्म च प्रतिपाद्यम् । एवमग्रिमाधिकरणानामपि, तच्च तत्रैव कथयिष्यामः । अनुबन्धचतुष्टयमाह—

अथातो धर्मार्थकामान्व्याख्यास्यामः ।
संक्षेपमिममित्युक्त्वा विस्तरोऽथ प्रवक्ष्यते ।
इष्टं हि विदुषां लोके समासव्यासभाषणम् ॥१॥
एवमर्थं च कामं च धर्मं चाप्याचरन्नरः ।
इहामुत्र च निश्शल्यमत्यन्तं सुखमश्नुते ॥२॥
किं स्यात्परत्रेत्याशङ्का यस्मिन्कार्ये न जायते ।
न चार्थघ्नं सुखं चेति शिष्टास्तत्र व्यवस्थिताः॥३॥

एवं-परस्परानुपघातकत्वेन यथाकालं यथोपपाद्यं वा । अत्यन्तं सुखं मोक्षम् । कामस्याधिक्यमाह किं स्यादिति । धर्मार्थयोर्निषेधः ॥ १ - ३ ॥

तयोरप्यङ्गतया ग्राह्यत्वमाह ।
त्रिवर्गसाधनं यत्स्याद्द्वयोरेकस्य वा पुनः ।
कार्यं तदपि कुर्वीत नत्वेकार्थं द्विबाधकम् ॥४॥
एभिरभ्यर्थिता वश्या रूपशीलगुणान्विता ।
लभते गणिकाशब्दं स्थानं च जनसंसदि ॥५॥
पूजिता सा सदा राज्ञा गुणविद्भिस्तु संस्तुता ।
प्रार्थनीया च गम्या च लक्ष्यभूता च जायते ॥६॥
योगज्ञा राजपुत्री च महामात्यसुता तथा ।
सहस्रान्तःपुरमपि स्ववशे कुरुते पतिम् ॥७॥
तथा पतिवियोगेऽपि व्यसनं दारुणं गता ।

**देशान्तरेऽपि विद्याभिः स सुखेनैव जीवति ॥८॥**

त्रिवर्गेति । कामशास्त्राङ्गभूतकाव्यनाटकसङ्गीतशिल्पादि-विद्यासम्पादितैः एभिर्धर्मार्थकामैः । एतेन स्त्रीणामपि परम्प-रयाध्ययनप्राप्तिः, विद्यामात्रस्य वेदमूलत्वात् । गणिका गण-हिता । विद्याफलमाह योगेति । योगो विद्याप्रवर्त्तनम् । वियोगो देशान्तरस्थितिः । व्यसनं शोकदुःखम् । सुखेन जीव-ति अर्थकामाभ्यामिति शेषः ॥ ४–८ ॥

**कलानां ग्रहणादेव सौभाग्यमुपजायते ।**
**देशकालव्यपेतायां प्रयोगः सम्भवेन्न वा ॥ ९ ॥**
**नरः कलासु कुशलो वाचालश्चाटुकारकः ।**
**असंस्तुतोऽपि नारीणां चित्तमाश्वेव विन्दति॥१०॥**
**नात्यन्तं सँस्कृतेनैव नात्यन्तं देशभाषया ।**
**कथां गोष्ठीषु कथयन् लोके बहुमतो भवेत् ॥११॥**
**या गोष्ठी लोकविद्विष्टा या च स्वैरविसर्पिणी ।**
**परहिंसात्मिका या च न तामवतरेद्बुधः ॥१२॥**
**लोकचित्तानुवर्त्तिन्या क्रीडामात्रैककार्यया ।**
**गोष्ठ्या सह चरन्विद्वान्लोककार्यं(१)नियच्छति१३**

देशः गुरुसान्निध्यवान् । कालो बाल्यम् । अथ पुंसो वि-द्याफलमाह असंस्तुतः अप्रशस्तोऽपि, विद्याग्रहोत्तरं सभा-प्रवेशः ।

लोकात । चरन् उद्वर्तनप्रसाधनानुलेपनपरिधानभूषण-मदिराद्युपसेवनविनिन्द्यक्रीडनकौतुकावेक्षणप्रासादोपवनविहारान्। लोकसिद्धं नागरिकवृत्तम् ॥ ९–१३ ॥

(१) अत्र व्याख्यानुसारेण 'लोकसिद्धं' इति पाठो द्रष्टव्यः ।

कामसिद्ध्यर्थं स्त्रीसाधनोपायमाह—

**आत्मवान्मित्रवान्युक्तो भावज्ञो देशकालवित् ।**
**अलभ्यामप्ययत्नेन स्त्रियं साधयते नरः ॥ १४ ॥**

इति बाभ्रवीयवार्त्तिककारिकायां
साधारणमधिकरणम् ॥ १ ॥

आत्मेति । इत्थमुपायैः स्त्रीवशीकरणचिन्तनवान् । मित्रवान् पीठमर्दविटचेटविभूषकमालाकारनापितताम्बूलिकतत्पत्नीवृद्धगणिकादिसहायवान् । युक्तः दूतीप्रेरणादिकारी । भावज्ञः प्रतिवेशपांसुक्रीडनसहाध्ययनादिभिः । देशेति । सङ्केतज्ञो मिथःसमस्थाज्ञो वा । एतेन साङ्केतिककपोतादिशब्दोऽप्युपलक्ष्यते १४

इति प्रथमाधिकरणविवृतिः ॥ १ ॥

अथ सुरतभेदं वक्तुं पीठिकामाह—

**षण्णवद्वादश स्वैवमायामेन यथाक्रमम् ।**
**शशादिभेदभिन्नानां त्रिधा साधनसंस्थितिः ॥१॥**
**संयोगे योषितः पुंसां कण्डूतिरपनुद्यते ।**
**तच्चाभिमानसंसृष्टं सुखमित्यभिधीयते ॥ २ ॥**

शशवृषाश्वाः पुमांसः षण्णवद्वादशायतलिङ्गाः । साधनं लिङ्गम् । तेन मृगीवडवाहस्तिन्यस्तिस्रो नायिकाः । पद्मिनीचित्रिणीशङ्खिन्यस्तु मृग्यादिस्वरूपविवेचनार्थमन्यत्रोक्ताः । तथाच सा व्यापिका जातिरिति भावः । क्रमेण तद्योगे समरतानि त्रीणि, विपर्यये षट्, तत्र च त्रीण्युच्चानि त्रीणि नीचानि—एवं नव इति प्रमाणतो रतावस्थानम् । चण्डमध्यममन्दवेगैः कालतस्तत् । रतिभेदकथनस्य फलमाह संयोग इति । आरम्भादुत्तरोत्तरम्मन्दवेगेऽधिको रागो वर्धते इति भावः ॥१–२॥

धातुक्षयाद्विरामेच्छा भवतीत्याह—

**सुरतान्ते सुखं पुंसां स्त्रीणां तु सुरते सुखम् ।**

धातुक्षयनिमित्तात्तु विरामेच्छोपजायते ॥ ३ ॥
मृदुत्वादुपमृद्यत्वान्निसर्गाच्चैव योषितः ।
प्राप्नुवन्त्याशु ताः प्रीतिमित्याचार्यव्यवस्थितिः॥४॥
एतावतैव युक्तानां व्याख्यातं साम्प्रयोगिकम् ।
मन्दानां त्ववबोधार्थं विस्तरोऽतः प्रवक्ष्यते ॥५॥

सुरतेति । स्त्रीणां चिराय धातुक्षयसम्भवान्न तासां विरामेच्छेत्यत आह मृदुत्वादिति । उपमर्दादिना निस्सहतायाः सम्भवादिति भावः । उपसंहरन्नाह एतावतेति । उपमर्देनोत्थयेत्यर्थः । साम्प्रयोगिकम्–आलिङ्गनचुम्बनादि । अधीतान्यशास्त्रत्वे सति अनधीतकामशास्त्राणां मन्दाणाम् । इति रतावस्थानम् ॥ ३-५ ॥

इदं च प्रीतिं विना न भवतीति प्रीतिभेदानाह—
अभ्यासादभिमानाच्च तथा सम्प्रत्ययादपि ।
विषयेभ्यश्च तन्त्रज्ञा विदुः प्रीतिश्चतुर्विधाम् ॥६॥
शब्दादिभ्यो बहिर्भूता या कर्माभ्यासलक्षणा ।
प्रीतिः साभ्यासिकी ज्ञेया मृगयादिषु कर्मसु॥७॥
अनभ्यस्तेष्वपि पुरा कर्मस्वविषयात्मिका ।
सङ्कल्पाज्जायते प्रीतिर्या सा स्यादाभिमानिकी॥८॥
प्रकृतेः सा तृतीयस्याः स्त्रियाश्चैवोपरिष्टके ।
तेषु तेषु च विज्ञेया चुम्बनादिषु कर्मसु ॥ ९ ॥
नान्योऽयमिति यत्र स्यादन्यस्मिन्प्रीतिकारणम् ।
तन्त्रज्ञैः कथ्यते सापि प्रीतिः सम्प्रत्ययात्मिका १०
प्रत्यक्षा लोकतः सिद्धा या प्रीतिर्विषयात्मिका ।
प्रधानफलवत्त्वात्सा तदर्थाश्चेतरा अपि ॥ ११ ॥
एताः प्रीतीः परामृश्य शास्त्रतः शास्त्रलक्षणाः ।
यो यथा वर्त्तते भावस्तं तथैव प्रयोजयेत् ॥ १२ ॥
विषयेभ्य इति बहुवचनात्तत्प्रीतिरनेकधा भवतीत्यर्थः ।

शब्दादिभ्य इति । वागगोचरेत्यर्थः । सङ्कल्पान्मानसात्कर्मणः । तृतीयप्रीतेर्लक्षणान्तरमप्याह नेति । प्रधानफलं नायिकासंयोगः । इतराः श्रवाघ्राणादयः । भावश्चित्ताभिप्रायः इति ॥ ६-१२ ॥

प्रीत्यनन्तरं सम्भाव्यानामालिङ्गनादीनां हेतुमाह—

**पृच्छतां शृण्वतां चापि तथा कथयतामपि ।**
**उपगूहविधिं कृत्स्नं रिरंसा जायते नृणाम् ॥ १३ ॥**

पृच्छतामिति । उद्दीपकत्वादिति भावः । कृत्स्नम्-बह्वृचसम्मतचतुःषष्ट्यध्यायात्मककलारूपत्वादस्य शास्त्रस्य । आलिङ्गन[1]चुम्बन[2]नखक्षत[3]दन्तक्षत[4]सांवेशन[5]सीत्कृत[6]पुरुषायित[7]औपरिष्टकानामष्टानामष्टविधत्वेन चतुःषष्टित्वम् । तत्र चत्वारि प्रीतियोगे चत्वारि सम्प्रयोगे । तत्रालिङ्गनम् स्पृष्टक[1]विद्धक[2]उद्घृष्टक[3]पीडितक[4]लतावेष्टितक[5]वृक्षाधिरूढ[6]तिलतण्डुल[7]क्षीरनीर[8]भेदेनाष्टधा । तत्र चत्वारि प्रीतियोगे चत्वारि सम्प्रयोगे । तत्र निमेषमिथःस्पर्शः स्पृष्टकम् । स्तनावेधपूर्वकस्पर्शो विद्धकम् । तमसि विजने वा मिथो गात्रोद्घर्षणमुद्घृष्टकम् । कुड्याद्यवष्टम्भेन तदेव पीडितकम् । लतावल्कलाभ्यामावेष्टयन्ती चुम्बेत्लतावेष्टिकम् । एकपादेन पादं द्वितीयेनोरुमाक्रम्य स्कन्धावसक्तबाहुश्चुम्बेत्तद्वृक्षाधिरूढम् । स्थितयोर्भुजोरुव्यत्यासेन मिथः सङ्घटनं तिलतण्डुलम् । मिथोनाभिव्यक्तावयवक्षीरनीरम् । केचित्तु उरूपगूहनजघनस्तनोपगूहनलालाटिकान्यन्यानि चत्वारीत्याहुः । मिथो ललाटस्पर्शे लालाटिकम् । अन्यत्स्पष्टम् ॥ १३ ॥

ननु प्रहणन-विरुतक-पुरुषायित-पुरुषोपसृप्त-चित्ररतादीनाङ्गा गतिरत आह—

**येऽपि ह्यशास्त्रिणः केचित्प्रयोगा रागवर्धनाः ।**
**आदरेणैव तेऽप्यत्र प्रयोज्याः साम्प्रयोगिके ॥१४॥**

शास्त्राणां विषयस्तावद्यावन्मन्दरसा नराः ।
रतिचक्रे प्रवृत्ते तु नैव शास्त्रं न च क्रमः ॥ १५ ॥

येऽपीति । रतिकाले कुत एतान्यालिङ्गनादीनि भवन्तीत्यत आह शास्त्राणामिति ॥ १४-१५ ॥

इत्यालिङ्गनम् ।

अथ चुम्बनम् ।

तच्च नैमित्तिक( स्वाभाविक )स्वाभिप्रायिकाभियौगिकभेदात्त्रिधा । तत्राद्यं मुग्धामध्ययोः द्वितीयमन्यासाम् । तृतीयं समयापेक्षम् । तत्राद्यं निमित्तकस्फुरितकघट्टितकभेदात्त्रिधा । समं तिर्यक्भ्रान्तकमनःपीडितकमिति चतुर्धेत्यपरे । बलात्स्वमुखे नायिकामुखसंस्पर्शो निमित्तकम् । बलाद्वदने प्रवेशितस्य नायकोष्ठस्य नायिकोष्ठेन चालनं स्फुरितकम् । बलादक्षिमीलनपूर्वकं जिह्वाग्रेण नायिकोष्ठघट्टनं घट्टितकम् । बलादुभयोः साम्येनाधरसंश्लेषः समम् । मोचनाय नायिकोष्ठतिर्यक्त्वे पत्युरपि तथाभावस्तिर्यक् । नायिकामुखे नायिकोष्ठभ्रामणं भ्रान्तकम् । अधरयोस्सम्यक्पीडनं पीडितकम् । अङ्गुलिमुखे पुटेनोष्ठमादाय जिह्वाग्रेण घट्टनं वा तत् ।

तदुक्तम्—

कृते प्रतिकृतं कुर्यात्ताडिते प्रतिताडितम् ।
करणेन च तेनैव चुम्बिते प्रतिचुम्बितम् ॥ १६ ॥

कृते प्रतिकृतं कुर्यादिति । द्वितीयङ्कलहचुम्बनउत्तरोष्ठसम्पुटकजिह्वायुद्धभेदाच्चतुर्धा । सुप्तस्याधरमवगृह्य दशनान्तर्गतं कृत्वोक्रोशतर्जनादिकं कुर्यात् तत्कलहचुम्बनम् । चुम्बत्याः स्वयमुत्तरोष्ठग्रहणमुत्तरोष्ठम् । ओष्ठसम्पुटेनोष्ठद्वयचुम्बनं सम्पुटम् । आस्योष्ठदशनघट्टनं जिह्वायुद्धम् । तदुक्तम् ताडिते प्रतिताडितम् इति । तृतीयं रागोद्दीपनछलितकमातिबोधिकसङ्क्रा-

न्तकहस्तपादाङ्गुल्यूरुचूम्बनभेदात्सप्तधा । सुप्तस्य जागराय चुम्बनं रागोद्दीपकम् । प्रमत्तस्यान्यतोमुखस्य वा जागराय चुम्बनं छलितकम् । सुप्तायाः प्रबोधाय चुम्बनं प्रातिबोधिकम् । आदर्शादिषु छायाया बालस्य चित्रप्रतिमाया वा चुम्बनं सङ्क्रान्तकम् । जनसमाजसंवेशे हस्तपादाङ्गुलिचुम्बनम् । निद्रावशादकामायाः प्रोद्दीपनमूरुचुम्बनम् । चुम्बितेप्रतिचुम्बितमिति । ललाटनयनगलकपोलवक्षःस्तनौष्ठान्तर्मुखोरुसन्धिबाहुनाभिमूलान्यपि कार्यतश्चुम्बनस्थानानि बोध्यानि ॥ १६ ॥

इति चुम्बनम् ॥

### अथ नखक्षतानि ।

नखक्षतानि पश्यन्त्या गूढस्थानेषु योषितः ।
चिरातीताप्यभिनवा प्रीतिर्भवति पेशला ॥१७॥

मूले बहुवचनेन भेदाष्टकं कथितम्भवति । तानि च छुरितकार्धचन्द्रकमण्डलरेखाव्याघ्रनखमयूरपदशशप्लुतोत्पलपत्रमित्यष्टधा । अनुद्गतरेखं सीत्कारमात्रजनकञ्छुरितकम् , तच्च हनुस्तनजघनेषु स्यात् । ग्रीवास्तनपृष्ठयोर्वक्रो नखपदनिवेशोऽर्धचन्द्रकः । तावेव सम्मुखौ द्वौ मण्डलम् । तच्च नाभिमूलककुन्दरवङ्क्षणेषु(१) स्यात् । सर्वस्थाने नातिदीर्घा रेखा रेखा । सैव वक्राग्रा व्याघ्रनखः । पञ्चभिर्नखैश्चूचुकाभिमुखम्मयूरपदम् । स्तनचूचुकसन्निकृष्टानि पञ्च नखपदानि शशप्लुतम् । स्तनपृष्ठे कमलपत्राकृत्युत्पलपत्रम् । प्रवासमसये स्मरणार्थमुर्वोः स्तनपृष्ठे च कृतं नखस्मरणीयकम् । तदेव कामसूत्रे कोलचर्चमित्युच्यते । अन्यान्याकृतिविशेषाद्यथेच्छङ्कल्प्यानि । नखक्षतानि च दीर्घानि गौडानाम् , लघूनि दाक्षिणात्यानाम् , मध्यगानि महाराष्ट्राणाम् । गूढेति परकीयाविषयम् , प्रीतिवर्धकत्वाच्चैपामावश्यकम् ॥ १७ ॥

---

(१) ऊरुसन्धिर्वङ्क्षणः ।

एतदेव तर्केण साधयति—

चिरोज्झितेषु रागेषु प्रीतिर्गच्छेत्पराभवम् ।
रागायतनसंस्मारि यदि न स्यान्नखक्षतम् ॥१८॥
पश्यतो युवतिं दूरान्नखोच्छिष्टपयोधराम् ॥
बहुमानपरस्यापि रागयोगश्च जायते ॥ १९ ॥
पुरुषश्च प्रदेशेषु नखदन्तैर्विचिह्नितः ।
चित्तं स्थिरमपि प्रायश्चलयत्येव योषिताम् ॥२०॥
नातः परतरं किञ्चिदस्ति रागस्य वर्धनम् ।
नखदन्तसमुत्थानां कर्मणां गतयो यथा ॥ २१ ॥

चिरेति । तनु अल्पं यदि नखक्षतं न स्यात्तदा विस्मरणेन प्रीतिरुच्छिन्ना स्यात् । प्रत्यक्षमपि प्रमाणयति पश्यत इति । पुरुषं प्रत्युक्त्वा स्त्रियं प्रत्याह पुरुष इति । प्रदेशेषु नखक्षतस्थानेषु । स्थिरमिति । सतीनामपि । दन्तपदमग्रिमसङ्गतिप्रदर्शनाय ॥ १८–२१ ॥

इति नखक्षतम् ॥

अथ दन्तक्षतम् ।

सिंहावलोकितेन कृते प्रतिकृतं कुर्यादित्यस्य व्याख्यानमाह—

वार्यमाणस्तु पुरुषो यः कुर्याद्दशनक्षतम् ।
अमृष्यमाणा द्विगुणं तत्तदेव प्रयोजयेत् ॥ २२ ॥
बिन्दोः प्रतिक्रिया माला मालायाश्चाभ्रखण्डकम् ।
ततः क्रोधादिनाविष्टा कलहं प्रति योजयेत् ॥२३ ॥

वार्यमाण इति । दशनक्षतमिति । दशनाश्च समस्निग्धरागयुक्तमाननिश्छिद्रतीक्ष्णाग्रा एव युक्ताः । तत्क्षतास्तु गूढकोच्छूनकप्रवालमणिमालाबिन्दुबिन्दुमालाखण्डाभ्रकवराहचर्वितभेदादष्टधा । रागमात्रं ज्ञेयं गूढम् । तदेव पीडनादुच्छूनकम् । दन्तोष्ठसंयोगेनारयन्तं कपोले पीडनात्प्रवालमणिः । स-

र्वदन्तैर्मणिमाला रेखारूपा। दन्तद्वयेन त्वगुद्दशनं बिन्दुः। सर्वैस्तथा बिन्दुमाला। मण्डलमिव खण्डाभ्रकम्। स्तनपृष्ठे संहताः पदीर्घावद्वयो(?)दशनपङ्क्त्यो वराहचर्चितकम्। एषां स्थानानि उत्तरोष्ठमन्तर्मुखन्नयनान्तं च विना चुम्बनवज्ज्ञेयानि। रागवर्धनार्थम्प्रतीकारानाह द्विगुणमिति। तदेव दन्तक्षतमेव। कस्य कः प्रतीकार इत्यपेक्षायामाह बिन्दोरिति। इवेन प्रीतिरुच्यते॥ २२-२३॥

सकलस्वरूपं द्वाभ्यामाह—

सकचग्रहमुन्नम्य मुखङ्कान्तस्य यत्पिबेत्।
निर्लीयेच्च दशेच्चैव तत्र तत्र मदेरिता॥ २४॥
उन्नम्य वक्त्रङ्कान्तस्य संस्थिता वक्षसः स्थलम्।
मणिमालाम्प्रयुञ्जीत यच्चान्यदपि लक्षितम्॥२५॥
दिवापि जनसम्बाधे नायकेन प्रदर्शितम्।
उद्दिश्यास्य कृतश्चिह्नं हसेदन्यैरलक्षिता॥२६॥
विकूणयन्तीव मुखङ्कुत्सयन्तीव नायकम्।
स्वगात्रस्थानि चिह्नानि सासूयेव प्रदर्शयेत्॥२७॥
परस्परानुकूल्येन तदेवाऽऽचेष्टमानयोः।
संवत्सरशतेनापि प्रीतिर्न परिहीयते॥ २८॥

सकचेति। तन्मुखम्। तत्र दन्तक्षतस्थानेषु। अन्यद्गूढकादिकमपि। दूरतोपि प्रतीकारक्रियामाह दिवापीति द्वाभ्याम्। स्पष्टम्।

नायकतोपहेतुमाह—परस्परेति। आचेष्टेति आङो मर्यादार्थकत्वेन यावत्सुखानुभवम्। चेष्टा च देशसाम्यात्। तच्च वाहीकावन्तिजाश्चुम्बनादिद्वेषिण्यश्चित्ररतप्रिया भवन्ति। परिष्वङ्गचुम्बनप्रहरणप्रियाः क्षतद्वेषिण्यो मालव्यः। आभीर्यसैन्धव्यस्तु औपरिष्टकप्रियाः। चण्डवेगा मन्दसीत्कृताश्चापरान्तिकाः।

अतिकामिन्यो (१)ऽद्रव्यप्रधाना लाट्यः। स्त्रीशाल्यकोशलयोर्मृदुत्वा-त्केवलरतिप्रियाः सकलकलाभिज्ञा आन्ध्र्यः परं परुषोक्तयः। प्रियवाक्याः सर्वरतविध्युपक्रमप्रिया महाराष्ट्र्यः, तथाविधा एव गुर्जर्यः, मर्दनप्रिया द्राविड्यः। मृदुरतप्रिया गौड्यः। सर्वस-हाश्च भिल्ल्यः। एतेन प्रकृतिसाम्यमपि लक्ष्यते। यथा वातिकानां चण्डवेगः। पैत्तिकानां मध्यवेगः। काफिकानाम्मृदुवेगः। सङ्करे-ष्वेवं बोध्यम्। फलोक्त्या निगमयति संवत्सरेति ॥२४–२८॥

इति दन्तक्षतम्।

अथ चित्ररतानि—

**तत्साम्याद्देशसाम्याच्च तैस्तैर्भावैः प्रयोजितः।**
**स्त्रीणां स्नेहश्च रागश्च बहुमानश्च जायते ॥ २९ ॥**
**पशूनां मृगजातीनां पतङ्गानाञ्च विभ्रमैः।**
**तैस्तैरुपायैश्चित्तज्ञो रतियोगान्विवर्धयेत् ॥ ३० ॥**

तत्साम्यात्प्रकृतिसाम्यात्। देशेति, प्रागुक्तात्। भावैर्मि-थोऽपेक्षितैः संवेशनैरिति शेषः। तद्भेदाश्चोत्फुल्लक[1]विजृम्भित[2]-केन्द्राणीति[3] त्रयो मृग्याः। सम्पुटं[1] पीडितकं[2] वेष्टितकमिति[3] हस्तिन्याः। वाडवं वाडवायाः। जघनोर्ध्वीकरणमुत्फुल्ल-कम्। सक्थिविस्तारो विजृम्भितकम्। जानुभ्यां स्त्रीनि-तम्बपीडनमिन्द्राणी। उभाभ्यामपि चरणऋजुप्रसारणं स-म्पुटः। स च पार्श्वोत्तानभेदेन द्विधा। सम्पुट एवातिनियन्त्रणात् पीडितकम्। उरुव्यत्यासो वेष्टितकम्। वडवेव निष्ठुरावग्रहणं वाडवम्।

ऊर्ध्वोरुद्वयमुद्भुग्नकम्। ऊर्ध्वौ चरणौ नायिकोपरि धार-येद्विजृम्भितकम्। उत्कुञ्चितौ पीडितकम्। एकप्रसारणेऽर्धपीडि-तकम्। पुनः पुनः व्यत्यासेन वेणुदारितकम्। एकश्चरणो नाय-

(१) काष्ठद्रव्य (लिङ्ग) प्रधाना इत्यर्थः।

कोरस उपरि गच्छेत् द्वितीयः प्रसारित इति शूलाञ्चितकम् । सङ्कुचितौ नायकपादौ नायिका स्वनितम्बाग्रोर्नि दद्यादिति कार्कटिकम् । ऊर्ध्वन्नायिकोरू विन्यस्येदिति पीडितकम् । जङ्घे प्रत्यस्येदिति पद्मासनम् । पृष्ठपरिष्वक्ताया पराङ्मुखाया एव योगोऽभ्यासिकम् । इति सुवर्णनाभः । अथोर्ध्वस्थितयोः परस्पराश्रययोः कुड्याद्याश्रययोर्वा रतं स्थितम् । कुड्याद्याश्रितस्य कण्ठासक्तभुजायास्तद्भुजपञ्जरस्थिताया ऊरुपाशेन तज्जघनवेष्टनं वेष्टयन्त्या कुड्ये चरणवलेन वलनमवलम्बितकम् । धेनुवदनु स्थितायाः वृषवदास्कन्दनं धैनुकम् । एवमन्यपशूनां शब्दानुकारेण सुरतन्तत्तद्रतान्तनामकम्बोद्धव्यम् । सर्वमिदं मनसि कृत्याह पशूनामिति । द्वाभ्यां सह रतं सङ्घाटकम् । बह्वीभिः सह गोयूथकम् । एकस्याः परिग्रहभूतैर्बहुभिः परिचरणञ्च वाह्लीके स्त्रीराज्ये च प्रसिद्धम् । एतदभिसन्धायाह तैस्तैरुपायैश्चित्तज्ञ इति ॥ २९-३० ॥

इति चित्ररतम् ।

अथ चपेटाख्यङ्कलहरूपं रतम्—

पारुष्यं रभसत्वञ्च पौरुषन्तेज उच्यते ।
अशक्तिरार्तिव्यावृत्तिरबलत्वञ्च योषितः ॥ ३१ ॥

पारुष्यं कठोरता । सा च मानसी शारीरी च, तयोर्जन्यजनकत्वात् । तच्च रतमपहस्तक[१]प्रसृतक[२]मुष्टि[३]समतल[४]भेदाच्चतुर्धा । अङ्गुलिपृष्ठेन स्तनान्तरे हननमपहस्तकः । शिरसि कुञ्चिताङ्गुलिना करेण हननं प्रसृतकम् । मुष्टिः प्रसिद्धः । स च पृष्ठे । समतलं प्रसिद्धञ्जितम्बपार्श्वयोः, इदमेव पारुष्यम् तदेवाभिसन्धायाह पौरुषन्तेज उच्यते । तत्र च विरुतन्तावत् हिङ्कार[१]स्तनित[२]सूत्कृत[३]रुदित[४]कूजित[५]फूत्कृत[६]दूत्कृत[७]भेदादष्टधा । अन्नार्थाः शब्दाश्चालनार्थाः । तत्रापहस्ते हिङ्कारः । प्रसृते कूजि-

तं, तच्च पारावतमधुकरकोकिलादिशब्दाः । मुष्टौ स्तनितरुदिते । समतलेऽन्यत् । रतान्ते फूत्कृतम् । जलपतितबदरशब्दानुकृतिः फूत्कृतम् । दूरमित्यस्यार्द्धोच्चारणं दूत्कृतम् । सीत्कृतं, सर्वत्र भूत्कृतं वा । अशक्तिरित्यनेनायं सर्वोऽप्यर्थः स्फुटीकृतः ॥ ३१ ॥

काचिन्नैतत्सहते तत्र किं स्यादत आह—

**रागप्रयोगात्सात्म्याच्च व्यत्ययोऽपि क्वचिद्भवेत् ।**
**न चिरं तस्य चैवान्ते प्रकृतेरेव योजना ॥ ३२ ॥**
**नास्त्यत्र गणना काचिन्न वा शास्त्रपरिग्रहः ।**
**प्रवृत्ते रतिसंयोगे राग एव तु कारणम् ॥ ३३ ॥**
**स्वप्नेष्वपि न दृश्यन्ते ते भावास्ते च विभ्रमाः ।**
**सुरतव्यवहारेषु ये स्युस्तत्क्षणकल्पिताः ॥ ३४ ॥**

रागेति । रागप्रयोगात् चण्डवेगात् । सात्म्यात् देशप्रकृतिभेदेनेत्यर्थः । व्यत्ययः चपेटकस्याकरणम् । क्वचिच्चण्डवेगेऽपि नायिकायां यदि कुर्यात्तदाह न चिरमिति । तत्क्षणमित्यर्थः । कदा कुर्यादित्यत आह तस्य रागस्य, अन्ते जघनपार्श्वताडनमिति गम्यते, अन्येषामसम्भवात् । सात्म्याविचारेऽपि का हानिरत आह प्रकृतेरिति । तदन्यथात्वे त्वन्यथाभावः स्यात् । तर्हि कालादीनां वैयर्थ्यापत्तिः सात्म्यस्याविचारादिति चेत् , इष्टापत्तिरित्याह नास्तीति । अत्र वात्स्यायनीये । अत्र प्रसिद्धाः स्युरत आह नवेति । 'कष्टमनार्यवृत्तमौद्धत्यमनादरत्यमि'ति वात्स्यायनः । तर्हि कथं पाञ्चालराजादिभिः कृतमित्यत आह प्रवृत्त मिति । रागतो न तु शास्त्रत इति भावः । लोकतो दूषयति ते भावाः कालादयः । पाञ्चालराजस्य पक्षत्वेऽपि दृष्टान्ताभावादिति भावः । पूर्वोक्तान् प्रशंसन्नाह ते चेति । यत्तदोर्नित्यसम्बन्धः ॥ ३२–३४ ॥

तर्हि पाञ्चालराजः कथमशास्त्रार्थे प्रवृत्त इत्यत आह—

**यथा हि पञ्चमीं धारामास्थाय तुरगः पथि ।**

स्थाणुं श्वभ्रं दरीं वापि वेगान्धो न समीक्षते ॥३५॥
एवं सुरतसम्मर्दे रागान्धौ कामिनावपि ।
चण्डवेगौ प्रवर्त्तेते समीक्षेते न चात्ययम् ॥३६॥
तस्मान्मृदुत्वञ्चण्डत्वं युवत्या बलमेव च ।
आत्मनश्च बलं ज्ञात्वा तथा युञ्जीत शास्त्रवित्॥३७॥
न सर्वदा न सर्वासु प्रयोगाः साम्प्रयोगिकाः ।
स्थाने देशे च काले च योग एषां विधीयते ॥३८॥

यथा हीति । पञ्चमीं धारां वल्गितमित्यर्थः । श्वभ्रं बिलम् । दार्ष्टान्तिके सङ्गमयति एवमिति । अत्ययोऽपि तत्रेष्ट एव स्यात् अत आह तस्मादिति । शास्त्रविदित्यनेन नेष्ट इति गम्यते । ननु क्षतप्रहरणादिषु प्रतिनिशङ्क्रियमाणेषु विकृताङ्गेव सा स्यादित्यत आह न सर्वदेति । एकस्यामिति भावः । तर्हि प्रतिदिनन्नायिकाभेदात्कर्त्तव्यम् , तथा च सर्वा एव तथाविधाङ्गय एव स्युरत आह न सर्वास्विति । तर्ह्येतत्कथनं व्यर्थमेवेत्यत आह स्थाने इति । तत्तदङ्ग इति भावः । देशे तत्सात्म्ये इत्यर्थः । काले चण्डवेग इत्यर्थः । इति प्रहरणम् ॥ ३५–३८ ॥

इति प्रहरणम् ।

अथ पुरुषायितम्

फलपूर्वकं तत्स्वरूपमाह—

प्रच्छादितस्वभावापि गूढरागापि कामिनी ।
विवृणोत्येव भावं स्वं रागादुपरिवर्त्तिनी ॥ ३९ ॥

स्नेहभावप्रकाशनं फलम् , उपरिवर्तिनीति स्वरूपम् । तच्च नायकसाहाय्याय स्वेच्छया वा कुर्यात् । तत्त्रिधा—सन्दंशो भ्रमरकः प्रेङ्खोलितकं चेति । वाडवकेन चिरमवस्थानं सन्दंशः। युक्तयन्त्रा चक्रवद्भ्रमेत्स भ्रमरकः । जघनमात्रान्दोलनम्प्रेङ्खोलितकम् ।
करिहस्तपूर्वकं यन्त्रयोजनम्पुरुषोपसृप्तकम् । तच्च मन्थनहु-

लो[3]वमर्दन[4]पीडितकनिर्घा[5]तवराहघा[6]तवृषघा[7]तचाटक[8]सम्पुटकेतिभेदान्न-वधा । हस्तेन सर्वतो लिङ्गभ्रामणम्मन्थनम् । जघनन्नीचीकृत्योपर्याघातो हुलम् । तदेव सरभसन्त्वेदवमर्दनम् । चिरं लिङ्गेनावस्थानं पीडितकम् । सुदूरमुत्कृष्य जघनघातो निर्घातः । एकत एवावघातो वराहघातः । उभयतो वृषघातः । प्रतिक्षणमावृत्तिश्चाटकम् । सम्पुटकम्पूर्ववत् ॥ ३९ ॥

नारीस्वभावज्ञानमपि फलत्वेनाह—

यथाशीला भवेन्नारी यथा च रतिलालसा ।
तस्या एव हि चेष्टाभिस्तत्सर्वमुपलक्षयेत् ॥ ४० ॥
न त्वेवर्त्तौ न प्रजातान्न मृगीं न च गर्भिणीम् ।
न चातिव्यायतान्नारीं योजयेत्पुरुषायिते ॥ ४१ ॥

यथाशीलेति । स्वयं चेष्टां न कुर्यादिति भावः । काले इत्यस्यापवादमाह न त्वेव ऋतौ षोडशदिनेषु । तथात्वे गर्भसम्भवो न स्यात् । प्रजाताम्प्रसूताम् , अत्यन्तमशक्तिसम्भवात् । मृगीं नायिकाविशेषमाह । गर्भिणीं गर्भपातशङ्कासम्भवात् । श्रान्तत्वेन पुनः श्रमासम्भवात् । सर्वत्रापि झटिति द्रवसम्भवात् ४०-४१

इति पुरुषायितम् ।

अथौपरिष्टकम् ।

तृतीयाम्प्रकृतिमधिकृत्याह—

केषाञ्चिदेतत्कुर्वन्ति नराणामौपरिष्टकम् ।
तथा नागरिकाः केचिदन्योन्यस्य हितैषिणः ॥४२॥

केषांचिदिति । नपुंसकानामिति भावः । ते द्विधा—स्त्रीनपुंसकाः पुंनपुंसकाश्च । औपरिष्टकम्मुखे जाघनङ्कर्म । तथाच पुंनपुंसकाः स्त्रीनपुंसकमुखेन तथा कुर्वन्तीत्यर्थः ॥ ४२ ॥

कथं तेन स्वमुखे जाघनङ्कर्मकर्त्तुमाज्ञापनीयमित्यत आह—

कुर्वन्ति रूढविश्वासाः परस्परपरिग्रहम् ।
पुरुषाश्च तथा स्त्रीषु कर्मैतत्किल कुर्वते ॥ ४३ ॥

व्यासस्तस्य च विज्ञेयो मुखचुम्बनवाह्निधिः ॥
परिवर्त्तितदेहौ तु स्त्रीपुंसौ यत्परस्परम् ॥ ४४ ॥
युगपत्सम्प्रयुज्येते कामस्तु स किलोच्यते ।
तस्माद्गुणबलस्त्यक्त्वा चतुरास्त्यागिनो नराः ॥४५॥
वेश्याः खलेषु रज्यन्ते दासहस्तिपकादिषु ।

रूढेति । तन्निमित्तं[1]पार्श्वदष्टं[2]बहिस्सन्दंशान्तः[3]स्सन्दंशं[4]चुम्बितं[5]कपरिमृष्टंक[6]आम्रचूषितकं[7]सङ्गरकेति भेदादष्टधा । लिङ्गोष्ठाभ्यां लिङ्गाग्रे चुम्बनं बहिःसन्दंशः । लिङ्गाधिकप्रवेशे ओष्ठाभ्यां पीडनमन्तःसन्दंशः । लिङ्गङ्करेणावगृह्य ओष्ठवत्तदग्रमभिमृश्य चुम्बनं चुम्बितकम् । जिह्वाग्रेण सर्वतो लिङ्गपरिघट्टनं परिमृष्टकम् । ओष्ठाभ्याङ्गनमवपीड्य चुम्बनमाम्रचूषितकम् । पुरुषाभिप्रायेणापरिसमाप्ति पीडनं सङ्गरः । स्त्रीपुंसोः सुरतविवेचनकृतं नपुंसकीयरताभासकथनेनेत्यत आह पुरुषा इति ।

मुखस्य विस्तृतत्वात्कथमेतद्रतं स्यादत आह व्यास इति । मुकुलितमित्यर्थः । एतेनापि कामसुखं स्यादत आह परीति । तथाचायं कामाभास इति भावः । तस्मादिति । कामाभासत्वात् ॥ ४३–४५ ॥

तर्हि तस्माच्छास्त्रशासनं व्यर्थं स्यात् अत आह—

न त्वेवं ब्राह्मणो विद्वान्न मन्त्री राजधूर्धरः ॥४६॥
गृहीतप्रत्ययो वापि कारयेदौपरिष्टकम् ।
न शास्त्रमस्तीत्येतावत्प्रयोगे कारणम्भवेत् ॥४७॥
शास्त्रार्थान्व्यापिनो विद्यात्प्रयोगांश्चैकदेशिकान् ।
रसवीर्यविपाका हि श्वमांसस्यापि वैद्यके ॥ ४८ ॥
कीर्त्तिता इति किन्तत्स्याद्भक्षणीयं विचक्षणैः ।
तस्माद्देशञ्च कालं च प्रयोगं शास्त्रमेव च ॥ ४९ ॥
आत्मानञ्चापि संवीक्ष्य योगान्युञ्जीत वा नवा ।
अर्थस्यास्य रहस्यत्वाच्चलत्वान्मनसस्तथा ॥ ५० ॥

कदा किं वा कुतः कुर्यादिति को ज्ञातुमर्हति।

न शास्त्रमिति। तदेतन्नीचपरमिति भावः। शास्त्रस्य किञ्चिद्विषयेऽप्रामाण्यापत्तिरत आह शास्त्रार्थानिति। प्रयोगाणां तथात्वेऽपि न ज्ञानस्य तथात्वमिति भावः। तत्र दृष्टान्तमाह रसेति। निगमयति तस्मादिति। देशं हीनवीर्यपुरुषवन्तम्। कालं स्थिरलिङ्गतासमयम्। प्रयोगं योग्यप्रयोज्यञ्च। शास्त्रमन्यशास्त्राविरुद्धम्। अधोङ्गस्योत्तमाङ्गस्पर्शे प्रायश्चित्तविधानात्, मुखस्य मूत्रबिन्दुस्पर्शीयस्येव तस्यात्रापि सम्भवात् इति। आत्मानं ब्राह्मणादिम्। वा नवेति। सती कोटिर्ब्राह्मणानामसती च नीचानाम्। यदि प्रतिपादितेऽस्मिन्व्यवस्थाकरणं तर्हि चुम्बनादावपि तथैव स्यादत आह अर्थस्येति। रहस्यत्वाल्लोकानधिगतत्वात्, न तु कामरहस्यत्वात्। अतो व्यवस्थितमिति भावः॥ ४६-५०॥

इत्यौपरिष्टकम्।

अथ रतावसानम्।

अवसानेऽपि या प्रीतिरुपचारैरुपस्कृता।<br>
सा विश्रम्भकथायोगै रतिञ्जनयते पराम्॥ ५१॥<br>
परस्परप्रीतिकरैरात्मभावानुवर्तनैः।<br>
क्षणक्रोधपरावृत्तैः क्षणप्रीतिविलोकितैः॥ ५२॥<br>
हल्लीशकक्रीडनकैर्गायनैर्नाट्यरासकैः।<br>
रागलोलार्द्रनयनैश्चन्द्रमण्डलवीक्षितैः॥ ५३॥<br>
आद्ये सन्दर्शने जाते पूर्वं ये स्युर्मनोरथाः।<br>
पुनर्वियोगे दुःखञ्च तस्य सर्वस्य कीर्त्तनैः॥ ५४॥<br>
कीर्त्तनान्ते च रागेण परिष्वङ्गैः सचुम्बनैः।<br>
तैस्तैश्च भावैस्संयुक्तैर्यूनां स्नेहोऽभिवर्धते॥ ५५॥

इति रतावसानम्।

अवसाने रतस्येति शेषः । उपचारैः ताम्बूलादिभिः । परा-
म्पुनारतेच्छाम् । उपचारानाह परस्परेति । हल्लीशेति ।

हल्लीश एक एवाङ्कः सप्ताष्टौ दश वा स्त्रियः ।
वागुदात्तैकपुरुषः कैशिकीवृत्तिसङ्कुलः ।
मुखान्तिमौ तथा सन्धी बहुताललयस्थितिः ।
गायनैः स्वरतालप्रबन्धसहितैः । नाट्यरासकैरिति ।
नाट्यरासकमेकाङ्कं बहुताललयस्थिति ।
उदात्तनायकं तद्वत्पीठमर्दोपनायकम् ।
हास्योऽङ्गयत्र सशृङ्गारो नारी वासकज्जिका ॥ ५१-५५ ॥

इति रतावसानम् ॥

तच्च सप्तविधम् । रागवदाहार्यरागं कृत्रिमरागं व्यवहितरा-
गम् पोटारतं खलरतमयन्त्रितरतञ्चेति । दर्शनाद्रागोत्पत्तौ यत्नप्र-
वासकलहान्ते रागवत् । मध्यस्थरागयोर्द्वितीयम् । कार्यहेतोरन्य-
त्रानुरक्तयोर्वा तृतीयम् । अन्याङ्गनानुरक्तेन पत्या सह रतञ्चतु-
र्थम् । दास्यनुरक्तेन तेन पञ्चमम् । ग्रामीणवेश्ययोर्यावदर्थं षष्ठम् ।
सङ्केतेषु परपुम्भिः सप्तमम् । निगमयति ।

एवमेताञ्चतुःषष्टिं बाभ्रव्येण प्रकीर्त्तिताम् ।
प्रयुञ्जानो वरस्त्रीषु सिद्धिङ्गच्छति नायकः ॥ ५६ ॥
ब्रुवन्नप्यन्यशास्त्राणि चतुःषष्ट्या बहिःकृतः ।
विद्वत्सदसि नात्यन्तं कथाभिः परिपूजयेत् ॥ ५७ ॥
वर्जितोप्यन्यविज्ञानैरेतया यस्त्वलङ्कृतः ।
स गोष्ठ्यां नरनारीणां कथास्त्वग्रं(१) विगाहते ॥ ५८ ॥
कन्याभिः परयोषिद्भिर्गणिकाभिश्च भावतः ।
वीक्ष्यते बहुमानेन चतुःषष्ट्यां विचक्षणः ॥ ५९ ॥

इति बाभ्रवीयवार्त्तिके साम्प्रयोगिकं
द्वितीयमधिकरणम् ॥ २ ॥

---

( १ ) कथास्वग्रं इति वात्स्यायनः । कथासु अग्रणीर्भवतीत्यर्थः ।

एवमिति । चतुःषष्टिं अष्टाष्टकम् । सिद्धिं स्त्रीद्रावणम् । शास्त्रान्तरेण चातुर्यसिद्धौ किमनेनेत्यत आह ब्रुवन्निति । व्यतिरेकेणाप्याह वर्जित इति । अन्यविज्ञानैः शास्त्रान्तरज्ञापनाय, एतया चतुःषष्ट्या । कथास्वर्गं सुखम् । चतुःषष्ट्याः फलमाह कन्याभिरिति । वहुमानेन सादरमित्यर्थः । सर्वकाम्यो भवतीति भावः ॥

चतुःषष्ट्यां विचक्षण इति । तथाच किम्पुंसापि औपरिष्टकङ्कर्त्तव्यम् । अन्यथा चतुःषष्टीत्वाभावः । तथाच प्रवृत्तिः स्यादितिचेत्, न पुंसो तज्ज्ञानमात्रेणैव वैचक्षण्यबाधाभावात् । पुंस्त्वेन तदभावप्रतियोगिकज्ञानेऽपि तत्र मनःपातत्वाभावेनाप्रवृत्तिर्वैचक्षण्यं च निर्बाधमिति भावः । साम्प्रयोगिकामिति । सम्यक्प्रयोगः स्त्रीद्रावणेन तदाह्लादजनकत्वेन कामिनीसिद्धिरूपो यस्मिन् तत् ॥ ५८–५९ ॥

इति साम्प्रयोगिके द्वितीयाधिकरणविवृतिः ॥

साम्प्रयोगाधिकरणीभूताश्च तिस्रो नायिकाः—स्वीया परकीया सामान्या चेति । तत्र स्वीयात्वसम्पादनोपायभूतकन्यासम्प्रयुक्तकमाह, तत्र प्रथमं विवाहयेदित्याह—

समस्याद्याः सहक्रीडा विवाहाः सङ्गतानि च ।<br>
सदृशैरेव कार्याणि नोत्तमैर्नापि चाधमैः ॥ १ ॥

कन्यां गृहीत्वा वर्त्तेत प्रेष्यवद्यत्र नायकः ।<br>
तं विद्यादुच्चसम्बन्धम्परित्यक्तम्मनस्विभिः ॥ २ ॥

स्वामिवद्विचरेद्यत्र बान्धवैस्तैः पुरस्कृतः ।<br>
अश्लाघ्यो हीनसम्बन्धः सोऽपि सद्भिर्विगर्हितः ॥३॥

परस्परसुखास्वादा क्रीडा यत्र प्रवर्त्तते ।<br>
विशेषयन्तीवान्योन्यं स सम्बन्धो विधीयते ॥४॥

कृत्वापि चोच्चसम्बन्धं पश्चाज्ज्ञातिषु सन्नमेत् ।
न त्वेव हीनसम्बन्धङ्कुर्यात्सद्भिर्विगर्हितम् ॥ ५ ॥

इति सम्बन्धः

समस्याद्याः उपविद्याः । सहेति । बाल्ये भ्रमरकादिः । यौवने नयवलादि । सङ्गतं स्नेहः । सदृशैः सवर्णैः । नोत्तमैरित्यनुलोमाभिप्रायम् । कदाचिद्देवयानीवत् परिणयोऽपि स्यादत आह नाधमैरिति । तत्रोच्चनीचसमभेदात्सम्बन्धस्त्रिधा । तत्राद्यौ निषेधति द्वाभ्याम् कन्यामिति । ग्राह्यं सम्बन्धमाह परस्परेति । कदाचिद्गान्धर्वादिषु जातेष्वाह पश्चादिति ॥ १-५ ॥

इति सम्बन्धः ।

अथ कन्याविश्रम्भणन्तदुपायं वक्तुमुपक्रमते-

चित्तानुरागतो बालामुपायेन प्रसाधयेत् ।
तथाऽस्य सानुरक्ता च सुविश्रब्धा प्रजायते ॥ ६ ॥
नात्यन्तमानुलोम्येन न चातिप्रातिलोम्यतः ।
सिद्धिं गच्छति कन्यासु तस्मान्मध्येन साधयेत् ॥७॥
आत्मनः प्रीतिजननं योषितास्मानवर्धनम् ।
कन्याविश्रम्भणं वेत्ति यः स तासां प्रियो भवेत् ॥८॥
यदि लज्जान्वितेत्येवं यस्तु कन्यामुपेक्षते ।
सोऽनभिप्रायवेदीति पशुवत्परिभूयते ॥ ९ ॥
सा बलेनाप्युपक्रान्ता कन्या चित्तमविन्दता ।
भयं वित्रासमुद्वेगं सद्यो द्वेषञ्च गच्छति ॥ १० ॥
सा प्रीतियोगमप्राप्ता तेनोद्वेगेन दूषिता ।
पुरुषद्वेषिणी वा स्याद्विद्विष्टा वा ततोऽन्यगा ॥११॥

इति कन्याविश्रम्भणम् ॥

चित्तेति । ततः किमित्यत आह तथेति । तदनुकूलतया वर्त्तते नैव तत्स्यादत आह नेति । तर्हि हठेन स्यादत आह

नचेति । तर्हि कथमित्यत आह मध्येनेति । किञ्चित्तथा तथा इत्यर्थः । फलमाह आरमन इति । तासाम्प्रिय इति । लज्जातिशयेनाशक्योऽयमुपाय इत्यत आह यदीति । बलादुपक्रमेतेति भावः । अन्यथा दण्डमाह पशुवदिति । नायकं प्रत्युक्त्वा नायिकां प्रत्याह सेति । ततः किमित्यत आह सेति । अन्यगा परकीयेत्यर्थः । अतः कन्याविश्रम्भणं सर्वथा शिक्षणीयमिति भावः ॥ ९-११ ॥

अथेङ्गिताकारसूचनम्—

दृष्ट्वैतान्भावसंयुक्तानाकारानिङ्गितानि च ।
कन्यायाः सम्प्रयोगार्थं ततो योगान्विचिन्तयेत् १२
बालक्रीडनकैर्बाला कलाभिर्यौवने स्थिता ।
वत्सला चापि सङ्ग्राह्या विश्वास्यजनसङ्ग्रहात् ॥१३॥
इतीङ्गितानि ।

अथ धनहीना मातुलादिगृहे तत्कन्याः कामयीत । एतान्मातुलगृहान् । योगान्धात्रेयिकाप्रेषणादीन् । योगान्तरमप्याह बालेति । जनसङ्ग्रहः कन्यापक्षीयाणामानुकूल्यम् ॥ १२-१३ ॥

इतीङ्गितानि ।

अथ कन्याप्रतिपत्तिः ।

कं वरयेदित्यपेक्षायामाह—

कन्याभियुज्यमाना तु यं मन्येताश्रयं सुखम् ।
अनुकूलश्च वश्यश्च तस्य कुर्यात्प्रतिग्रहम् ॥ १४ ॥
अनपेक्ष्य गुणान्यत्र रूपमौचित्यमेव च ।
कुर्वीत धनलोभेन पतिं सापत्नकेष्वपि ॥ १५ ॥
तत्र युक्तगुणं वश्यं शक्तं बलवदर्थिनम् ।
उपायैरभियुञ्जानं कन्या न प्रतिलोभयेत् ॥ १६ ॥

चिरं वश्यो दरिद्रोऽपि निर्गुणोऽप्यात्मधारणः ।
गुणैर्युक्तोऽपि न त्वेवं बहुसाधारणः पतिः ॥ १७ ॥
प्रायेण धनिनां दारा बहवो निरवग्रहाः ।
बाह्ये सत्युपभोगेऽपि निर्विश्रम्भा बहिःसुखाः ॥१८॥
नीचो यस्त्वभियुञ्जीत पुरुषः पतितोऽपि वा ।
विदेशगतिशीलो वा न स संयोगमर्हति ॥ १९ ॥
यदृच्छयाभियुक्तोऽपि दम्भद्यूताधिकोऽपि वा ।
सपत्नीकश्च (१)सापत्न्यान्न स संयोगमर्हति ॥ २० ॥
गुणसाम्येऽभियोक्तॄणामेको वरयिता वरः ।
तत्राभियोक्तरि श्रैष्ठ्यमनुरागात्मको हि सः ॥२१॥

यमिति । सपत्न्यां सत्याङ्किमित्यत आह द्वाभ्यामनपेक्ष्येति । वस्तुतः सपत्न्यां सत्यान्न वरयेदित्याह चिरमिति । बहुदारतायान्दोषमाह निर्विश्रम्भा इति । विश्रम्भस्सुखम् । वरद्वये सम्प्राप्ते कथमित्यत आह गुणेति ॥ १४-२१ ॥

इति कन्याप्रतिपत्तिः ॥

## अथ विवाहः ।

अष्टविधविवाहेषु कः कार्य इत्यपेक्षायामाह—

पूर्वः पूर्वः प्रधानः स्याद्विवाहो धर्मसंस्थितेः ।
पूर्वाभावे ततः कार्यो यो य उत्तर उत्तरः ॥ २२ ॥
व्यूढानां तु विवाहानामनुरागः फलं यतः ।
मध्यमोऽपि हि संयोगो गान्धर्वः स्नेहपूजितः(२)॥२३॥
सुखत्वादबहुक्लेशादपि चावरणादिह ।
अनुरागात्मकत्वाच्च गान्धर्वः श्रेष्ठभाग्विभिः(३)॥२४॥

(१) सापत्य इति वात्स्यायनमुनिसंमतः पाठः ।
(२) संयोगो गान्धर्वस्तेन पूजित इति वा० मु० पाठः ।
(३) सुखत्वादबहुक्लेशादपि चावरणादिह ।

इति बाभ्रवीयवार्त्तिके कन्यासम्प्रयुक्तकन्तृतीयम-धिकरणम् ॥ ३ ॥

ब्राह्मादिराक्षसान्तेष्विति शेषः। विवाहफलमाह व्यूढा-नामिति। निकृष्टत्वाद्गान्धर्वादयोऽनुपादेया इत्यत आह मध्यम इति। कथं तस्य स्नेहपूजितत्वं तदाह सुखत्वा-दिति। परभीत्या चमत्कारजनकत्वात्। गमनीयत्वात्—दोषा-भावादिति भावः। वरणात् मिथः समयेनैव तत्सम्भवात्। स्वतः सम्भवादनुरागरूपत्वम् ॥ २२–२४ ॥

इति विवाहः।

इति कन्यासम्प्रयुक्तके तृतीयाधिकरणविवृतिः ॥३॥

विवाहिताम्भार्यामधिकृत्याह—

सद्वृत्तमनुवर्त्तेत नायकस्य हितैषिणी।
कुलयोषित्पुनर्भूर्वा वेश्या वाप्येकचारिणी ॥ १ ॥
धर्ममर्थन्तथाकामं लभन्ते स्थानमेव च।
निःसपत्नञ्च भर्तारं नार्यस्सद्वृत्तमास्थिताः ॥ २ ॥
पुरुषस्तु बहून्दारान्समाहृत्य समो भवेत्।
न चावज्ञाञ्चरेदासु व्यलीकान्नसहेत च ॥ ३ ॥
एकस्यां या रतिक्रीडा वैकृतं वा शरीरजम्।
विश्रम्भाद्वाप्युपालम्भस्तमन्यासु न कीर्त्तयेत् ॥४॥

सद्वृत्तमिति। स्वगृहकृत्यं—स्वाचारो देवताभक्तिश्च। अत्र स-द्वृत्तपदेन दुर्वृत्ताभावो लक्ष्यते। तथाच दूतीकुलटादिसहवासं वर्जयेदिति भावः। हितैषिणी—असद्व्ययपराङ्मुखी, एतद्धर्मस्या-न्यत्रासम्भवे न कथम्पुनर्भूवेश्ययोरुपादानम् अत आह पुनर्भू-रिति। स्थानम्प्रतिष्ठाम्। अधिको गुण इति भावः। नायक-

---

अनुरागात्मकत्वाच्च गान्धर्वः प्रवरो मतः॥ इति वात्स्यायनपाठ-स्य परावर्तनमिदं बोध्यम्।

स्य बहुपत्नीत्वे न दोषस्तथापि तद्धर्मानाह पुरुष इति । समः समप्रीतिः । वैकृतं नखक्षतादिः ॥ १-४ ॥

न दद्यात्प्रसरं स्त्रीणां सपत्न्याः कारणे क्वचित् ।
तथोपलभमानान्तु दोषैस्तामेव योजयेत् ॥ ५ ॥
अन्यां रहसि विश्रम्भैरन्यां प्रत्यक्षपूजनैः ।
बहुमानैस्तथा चान्यामित्येवं रञ्जयेत्स्त्रियः ॥ ६ ॥
उद्यानगमनैर्भोगैर्दानैस्तज्ज्ञातिपूजनैः ।
रहस्यैः प्रीतियोगैश्चाप्येकैकामनुरञ्जयेत् ॥ ७ ॥
युवतिश्च जितक्रोधा यथाशास्त्रप्रवर्त्तिनी ।
करोति वश्यम्भर्त्तारं सपत्नीश्चाधितिष्ठति ॥ ८ ॥

इति बाभ्रवीयवार्त्तिके भार्याधिकारिकश्चतुर्थमधिकरणम् ।

न दद्यादिति । प्रसरः अधिकृतापतर्जनादिः । दोषैरिति । निरुत्तराङ्कुर्यादिति भावः । सिंहावलोकितेन साम्यं विशिनष्टि अन्यामिति । तज्ज्ञातिः स्त्रीबान्धवाः । स्त्रियम्प्रत्याह युवतिरिति । ( हरेत् कनिष्ठा च तस्याम्मातृवद्व्यवहरेत् ? ) ॥ ५-८ ॥

इति भार्याधिकारिकाधिकरणविवृतिः ॥ ४ ॥

अथ पारदारिकं वक्तुमुपक्रमते—

इच्छा स्वभावतो जाता क्रियया परिबृंहिता ।
बुद्ध्या संशोधितोद्वेगात् स्थिरा स्यादनपायिनी(१) ॥१॥
सिद्धतामात्मनो ज्ञात्वा लिङ्गान्युन्नीय योषिताम् ।
व्यावृत्तिकारणोच्छेदी नरो योषित्सु सिद्ध्यति ॥२॥
अन्यत्र दृष्टसञ्चारस्तद्भर्ता यत्र नायकः ।
न तत्र योषितङ्काञ्चित्सुप्रापामपि लङ्घयेत् ॥ ३ ॥
शङ्कितां रक्षितां भीतां सश्वश्रूकाञ्च योषितम् ।

(१) संशोधितोद्वेगा स्थिरा स्यादनपायिनीति वा० सु० पाठः ।

न तर्कयेत मेधावी रक्षन्प्रत्ययमात्मनः॥ ४ ॥
आदौ परिचयङ्कुर्यात्ततश्च परिभाषणम्।
परिभाषणसम्मिश्रमिषदाकारवेदनम्॥ ५ ॥
प्रत्युत्तरेण पश्येच्चेदाकारस्य परिग्रहम्।
ततोऽभियुञ्जीत नरः स्त्रियं विगतसाध्वसः॥ ६ ॥

स्वभावतः धर्माधर्मानपेक्षणात्। क्रियया अभियोगरूपया। बुद्ध्या–शशपरावृत्तिहेतुज्ञानेन मृग्याः वृष इति ज्ञानम्, हस्तिन्याः शश इति ज्ञानम्। वेगाच्चण्डमध्यात्। पुरुषम्प्रत्याह सिद्धतामिति। उपमर्दक्षमतामित्यर्थः। लिङ्गानि शिरःकण्डूयनादीनि अनुरागचिह्नानि, सिध्यति–वशीकरोति, द्रावयति चेत्यर्थः। अदूतीम्प्रत्याह अन्यत्र विपणौ। निषिद्धामाह शङ्कितामिति। तर्कयेत–विचारयेत्। परिचयं विज्ञानमिलनादि अनुरागाकारवेदनम्। अभियुञ्जीत–तत्र प्रयतेत॥ १–६ ॥

अभियोगो दूत्यधीन इति दूतीमाह—

विधवेक्षणिका दासी भिक्षुकी शिल्पकारिका।
प्रविशत्याशु विश्वासं दूतीकार्यञ्च विन्दति॥ ७ ॥
विद्वेषङ्कारयेत्पत्यौ रमणीयानि वर्णयेत्।
चित्रान्सुरतसंभोगानन्यासामपि दर्शयेत्॥ ८ ॥
नायकस्यानुरागञ्च पुनश्च रतिकौशलम्।
प्रार्थनाञ्चाधिकस्त्रीभिरवष्टम्भञ्च वर्णयेत्॥ ९ ॥
असङ्कल्पितमप्यर्थमुत्सृष्टमपि कारणात्।
पुनरावर्त्तयत्येव दूतीवचनकौशलैः॥ १० ॥

विधवेति। ईक्षणिका सामुद्रिककुशला। दूतीकार्यमेवाह विद्वेषमिति। अवष्टम्भम्प्रार्थकस्त्रीषु अभिनिवेशम्। पुंसो मनोविकाराभावे दूती किङ्कुर्यादत आह असङ्कल्पितमिति। शेषं स्पष्टम्। सा च निसृष्टार्था परिमितार्था पत्रहारिणी स्वयन्दूती मूढदूती भार्यादूती मूकदूती वातदूती चेत्यष्टधा। तत्र स्वबुध्या स्वा-

म्यभिलषितसम्पादिनी प्रथमा । शेषकार्यसम्पादिनी द्वितीया । तृतीया प्रसिद्धा । सन्देशहारिण्यत्रैवान्तर्भवति । चतुर्थ्यपि प्रसिद्धा । एकान्ते छलशिक्षिका पञ्चमी । कनिष्ठायाम्प्रयुज्यमाना ज्येष्ठा षष्ठी । कर्णपत्रादिषु नखदात्री दंशेन पददात्री सप्तमी । समक्षं समस्यया स्वाभिप्रायावेदिकाऽष्टमीति । एते विविधकौतुकदर्शना-द्युपदेशः । अन्ये राजदर्शनाद्युपदेशाः । ते च राजदासीविरचिताः ७-१०

एते चान्ये च बहवः प्रयोगाः पारदारिकाः ।
देशे देशे प्रवर्त्तन्ते राजभिः सम्प्रवर्त्तिताः ॥ ११ ॥
न त्वेव तत् प्रयुञ्जीत राजा लोकहिते रतः ।
निगृहीतारिषड्वर्गस्तथा विजयते महीम् ॥ १२ ॥
द्रव्याणामपि निर्हारे यानकानां प्रवेशने ।
आपानकोत्सवार्थेऽपि चेटिकानाञ्च सम्भ्रमे ॥ १३ ॥
व्यत्यासे वेश्मनाञ्चैव रक्षिणाञ्च विपर्यये ।
उद्यानयात्रागमने यात्रातश्च प्रवेशने ॥ १४ ॥
दीर्घकालोदयां यात्रां प्रोषिते वापि राजनि ।
प्रवेशनं भवेद्यूनां प्रायो निष्क्रमणन्तथा ॥ १५ ॥
परस्परस्य कार्याणि ज्ञात्वा चान्तःपुरालयाः ।
एककार्यास्ततः कुर्युः शेषाणामपि भेदनम् ॥ १६ ॥
दूषयित्वा ततोऽन्योन्यमेककार्यार्पणे स्थिरः ।
अभेद्यतां गतस्सद्यो यथेष्टम्फलमश्नुते ॥ १७ ॥
पाक्षिकत्वात्प्रयोगाणामपायानाञ्च दर्शनात् ।
धर्मार्थयोश्च वैलोम्यान्नाचरेत्पारदारिकम् ॥ १८ ॥

राजभिरिति । राज्ञाम्परगृहगमनस्य निषिद्धत्वात् , कदाचिदप्यसम्भवात् । लोकानामपि तथा । 'शिक्षायामधर्मप्रवृत्तेश्च प्रविष्टा प्राणिहिता राजदासी'ति वात्स्यायनोक्तेः । देशे२ इति । यथाकालं यथायोगं जनपदयोपितां राजान्तःपुरप्रवेशो भवतीति

प्रसिद्धिः । राजलोकः प्रेष्यदासीवर्गः । राज्ञः पारदार्यनिषेधाति निगृहीतेति । अरयः कामादयः । राजपत्नीम्प्रत्याह द्रव्याणामिति । वस्तूनामित्यर्थः । यानकानां शिबिकादीनाम् । आपानम्मद्यपानम् । रक्षिणाम् दौवारिकाणाम् । तथेत्यन्तमेकस्सम्बन्धः। तासाम्बहुत्वादेकेन राज्ञा कामस्यातृप्तेः, अन्तर्वहिरेतावत्सु रक्षकेषु कथमिदं स्यादत आह परस्परेति । अन्तःपुरम्प्रविष्टम्पुरुषम्प्रत्याह दूषयित्वेति । ननु त्रिवर्गसाधनेऽस्मिन्शास्त्रे प्रतिपादिते पारदारिकैः सर्वैः सर्वत्र स्वैरम्प्रवर्त्तितमेवेति पूर्वोक्तम्भार्याधिकारिकं विलुप्येतात आह–पाक्षिकत्वात्सम्भवासम्भवयोः सन्दिग्धत्वात् । तर्हि सम्भवे कर्त्तव्यमेवेत्यत आह अपायानामिति । लोकनिन्दया नाशाद्धर्ममेव कार्यमत आह धर्मेति । परलोकस्यादृष्टत्वेनेहलोकसुखन्तु न परिहार्यमत आह अर्थेति । तत्परित्यजेद्राजदण्डभयादिभिरित्यर्थः ॥ ११–१८ ॥

नन्वेतत्कथनमनर्थकं स्यादत आह—

तदेतद्दारगुप्त्यर्थमारब्धं श्रेयसे नृणाम् ।
प्रजानान्दूषणायैव न विज्ञेयोऽस्य संविधिः ॥ १९ ॥

इति बाभ्रव्ये पारदारिकम्पञ्चममधिकरणम् ॥५॥

दारेति । त्वय्यनुकूलायामहम्परदाररतः स्यामिति भयप्रदर्शनेन, किञ्च श्रेयसे, "यदा च स्थानात्स्थानान्तरम्प्रतिपाद्यमानङ्कामम्पश्येत्तदात्मशरीरोपघाते 'प्राण'त्राणार्थम्परपरिग्रहमप्युपगच्छेदिति" वात्स्यायनोक्तेः, "कामकलाशिक्षायै स्वरक्षायै चारोहति मदने यायात्परयोषितमि"ति कामसूत्राच्च, तथाच परस्त्रीदूषणे न ऋषेस्तात्पर्यमिति भावः ॥ १९ ॥

इति पारदारिकाधिकरणविवृतिः पञ्चमी ॥ ५ ॥

अथ वैशिकम् ।

ताम्बूलानि स्रजश्चैव संस्कृतञ्चानुलेपनम् ।

आगतस्याहरेत्प्रीत्या कला गोष्ठीश्च योजयेत् ॥ १ ॥
द्रव्याणि प्रणये दद्यात्कुर्याच्च परिवर्त्तनम् ।
सम्प्रयोगस्य चाकूतं निजे भावे(१) नियोजयेत् ॥२॥
सूक्ष्मत्वादतिलोभाच्च प्रकृत्याऽज्ञानतस्तथा ।
कामलक्ष्यं(२) तु दुर्ज्ञानं स्त्रीणान्तद्भावितैरपि ॥ ३ ॥
कामयन्ते विरज्यन्ते रञ्जयन्ति त्यजन्ति च ।
कर्षयन्त्योऽपि सर्वार्थान् ज्ञायन्ते नैव योषितः ॥ ४ ॥

परिवर्त्तनं रागव्यावृत्तिः । स्पष्टमन्यत् । सूक्ष्मत्वात्पुरुषप्रकृतेरिति शेषः । पुनः सहेतुकमनुरागदर्शनप्रकारमाह अतिलोभादिति । द्रव्यस्येति शेषः । स च कथमत आह प्रकृत्येति । स्वभावत इत्यर्थः । ज्ञानत इत्यस्य कामयन्त इत्यादिक्रियापदैर्योगः । विरागेहेतुमाह दुर्ज्ञानमिति । भावितैर्विलक्षणचरितैः । तानि च क्वचित्सन्ति चरितानि क्वचिच्छलचारितानि क्वचित्स्नेहमायादर्शनचरितानि, अतस्ता न ज्ञायन्ते गभीरहृदया इति भावः ॥ १-४ ॥

वेश्यायाः परिग्रहपञ्चकमाह—

परीक्ष्य गम्यैः संयोगः संयुक्तस्यानुरञ्जनम् ।
रक्तादर्थस्य चादानमन्ते मोक्षश्च वैशिकम् ॥ ५ ॥
पञ्चमे तेन कल्पेन स्थिता वेश्या परिग्रहे ।
नातिसन्धीयते गम्यैः करोत्यर्थांश्च पुष्कलान् ॥ ६ ॥

परीक्ष्येति । प्रणिधिभिस्तद्धनम्, गम्यैः स्वतन्त्राद्यैः, अनुरञ्जनं अपूर्ववस्तुदानादिभिः, तदर्थे स्वद्रविणव्ययादिभिश्च । अर्थस्येति । अयाच्ययाचनादिना । तस्य निर्द्रव्यतायाम्मोक्षो निर्वासनम् । रोगसख्यागमने कार्यादिव्याजेन तेनाभाषणम-

---

(१) निजेनैवेति वात्स्यायनसंमतः पाठः ।
(२) कामलक्ष्मेति वा० मु० सं० पाठः ।

सङ्कतश्चेति । एतद्वैशिकन्नामेति । पञ्चमे परिग्रहे पुरुषसङ्गे । अतिसन्धीयते वञ्च्यते । कुतः ? विशीर्णप्रतिसन्धानकारित्वादस्याः । तत्र विशीर्णो नायकः षड्विधः—इतस्ततश्च स्वयमपसृतश्च, इतस्ततो निष्कासितोऽपसृतः, इतः स्वयमपसृतस्ततस्तो निष्कासितः, धृतः स्वयमपसृत्य तत्र स्थितः, इतो निष्कासितोऽपसृत्य तत्र स्थितः, इतस्ततोऽपि निष्कासितोऽपसृतः ॥ ६–७ ॥

तस्य प्रतिसन्धानङ्कुतः कार्यमित्यत आह—

अन्यासम्भेदयितुं गम्याद्न्यतो गम्यमेव वा ।
स्थितस्य चोपधानार्थम्पुनस्सन्धानमिष्यते ॥ ८ ॥
विभेत्यन्यस्य संयोगाद्व्यलीकानि च नेच्छते ।
अतिसक्तः पुमान्यत्र भयाद्बहु ददाति च ॥ ९ ॥
असक्तमभिनन्देत सक्तम्परिभवेत्तथा ।
अन्यदूतानुपाते च यः स्यादतिविशारदः ॥ १० ॥
तत्रोपजापिनम्पूर्वं नारी कालेन योजयेत् ।
भवेच्चाच्छिन्नसन्धाना न च सक्तम्परित्यजेत् ॥११॥
सक्तन्तु वशिनं नारी सम्भाष्याप्यन्यतो व्रजेत् ।
ततश्चार्थमुपादाय सक्तमेवानुरञ्जयेत् ॥ १२ ॥

अन्यामिति । स्थितस्यान्यस्य । उपधानन्निःसारणम् । पूर्वस्य सन्धाने कारणान्तरमाह अतीति । कारणान्तरमाह असक्तमिति । अन्येति । अन्यस्य तृतीयस्य । सन्धाने युक्त्यन्तरमाह यस्स्यादिति । कालेन सन्धानसमयप्रतीक्षणेन । तदेतदाशयमाह भवेदिति । ननु सक्तपरित्यागाकरणेऽन्यतश्च धनागमसम्भवे किङ्कार्यमत आह सक्तमिति ॥ ८–१२ ॥

एतच्च कदेत्यत आह—

आयतिम्प्रसमीक्ष्यादौ लाभम्प्रीतिञ्च पुष्कलाम् ।
सौहृदं प्रतिसन्दध्याद्विशीर्णं स्त्री विचक्षणा ॥१३॥

कृच्छ्राधिगतवित्तांश्च राजवल्लभनिष्ठुरान् ॥१४॥
आयत्यांश्च तदात्वे च दूरादेव विवर्जयेत् ॥
अनर्थो वर्जने येषाङ्गमनेऽभ्युदयस्तथा ॥ १५ ॥
प्रयत्नेनापि तान्गत्वा सापदेशमुपक्रमेत् ।
प्रसन्ना ये प्रयच्छन्ति स्वल्पेऽप्यगणितं वसु ॥१६॥
स्थूललक्षान् महोत्साहांस्तान्गच्छेत्स्वैरपि व्ययैः ।
रत्यर्थाः पुरुषा येन रत्यर्थाश्चैव योषितः ॥ १७ ॥

आयतिमिति । यथोपपन्नं विधेयमिति भावः । अथ गम्यबाहुल्ये सति देशतदात्वापत्तीर्विचार्य समदेशिकाहिरण्ययोः तत्राप्यकुप्यकुप्ययोः रागित्यागिनोः तत्राप्यधनसधनयोः तत्राप्यप्रयोजनसप्रयोजनयोः तत्रापि कृतज्ञत्यागिनोः मित्रप्रेरणधनागमयोः अर्थागमानर्थप्रतीकारयोर्वयसा वैभवेन च लाघवगौरवयोर्विचारतारतम्यम् । गम्योपगमनङ्कुर्यादित्याह कृच्छ्रेति । अदातुमनसः । राजेति । अपायात्पुनर्गम्यानाह अनर्थ इति । सापदेशं सव्याजम् । रत्यादिकमिति शेषः । गम्यानाह प्रसन्ना इति । स्वल्पोऽल्पवित्तः(१) । स्थूललक्ष्या अदीर्घदर्शिनः । महोत्साहास्त्यागिनः । स्त्रीसेवनञ्च त्रिवर्गसाधनम्भवति वेश्यासु तु न त्रिवर्गसिद्धिः ।

तथाच वैशिकवर्णनं व्यर्थन्तासां रत्यर्थत्वादित्याह रत्यर्था इति । ॥ १३-१७ ॥

तर्हि रागतः प्राप्तरत्यादिप्रतिपादिकत्वादस्य शास्त्रस्य वृथा प्रवृत्तिरत आह—

शास्त्रस्यार्थप्रधानत्वात्तेन योगोऽत्र योषिताम् ।
सन्ति रागपरा नार्यः सन्ति चार्थपरा अपि ॥१८॥
प्राक्तत्र वर्णितो रागो वेश्यायोगाच्च वैशिके ॥१९॥

इति बाभ्रवीयवार्त्तिके षष्ठमधिकरणम् ॥६॥

---

( १ ) वेश्याविषये इति जयमङ्गला, इदं व्याख्यानन्तु चिन्त्यम् ।

शास्त्रस्येति । अर्थेति । त्रिवर्गप्रधानत्वादिति भावः । यद्वा ननु अत्र शास्त्रे अर्थानामनर्थानुबन्धित्वात्, ते चानर्थाः अनर्था धर्मद्वेषाः, अतो नेमेऽर्था इत्यत आह शास्त्रस्येति । अर्थप्रधानत्वात् अर्थतात्पर्यकत्वात् नानर्थेषु तात्पर्यम् इति भावः । ते च सन्दिग्ध-सङ्कीर्णभेदाद्द्विधा, एवमनर्था अपि । तेनेति । तत्रार्थाश्च समस्ता व्यस्ता वा इत्यन्यदेतत् । अतः सामान्यतो योषिदिति न तु वे-श्येति समस्तामर्थव्यस्ततामेवाह सन्तीति । रागपराः त्रिविधा अपि अर्थपराः—क्रमेण स्वीया परकीया वेश्या चेति । वेश्याया अनुरागाभावात् व्यस्तत्वेऽपि व्यभिचारोऽत आह प्रागिति । तत्र वेश्यासु । "एषापि मदनायत्ता क्वापि स्यादनुरागिणी"ति भरतोक्तेश्च ॥ १८-१९॥

इति वैशिकाधिकरणविवृतिः ॥६॥

अथौपनिषदकम्—

आयुर्वेदाच्च वेदाच्च विद्यातन्त्रेभ्य एव च ।
आप्तेभ्यश्चावबोद्धव्या ये योगाः प्रीतिकारकाः ॥१॥
न प्रयुञ्जीत सन्दिग्धान्न शरीरात्ययावहान् ।
न जीवघातसम्बद्धान्नाशुचिद्रव्यसंयुतान् ॥ २ ॥

उपनिषदं सङ्गः, तत्रोपयोगि तत्तथा । आयुर्वेदात् वैद्य-कात् । यथा वाग्भटीये—"मधुकं मधुना घृतेन वा विलिहन् क्षीर-मधु प्रयोजयेत् । लभते हि न चात्मनः क्षयं प्रमदापि क्षयताञ्च गच्छ-ति" इत्यादि । वेदात् "आयुर्वै घृतन्तेजो वै घृतमि"त्यादि । तन्त्रे-भ्यः कामीयेभ्यः । आप्तेभ्यश्च लौकिकेभ्यः । नन्वेतैर्योगैः फलं स्या-दत आह नेति । नन्वहिफेनादिकं विना स्तम्भनादियोगायोगात्, तेन च कदाचित्प्राणक्लेशसम्भवात् कथमित्यत आह नेति । एतेन सङ्कोचनमपि व्याख्यातम् । तर्हि सूकरवसादीफेनेन स्तम्भनं कार्य-

मत आह नेति। विडङ्गेण कुष्ठापगमेन सुभगीकरणसम्भवात् तदपि कार्यं स्यादत आह नेति ॥ १–२ ॥

कर्तव्ययोगमाह—

तथा युक्तः(१) प्रयुञ्जीत शिष्टैरनुमतं विधिम्।
ब्राह्मणैश्च सुहृद्भिश्च मङ्गलैरभिनन्दितः ॥ ३ ॥
पूर्वशास्त्राणि सन्दृश्य प्रयोगाननुसृत्य च।
कामसूत्रमिदं यत्नात्सङ्क्षेपेण निवेदितम् ॥ ४ ॥
धर्ममर्थञ्च कामञ्च प्रत्ययं लोकमेव च।
पश्यत्येतस्य तत्त्वज्ञो न च रागात्प्रवर्तते ॥ ५ ॥
अधिकारवशादुक्ता ये चिराद्रागविभ्रमाः(२)।
तदनन्तरमत्रैव ते प्रयत्नान्निवारिताः ॥ ६ ॥

तथेति। मङ्गलैर्वेषाचारैः। तथाच ब्राह्मणाशीर्भिस्तदात्वा-पत्योः सुखम्भवतीति भावः। प्रत्ययं कामकलायामनुभवम्। रागयोगकथनमनर्थकं स्यादत आह अधिकारेति। प्रयत्नात्, नात्र तत्त्वज्ञोऽधिकारीत्यर्थः ॥ ३–६ ॥

शास्त्रस्य किञ्चिद्विषयापचिरत आह—

न शास्त्रमस्तीत्येतेन प्रयोगोऽभिसमीक्ष्यते।
शास्त्रार्थान्व्यापिनो विद्यात्प्रयोगांश्चैकदेशिकान्॥७॥
बाभ्रवीयांश्च सूत्रार्थानागमय्य विमृश्य च
वात्स्यायनश्चकारेदं कामशास्त्रं यथाविधि ॥ ८ ॥

नेति। कुतः प्राप्तमित्यत आह बाभ्रवीयानिति ॥७–८॥

तर्हि रतिलालसो वात्स्यायनः स्यात् अत आह—

तदेतद् ब्रह्मचर्येण परेण च समाधिना।

---

(१) तपोयुक्त इति धा० मु० सम्मतः पाठः।
(२) चित्रा रागवर्धना इति धा० मु० सम्मतः पाठः।

विहितं (१)लोकशास्त्रार्थं न रागार्थोऽस्य संविधिः ९
रक्षन्धर्मार्थकामांस्त्रीन्पश्यन्लोकस्य वर्तनम्(२) ।
अस्य शास्त्रस्य तत्त्वज्ञो भवत्येव जितेन्द्रियः ॥१०॥
तच्चैतत्कुशलो विद्वान्धर्मार्थानपि योजयेत् ।
नातिरागात्मकः कामी प्रयुञ्जानः प्रसिद्ध्यति ॥११॥

इति वाभ्रवीयवार्त्तिके औपनिषदकम् ॥ ७ ॥

समासश्च वार्त्तिकम् ।

ब्रह्मचर्येणेति । तदेव शास्त्रस्य सिद्धिर्नान्यथेति भावः । तत्त्वज्ञ इति । तत्त्वं नायिकापरितोषस्य स्वसाध्यायत्तत्वात्तत्साध्यतोपायश्च रसमयतः स्यात् तस्य च ब्रह्मरूपत्वेन मोक्षरूपत्वात् । न च "रसोऽप्यस्य परं दृष्ट्वा निवर्त्तत" इति कथमिति वाच्यम् । परिभाषिकस्य वाह्यरसस्य निवृत्त्यभिप्रायत्वात् । अत एव नातिरागात्मक इति । स च गुरुमुखादवगन्तव्यः। तच्च तत्त्वम्, कुशलः कामकलाभिज्ञः ॥ ९–११ ॥

इति वैशिकाधिकरणविवृतिः समाप्तिमगमत् ।

समाप्तं चेदं पुस्तकम् ॥

इति वाभ्रव्यवार्तिककारिका(८)मञ्जरी ।

---

(१) लोकयात्रार्थमिति वा० मु० सम्मतः पाठः ।
(२) कामानां स्थितिं स्वां लोकवर्तिनीमिति वा० मु० सं० पाठः ।

॥ श्रीः ॥

# रतिरत्नप्रदीपिका(९)मञ्जरी ॥

## ॥ अथ प्रथमोऽध्यायः ॥

प्रथमं जातिनिर्देशः ततो नायकलक्षणम् ।
ततो बाह्यान्तररतिः स्वान्यदाराधिकारिका ॥ १ ॥
वारनार्यधिकारस्तु क्रमशोऽन्ते प्रपञ्चितः ।
जात्यादीनां यथोद्देशं लक्षणं वक्ष्यतेऽधुना ॥ २ ॥

### [१] गौणीपुत्रमतेन स्त्रीजातिवर्णनप्रकरणम् ।

पद्मकुड्मलमृद्वङ्गी पद्मगन्धिरतोदका ।
पद्मगन्धीति विकचपद्मकामातपत्रका ॥ ३ ॥
जातिः कमलगन्धादियुक्ता स्त्रीव्यक्तिका मता ।
नन्दीशगौणीपुत्राभ्यामुक्ता जातिश्चतुर्विधा ॥ ४ ॥
पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा ।
उद्देशक्रमतस्तासामुत्तमाधमकल्पना ॥ ५ ॥
रक्तान्तलोचना हंसगतिश्च श्रीफलस्तनी ।
तिलप्रसूनसदृशनासिका पूज्यपूजिता ॥ ६ ॥
चम्पकाम्रनगौरी वा नीलोत्पलरुचिस्तथा ।
मृगयारम्भसम्प्राप्तमृगीलोचनलोचना ॥ ७ ॥
वलित्रयोल्लासिमध्या सुवेषा हंसवर्तना ।
मृद्वल्पशुचिभोक्त्री च गाढलज्जा च मानिनी ॥ ८ ॥
धवलाधारपुष्पेषु प्रीतिर्यस्याः प्रजायते ।
द्वितीयायां तृतीयायां पञ्चम्यां रतिलोलुपा ॥ ९ ॥
दिवारात्र्योस्तुर्ययामे पद्मासनलयेन च ।
यस्या रतीच्छा भवति सा जातिः पद्मिनी भवेत् ॥ १० ॥

नातिदीर्घा नातिखर्वा तन्वङ्गी सुगतिस्तथा ।
पृथुस्तननितम्बा च कृशजङ्घा च कीरवाक् ॥ ११ ॥
उन्नतोष्ठी कम्बुकण्ठी मधुगन्धिमदोदका ।
नृत्तगीतादिकुशला बाह्यसम्भोगलोलुपा ॥ १२ ॥
मृद्वन्तर्वर्तुलोच्छूनं रत्यम्भोबहुलं तथा ।
बिभ्राणाऽत्यल्पलोमाढ्यं कुसुमेषुनिकेतनम् ॥ १३ ॥
चञ्चलाक्षी प्रकृत्यैव चित्रकर्मविशारदा ।
षष्ठ्यष्टमीदशम्यां च द्वादश्यां च विशेषतः ॥ १४ ॥
दिवारात्र्योराद्ययामे रतेच्छाकरणेन च ।
तथा नागरिकाख्येन चित्रिणी जातिरिष्यते ॥ १५ ॥
रक्तमाल्याम्बररता कोपना गद्गदस्वना ।
लोमशायतशुभ्रं च क्षारगन्धिस्मरोदकम् ॥ १६ ॥
बिभ्राणा मदनावासं कोष्णाङ्गी मितभोजनी ।
सम्भोगकाले प्रचुरनखक्षतविधायिनी ॥ १७ ॥
पित्तला पिशुनप्रायचित्ता गौरकलेवरा ।
एकादश्यां प्रतिपदि त्रयोदश्यां तथैव च ॥ १८ ॥
वेणुदारितबन्धेन दिवारात्र्योस्तृतीयके ।
प्रहरे भोगशीला या सा जातिश्शङ्खिनी मता ॥ १९ ॥
आनञ्चितगतिः स्थूला वक्राङ्गुलिपदा चला ।
आपिङ्गकेशभारा च खर्वपीवरकन्धरा ॥ २० ॥
मांसला घोरचारित्रा निर्लज्जा गद्गदस्वना ।
मतङ्गजमदामोदरतिस्वेदजलान्विता ॥ २१ ॥
कषायकटुकद्वर्णरता प्रहरणप्रिया ।
ळलद्विशालविवृतरदनच्छदधारिणी ॥ २२ ॥
बाह्यान्तरस्सूक्ष्मरोमाङ्कविशालस्मरमन्दिरा ।
शिष्टासु पञ्चतिथिषु दिवारात्र्योस्तृतीयके ॥ २३ ॥
प्रहरे स्कन्धपादस्थ क्रयेन रतिलोलुपा ।

या सा जातिर्हस्तिनी स्यादिति जातिविनिर्णयः ॥ २४ ॥
सङ्कीर्णलक्षणानां तु निर्णयोऽयं विधीयते ।
यत्र यल्लक्षणाधिक्यं तज्जातयश्च चतुस्त्रियः ॥ २५ ॥

## [२] कामकलावर्णनप्रकरणम् ।

अथेदानीं कामकला वक्ष्यते पक्षभेदतः ।
वामाक्षीणां वामभागे शुक्लपक्षे यथाक्रमम् ॥ २६ ॥
आङ्गुष्ठमाशिरोदेशमारोहति सितेतरे ।
आशिरोङ्गुष्ठपर्यन्तं अवरोहति च क्रमात् ॥ २७ ॥
प्रथमायां सितेऽङ्गुष्ठे निजाङ्गुष्ठेन मर्दयेत् ।
द्वितीयायां तु चरणे तं स्वपादेन पीडयेत् ॥ २८ ॥
तृतीयायां तथा गुल्फे स्वगुल्फेन च ताडयेत् ।
चतुर्थ्यां जानुनी तस्या मर्दयेन्निजजानुना ॥ २९ ॥
कुर्यात्करिकरक्रीडां पञ्चम्यां स्मरमन्दिरे ।
नाभिं च तलहस्तेन षष्ठ्यां सन्ताडयेन्मृदु ॥ ३० ॥
मुष्टिहस्तेन सप्तम्यां वक्षस्ताडनमाचरेत् ।
अष्टम्यां स्तनयोस्तां च सलीलं मर्दयेद्युवा ॥ ३१ ॥
नवम्यां बाहुमूले तु नखरेखां समाचरेत् ।
दशम्यां कण्ठदेशे तु तत्रापि नखैर्लिखेत् ॥ ३२ ॥
एकादश्यां कपोले तु बहुशश्चुम्बनं चरेत् ।
द्वादश्यां दन्तवसने दन्तोष्ठेन निपीडयेत् ॥ ३३ ॥
त्रयोदश्यां तु नयने मृदु चुम्बनमाचरेत् ।
चतुर्दश्यां फालदेशे तत्र चुम्बनताडने ॥ ३४ ॥
पञ्चदश्यां तु शिरसि कचग्रहणमाचरेत् ।
पुंसां दक्षिणपार्श्वे तु वनितैवं समाचरेत् ॥ ३५ ॥
कृष्णेऽवरोहक्रमतः कृत्यान्येतानि चाचरेत् ।
एवमाचरिते कान्ताः प्रहृष्यन्ति द्रवन्ति च ॥ ३६ ॥

कान्तालोकनकाले तु पुमानेवं विभावयेत् ।
निजनेत्रे मनोजन्मचापमुक्तान् महाभुजान् ॥ ३७ ॥
हरिकन्दर्पतद्वैरिभगणप्रलयार्णवान् ।
ज्वलदग्निनिभान् पञ्च कामबाणान्विभावयेत् ॥ ३८ ॥
हृत्कुचाक्षिशिरोगुह्यदेशेषु च यथाक्रमम् ।
एवं कृतेषु वनिता भवन्त्यालोकलोलुपाः ॥ ३९ ॥
गौणीपुत्रमते जातिर्भविष्यति चतुर्विधा ।
अस्ति कामकलायां तु विशेषश्च निरूप्यते ॥ ४० ॥
मस्तके वक्षसि तथा करयोः स्तनयोरपि ।
ऊर्वोर्नाभौ स्मरगृहे फालकुक्षिकटित्रिके ॥ ४१ ॥
बाहुमूले गले चैव नितम्बे भुजयोस्तथा ।
वनितानामुक्तरीत्या कृष्णेऽधो गच्छति क्रमात् ॥ ४२ ॥
आरभ्य शुक्लप्रथमां मूर्धानमधिरोहति ।
प्रत्येकमुक्तस्थानेषु सबिन्दून् सविसर्गकान् ॥ ४३ ॥
अकारादिस्वरान्विद्धि वह्निरूपान्विचिन्तयेत् ।
सम्भोगसमयेऽनेन द्रवन्ति सहसा स्त्रियः ॥ ४४ ॥
एवं स्वरान्योषिदङ्गे कलयन् प्रतिवासरम् ।
प्रथमाद्यासु तिथिषु दिनचर्यां समाचरेत् ॥ ४५ ॥
प्रथमायामुत्तमाङ्गे सलीलाघ्राणनं तथा ।
कण्ठाश्लेषं चरेदन्ते रदच्छदनिपीडनम् ॥ ४६ ॥
गण्डयोश्चुम्बनं पार्श्वे पुलकीकरणं तथा ।
नितम्बयोर्नखक्रीडां सीत्कारं च समाचरेत् ॥ ४७ ॥
द्वितीयायां तु वक्षोजमर्दनं गण्डचुम्बनम् ।
नखलीलां गले नेत्रे कुचे चाधरचुम्बनम् ॥ ४८ ॥
कक्षे नखक्षतिं गाढपरिरम्भं समाचरेत् ।
तृतीयायां तु निविडालिङ्गनं बाहुमूलयोः ॥ ४९ ॥
पुलकीकरणं चैव पार्श्वयोश्च नखक्षतिम् ।

कण्ठालिङ्गनमधरचुम्बनं च ससीत्कृतम् ॥ ५० ॥
छुरितं च स्तनतटे कुर्यान्मदनतन्त्रवित्।
चतुर्थ्यामालिङ्गकुचमर्दनाधरखण्डने ॥ ५१ ॥
वामोरौ नखरेखां च दोर्मूले छुरितं तथा।
शयनं योपिदुपरि विदधीत विचक्षणः ॥ ५२ ॥
पञ्चम्यां वामहस्तेन कचग्रहणमोष्ठयोः।
दशनं चूचुकयुगे लीलया पुलकीकृतम् ॥ ५३ ॥
स्तनचुम्बं च तत्सौख्यं भावनां च समाचरेत्।
षष्ठ्यां दृढपरीरम्भः दशच्छदविदंशनम् ॥ ५४ ॥
नाभिमूले छुरितकमूर्वोः गाढनखक्षतिम्।
कुर्यादुदीर्णरागस्य भावनास्मरतन्त्रवित् ॥ ५५ ॥
सप्तम्यां वै करिकरक्रीडां मदनमन्दिरे।
ओष्ठं चुम्बन् कण्ठगलवक्षःस्थलनखक्षतिम् ॥ ५६ ॥
गाढाश्लेषं बहुविधसुरतं चाचरेत्सुधीः।
अष्टम्यां कण्ठमालिङ्ग्य नाभौ छुरितकं तथा ॥ ५७ ॥
ओष्ठदंशं च कुचयोर्मर्दनं चुम्बनं चरेत्।
नवम्यां नाभिमूले तु च्छुरितं पुलकं तथा ॥ ५८ ॥
गुह्ये करिकरक्रीडामधरे दशनं तथा।
पार्श्वयोर्नखरेखां च कामतन्त्रविदाचरेत् ॥ ५९ ॥
दशम्यां चुम्बनं फाले कण्ठे च नखविक्षतिम्।
कान्तोरसि तथा वामहस्तविन्यासकं तथा ॥ ६० ॥
वामहस्तेन वक्षोजमर्दनं चोरुपीडनम्।
कटिस्पर्शं करिकरक्रीडां योनौ समाचरेत् ॥ ६१ ॥
एकादश्यां कण्ठनखक्षतिमालिङ्गनं दृढम्।
ओष्ठे सकृच्चुम्बनं च मुष्टिना प्रहरेदुरः ॥ ६२ ॥
योनौ करिकरक्रीडां कुर्यात्कन्दर्पतन्त्रवित्।
द्वादश्यां गाढमालिङ्ग्य बहुशो गण्डचुम्बनम् ॥ ६३ ॥

मनोजमन्दिरं यस्याः सा जातिर्हस्तिनी मता ।

[४] वात्स्यायनीयपुरुषजातिवर्णनप्रकरणम् ।

स्निग्धारुणविशालाक्षः समसूक्ष्मरदावलिः ॥ १९ ॥
वृत्ताननो दीर्घकृशमृदुस्फुरितकेशकः ।
दीर्घाङ्गुलिस्सुबाहुश्च ताम्राङ्घ्रिकरपल्लवः ॥ २० ॥
श्लिष्टवृत्ताङ्गुलिर्वल्गद्वचनो दीर्घकन्धरः ।
दीर्घबाहुश्च सद्वृत्तो ऋजुजङ्घोऽल्पभोजनः ॥ २१ ॥
अल्परागोऽल्पसुरतसुखः शुद्धौदनप्रियः ।
सौभाग्ययुग्रतिजलस्समदो मानवानपि ॥ २२ ॥
षडङ्गुल्यायतं लिङ्गं यस्यायं शश उच्यते ।
विशालदन्तमूर्धा च पृथुवक्त्रललाटकः ॥ २३ ॥
मांसलश्रवणस्स्थूलकन्धरः कच्छपोदरः ।
दीर्घपीनोच्छूनवक्षा रक्ताङ्घ्रिकरपल्लवः ॥ २४ ॥
स्थिरपक्ष्मायततरशोणपद्मदलेक्षणः ।
सखेलगमनस्सत्त्वोद्वृत्तो मृदुवचोन्वितः ॥ २५ ॥
पीडासहस्तुन्दिलश्च निद्रावलसमन्वितः ।
उद्दीप्ताग्निश्च निर्लज्जः श्लेष्मलः क्षारगन्धयुक् ॥ २६ ॥
सुखी च मध्ये वयसि मज्जोद्वृत्तशरीरकः ।
समस्तवनिताकान्तो नवाङ्गुलनिजध्वजः ॥ २७ ॥
पुरुषो वृषनामाऽयं कथितश्शास्त्रकोविदैः ।
कृशदीर्घश्रोत्रवक्त्रशिरोधररदाधरः ॥ २८ ॥
स्थूलर्जुसान्द्रकेशालिः वाहुतन्मूलमांसलः ।
प्रौढेर्ष्यो वक्रजङ्घाङ्घ्रिर्दीर्घाङ्गुलिनखावलिः ॥ २९ ॥
विशालदीर्घनयनः प्रौढो निद्रालसो मृदुः ।
गम्भीरां मधुरां वाचं बिभ्राणोऽतिद्रुतां गतिम् ॥ ३० ॥
पीनोरुः प्रमदासक्तो दीप्ताग्निश्शुभवाक्तथा ।
तृष्णार्तो बहुरेतस्कः पीतक्षारसमोदकः ॥ ३१ ॥

द्वादशाङ्गुललिङ्गो यस्सोऽश्वः पुरुष उच्यते ।
उक्तोपस्थप्रमाणस्य व्यभिचारेऽपि लक्षयेत् ॥ ३२ ॥
शशमृग्यादिजातित्वप्रुक्तमाधमभेदतः ।
उक्तोच्यमानवक्तव्यलक्षणानि च यान्यतः ॥ ३३ ॥
तत्सङ्करे च बाहुल्याल्लक्ष्यं निर्धारयेद्बुधः ।
मृग्यादिभिश्शशादीनां सङ्गो वात्स्यायनोदितः ॥ ३४ ॥
पद्मिनीं शशको गच्छेच्चित्रिणीं शङ्खिनीं वृषः ।
हस्तिनीं तु हयो गच्छेदित्युक्तो निर्णयो बुधैः ॥ ३५ ॥
अतो गुणपताकाख्यामतमत्रानुकार्यते ।
श्लथा मध्या घना चेति त्रिविधास्स्युस्स्त्रियो मताः ॥ ३६
दीर्घा कृष्णा कृशतनुश्चिरं विरहिणी तथा ।
निम्नकक्षा चेति पञ्च श्लथाभेदाः प्रकीर्तिताः ॥ ३७ ॥
स्थूला गौरी वामना वाऽनिशगोन्नतकक्षभाक् ।
इति पञ्च घनाः प्रोक्ताः सङ्कीर्णेन च मध्यमाः ॥ ३८ ॥
श्लथादीनां वयोभेदादवस्थासप्तकं विदुः ।
अष्टवर्षा भवेत्कन्या नववर्षा तु रोहिणी ॥ ३९ ॥
दशवर्षा भवेद्गौरी बालाऽतष्षोडशावधिः ।
आत्रिंशत्तरुणी प्रोक्ता प्रौढा पञ्चदशाब्दतः ॥ ४० ॥
अत ऊर्ध्वं भवेद्वृद्धा सप्तावस्था वयःकृताः ।
वशीकृतिप्रकारश्च यथोक्तानां निगद्यते ॥ ४१ ॥
कदलीपनसाम्रादिफलैर्गौरीं वशं नयेत् ।
ताम्बूलगन्धकुसुमकर्पूराद्यैश्च रोहिणीम् ॥ ४२ ॥
बालां ताम्बूलमालाद्यैर्मृद्वालिङ्गनचुम्बनैः ।
तरुणीं भूषणैर्वस्त्रैर्बाह्यान्तररतैरपि ॥ ४३ ॥
प्रौढां नानाविधरतैश्चण्डप्रहरणादिभिः ।
वृद्धां तत्पुत्रपौत्रादिलालनेन च चाटुभिः ॥ ४४ ॥

गृहयात्रादिपृच्छाभिस्तोषयेत्कामतन्त्रवित् ।
श्लथा बाह्यरतिप्रीता घनाऽऽन्तररतिप्रिया ॥ ४५ ॥
मध्योभयप्रीतिमतीत्येवं प्रीतिं विभावयेत् ।
बालाङ्गनां बाह्यरतैः प्रौढामाभ्यन्तरै रतैः ॥ ४६ ॥
वृद्धामुक्तोपचारैस्तु प्रीणयेत्कामतन्त्रवित् ।
अथोदितानां जातीनां प्रकृतिः कथ्यतेऽधुना ॥ ४७ ॥
श्लेष्मला पित्तला चेति वातला चेति सा त्रिधा ।
निभृतास्थिग्रन्थिगुल्फा मानिनी मृदुभाषिणी ॥ ४८ ॥
स्निग्धदन्ताक्षिनखरा स्थिरस्नेहा च कोमला ।
गाढद्वारातिशिरमांसलस्मरमन्दिरा ॥ ४९ ॥
अत्यल्पक्षुत्पिपासा च घर्मक्लेशा च सात्त्विकी ।
दीर्घबाहुलता सत्यवचना बुद्धिमत्तरा ॥ ५० ॥
शशकाण्डाम्बुजस्वर्णगोरोचनरुचिस्तथा ।
श्यामलाङ्गी दीर्घदेहा सर्वत्र प्रियवादिनी ॥ ५१ ॥
घननीलकचा गूढचिरवैरवती तथा ।
हंसकोकिलवाग् हंसगमना दीर्घदर्शिनी ॥ ५२ ॥
कषायकटुरूक्षोष्णतिक्तस्वल्पान्नभोजिनी ।
विशालस्निग्धरक्तान्तदीर्घपक्ष्मललोचना ॥ ५३ ॥
कृतज्ञा सुभगा लज्जावती निद्रालुरेव च ।
स्वप्ने पश्यति पाथोजसरस्सारसहंसकान् ॥ ५४ ॥
रक्षोयक्षेन्द्रवरुणबलाकाश्वगजानपि ।
सा श्लेष्मप्रकृतिः प्रोक्ता पित्तला त्वधुनोच्यते ॥ ५५ ॥
उन्नतास्थिग्रन्थिगुल्फा गौरी कोष्णतनुस्तथा ।
पीता वा पीनवक्षोजा रक्ताक्षिनखपादयुक् ॥ ५६ ॥
काला पिङ्गलकेशी च बहुतृष्णा बहुक्षुधा ।
विलेपनालङ्करणमाल्यासक्ता शुचिस्मिता ॥ ५७ ॥

बुद्धिसाहससत्त्वाढ्यचरित्रा शीतलप्रिया ।
अत्यञ्चितगतिः क्षारगन्धिस्वेदाऽल्पभोगभाक् ॥ ५८ ॥
शैत्यप्रियोष्णविरसा क्षणमात्ररतिप्रिया ।
निष्ठुरोष्णप्रशिथिलस्मरागाराऽतिचञ्चला ॥ ५९ ॥
शुभ्रवस्त्रप्रिया स्थूलश्लथसन्धितनुस्तथा ।
कषायतिक्तमधुरशीतलाम्लप्रियाऽपि च ॥ ६० ॥
दिग्दाहोल्काग्निपालाशकर्णिकाराणि पश्यति ।
सूक्ष्मपक्ष्माऽलसतरी पिङ्गशीतप्रियेक्षणा ॥ ६१ ॥
शीतभीरुश्च वनिता पित्तलेति प्रकीर्तिता ।
अनिशं पुरुषप्रीतिः परुषालापसंयुता ॥ ६२ ॥
कृष्णा धूसरवर्णा च वह्वन्ना कठिनाऽङ्गना ।
सितेतराक्षिनखरा स्फुटताऽपिच्छमूर्धजा ॥ ६३ ॥
गोजिह्वसदृशानङ्गनिलया बहुदोषभाक् ।
शैत्योपचारविमुखी चञ्चलेहाधृतिस्मृतिः ॥ ६४ ॥
स्नेहार्द्रदृष्टिरत्यल्पपित्तश्लेष्मोपजीवनी ।
वीतनिद्रा दीनसक्ता चलजर्झरभाषिणी ॥ ६५ ॥
आर्द्रनासा लास्यहास्यमृगयागीतलोलुपा ।
मधुराम्लकटून्मिश्रमांसकाङ्क्षावती कृशा ॥ ६६ ॥
दीर्घदेहा दुर्लभा च सशब्दगमना तथा ।
बहुप्रजा कान्तसक्ता स्वप्ने पश्यति सर्वदा ॥ ६७ ॥
पर्वतोर्वीवनगजारोहणं गगने गतिम् ।
सारमेयशृगालोष्ट्रकाकगृध्रांश्च या खभाक् ॥ ६८ ॥
धन्या समचरा चैव वातला वनिता भवेत् ।
सङ्कीर्णलक्षणा चैव सङ्कीर्णप्रकृतिर्भवेत् ॥ ६९ ॥
ज्ञेया सङ्कीर्णवैषम्ये लक्षणाधिक्यतो बुधैः ।
अथेदानीं सत्त्वभेदः कथ्यते सर्वजातिषु ॥ ७० ॥

सुगन्धिनिर्मलतनुः प्रसन्नवदनाम्बुजा ।
बन्धुदासधनाढ्या च शान्तिनिर्मलशेमुषी ॥ ७१ ॥
देवतानिरता कान्ता देवसत्त्वेति कथ्यते ।
मृदुचित्ता सदाक्षिण्या सर्वदाऽप्यतिथिप्रिया ॥ ७२ ॥
व्रतोपवासादिसहा नरसत्त्वा भवेद्वधूः ।
बहुनिश्वासजृम्भाढ्या सर्वदा भ्रमणप्रिया ॥ ७३ ॥
निद्रालुर्व्याकुला नालिकेरगन्धमनःप्रिया ।
नागसत्त्वेति मुनिभिरुक्ता सा वरवर्णिनी ॥ ७४ ॥
अल्पलज्जोद्यानपानगोष्ठीगिरितटादिषु ।
सम्भोगकाङ्क्षिणी कोपशीला बलिविधौ रता ॥ ७५ ॥
भामिनी यक्षसत्त्वा स्यादिति वात्स्यायनोऽब्रवीत् ।
अशेषोज्ज्वलवेषा च गन्धपुष्पादिषु प्रिया ॥ ७६ ॥
तौर्यत्रयप्रवीणा च चाटुवादप्रियाऽपि च ।
औदार्यशीला गन्धर्वसत्त्वा स्याद्वरवर्णिनी ॥ ७७ ॥
प्रकटोर्ध्वतनुर्मानविहीना मद्यमांसभुक् ।
निर्व्याजहासा यत्किञ्चिदादाननिरताऽपि च ॥ ७८ ॥
चत्वरादिस्थितिरता योषित्पैशाचसत्त्वयुक् ।
दृष्टिं मुहुर्भ्रमयति बुभुक्षापीडिता चला ॥ ७९ ॥
तुङ्गस्थलस्थितिरता गूढसम्भोगशालिनी ।
दृढचित्ता सङ्ग्रहण-निरता दीर्घदर्शिनी ॥ ८० ॥
नारी सा काकसत्त्वेति गदिता मुनिपुङ्गवैः ।
उद्भ्रान्तनेत्रा वसननखघर्षणतत्परा ॥ ८१ ॥
चलस्वभावोत्पतनगतिशक्ता कलिप्रिया ।
मधुनानाविधिफलासक्ता कृशतनुस्तथा ॥ ८२ ॥
भयान्विता च या नारी कपिसत्त्वेति गीयते ।
प्रत्यक्षनिष्ठुरोक्तिश्च रतौ प्रहरणप्रिया ॥ ८३ ॥

विटासक्ता क्लेशसहा यत्किञ्चिदशनाऽपि च ।
वनिता नित्यसन्तुष्टा खरसत्त्वेति गीयते ॥ ८४ ॥
हिंसारुचिर्द्विजगुरुदेवद्वेषवती तथा ।
मद्यमांसादिसक्ता च क्रूरारुणविलोचना ॥ ८५ ॥
निर्भया रात्रिसञ्चारे रक्षस्सत्त्वा वधूर्मता ।
विद्यासु कुशला बुद्धिमती सोत्साहमानसा ॥ ८६ ॥
देवद्वेषवती चैव दृढचित्तान्विता तथा ।
योषिद्दानवसत्त्वेति प्रोक्ता क्रूरवचोऽन्विता ॥ ८७ ॥
बह्वन्नातिबला चैव समदा मदगामिनी ।
निमीलिता सूक्ष्मनया भक्षचाटुप्रिया तथा ॥ ८८ ॥
कोपना मानिनी योषिद्गजसत्त्वेति गीयते ।
एतादृशास्सत्त्वभेदा बहवस्सन्ति शास्त्रतः ॥
इह नोक्ता मया ते तु ग्रन्थविस्तरभीरुणा ॥ ८९ ॥

इति श्रीप्रौढदेवराजमहाराजविरचितायां रतिरत्नप्रदीपिकायां जातिविवरणं नाम द्वितीयोऽध्यायः ॥

---

## अथ तृतीयोऽध्यायः

अथ बाह्यरतं वक्ष्ये यथाशास्त्रं यथामति ।
परस्परालोकनादि प्रोक्तं बाह्यरतं बुधैः ॥ १ ॥
परस्परालोकनं च तथाऽऽलिङ्गनचुम्बने ।
नखदन्तक्षतिश्चैव करिहस्तप्रकेलितम् ॥ २ ॥
इत्यादिबाह्यसुरतैरुपचारैः स्त्रिया रमेत् ।
स्त्रीपुंसयोगसमये सद्रवाः प्रथमं नराः ॥ ३ ॥
तदनिष्टमतः पूर्वं बाह्ये तामुपचर्ययेत् ।
तत्रालिङ्गनभेदास्तु द्वादशेति प्रकीर्तिताः ॥ ४ ॥

तत्राष्टौ जातरत्याश्चाजातरत्याश्चतुष्टयम् ।
लतावेष्टनकं वृक्षाधिरूढं तिलतण्डुलम् ॥ ५ ॥
क्षीरनीरं तथैवान्यावूरुजङ्घोपगूहकौ(१) ।
स्तनालिङ्गनमित्येकं लालाटिकमथापरम् ॥ ६ ॥
इत्यष्टौ जातरत्याश्चाजातरत्याश्च विद्धकम् ।
स्पृष्टकं चोद्घृष्टकं च पीडितं च तथापरम् ॥ ७ ॥
रत्यर्थमागता कान्ता कान्तं सरलभूरुहम् ।
लतेवालिङ्ग्य ऋज्वङ्गी सखेलं मन्दसीत्कृतम् ॥ ८ ॥
कान्तोष्ठचुम्बनकृते नमयेत्तन्मुखं यदा ।
तल्लतावेष्टनं नामालिङ्गनं मुनिसम्मतम् ॥ ९ ॥
आक्रम्य कान्तचरणमङ्घ्रिणैकेन कामिनी ।
न्यस्तान्यपादा तस्योरौ तत्पृष्ठं चैकबाहुना ॥ १० ॥
आवेष्ट्यान्यतरं बाहुमंसे तस्य निवेशयेत् ।
चुम्बनार्थं प्रियं वृक्षमिवारोढुं यदेच्छति ॥ ११ ॥
ससीत्कृतं च सश्वासं तत्स्याद्वृक्षाधिरूढकम् ।
स्थितनायकमुद्दिश्य कार्यं चैतद्द्वयं स्त्रिया ॥ १२ ॥
व्यत्यस्तबाहूरुयुगं शयितौ दम्पती यदा ।
चलद्गाढं स्वजेते यत्तिलतण्डुलकं हि तत् ॥ १३ ॥
उत्सङ्गे शयने वाऽपि दम्पत्यन्योन्यसम्मुखौ ।
उपविष्टौ च रागान्धौ विवशौ च परस्परम् ॥ १४ ॥
देहं प्रविष्टाविव यत् क्षीरनीरं तदुच्यते ।
कन्दर्पतरलस्वान्तयोषिदूरुयुगं प्रियः ॥ १५ ॥
निजोरुद्वयसंस्पर्शाद्गाढं पीडयते यदा ।
ऊरूपगूहनं नामालिङ्गनं तदुदाहृतम् ॥ १६ ॥
जघनाकलिताप्रेयश्श्रोणी स्त्री पुरुषायिते ।

(१) अत्र 'जिह्वोपगूहकौ' इति मुद्रितपुस्तकपाठोऽशुद्धः ।

स्रस्तोत्तरीयधम्मिल्ला चुम्बनादिचिकीर्षया ॥ १७ ॥
रमणोपरिभागं च किञ्चित्किञ्चिच्छनैर्व्रजेत् ।
जघनाश्लेषणं नामालिङ्गनं तदुदाहृतम् ॥ १८ ॥
तथैव पार्श्वशयिता नायिका नायकोरसि ।
स्तनौ निधायाश्लिष्टं यत्तत्स्तनालिङ्गनं स्मृतम् ॥ १९ ॥
नितान्तकान्ता वनिता पुम्भावे कमितुर्मुखे ।
मुखमक्ष्णोरक्षिणी च ललाटे च ललाटकम् ॥ २० ॥
निधाय यन्मर्दयति तल्लालाटिकमुच्यते ।
प्रसङ्गेनाभिमुख्येन यूनो(१)स्सङ्गच्छतोः पथि ॥ २१ ॥
अन्योन्यसङ्गसंश्लेषः स्पृष्टकं तदुदाहृतम् ।
नायकस्य मनोभावं विज्ञातुं वरवर्णिनी ॥ २२ ॥
अन्यतो वलितास्यं तमुपविष्टं स्थितं तथा ।
यत्किंचिद्वस्तुदानादिव्याजात्पीडयति प्रियम् ॥ २३ ॥
स्तनाभ्यां तां नायकोऽपि पीडयेदपविद्धकम् ।
उत्सवे देवयात्रायां महातिमिरसङ्कुले ॥ २४ ॥
विजने स्थानके वापि गच्छतोश्च परस्परम् ।
अङ्गाङ्गघर्षणं नातिचिरकालं भवेद्यदि ॥ २५ ॥
तदुद्घृष्टकमित्याह वात्स्यायनमहामुनिः ।
तदेव भित्तिसन्देशे स्तम्भसन्देशकेऽथवा ॥ २६ ॥
पीडनात्पीडिताख्यं तदालिङ्गनमुदाहृतम् ।
एतद् द्वयं परिज्ञाय योजयेद्रागवृद्धये(२) ॥ २७ ॥

इति आलिङ्गनाधिकारः ॥

---

(१) अथ 'यून' इत्यकेवचनान्तो मु० पु० पाठोऽशुद्धः ।

(२) अत्रापि मु० पुस्तकस्थः 'परिज्ञानभावयो रागवृद्धये' इति पाठोऽसङ्गतोऽशुद्धश्चेति प्रतिभाति ।

## अथ चुम्बनाधिकारः

मदनातुरयोर्यूनो रक्तयोश्च परस्परम् ।
दन्तोष्ठजिह्वाव्यापारविशेषैश्चुम्बनं भवेत् ॥ २८ ॥
तच्चतुर्दशधा ज्ञेयं निमितं स्फुरितं तथा ।
घट्टितं च समं तिर्यक् भ्रान्तं चैवावपीडितम् ॥ २९ ॥
द्विजाग्राहं संपुटकं जिह्वा युद्धप्रबोधिते ।
छाया सङ्क्रान्तमिति च चुम्बनानि चतुर्दश ॥ ३० ॥
ललाटनयनं गण्डाधरजिह्वागलं तथा ।
उरस्स्तनं च सामान्यचुम्बनस्थानमूचिरे ॥ ३१ ॥
ललाटनाभिजघनं ललाटी कक्षमेव च ।
देशे देशे चुम्बनस्य स्थानभेदा भवन्ति च ॥ ३२ ॥
तत्र तत्रैव ते स्थानभेदा ज्ञेया विचक्षणैः ।
बलाद् गृहीता(१)कान्तेन नायिका स्वाधरे स्थितम् ॥३३॥
अचुम्बन्ती तदधरमुदासीनेव तिष्ठति ।
तदेतन्निमितं नाम चुम्बनं परिकीर्तितम् ॥ ३४ ॥
नायिका स्वमुखन्यस्तनायकोष्ठजिघृक्षया ।
स्फुरिताधरविन्यासं स्फुरितं तदुदाहृतम् ॥ ३५ ॥
स्वाधरन्यस्तरमणाधरं स्वोष्ठद्वयेन च ।
गृहीत्वा नयने(२)नेतुः स्वहस्ताभ्यां पिधाय च ॥ ३६ ॥
जिह्वयाऽन्तर्घट्टयति निमीलितदृशा वधूः ।
तद्घट्टितं(३)त्रयमिदं नवोढाविषयं विदुः ॥ ३७ ॥
सम्मुखं सर्वमधरं योजयेत्तत्समं विदुः ।
साचीकृतेन स्वोष्ठेन सकलाधरपल्लवम् ॥ ३८ ॥

---

(१) अत्र 'गृहीत्वेति' मु० पु० पाठोऽशुद्धः ।
(२) अत्र 'नयन' मित्येकवचनान्तमिति मु० पु० पाठोऽशुक्तः ।
(३) निमितस्फुरितघट्टिताख्यं चुम्बनत्रयम् ।

गृह्यते वर्तुलीकृत्य यत्तत्तिर्यगुदाहृतम् ।
पार्श्वे निषण्णो रमणः प्रियायाश्चिबुकालकान् ॥ ३९ ॥
आलम्ब्य करपद्माभ्यां भ्रामयित्वा मुखाम्बुजम् ।
चुम्बत्यधरबिम्बं यत्तद्भ्रान्तमिति कथ्यते ॥ ४० ॥
समतिर्यग्भ्रान्तकानामवपीड्य ग्रहाद्भवेत् ।
अवपीडितकं नाम पूर्वेषामेव पीडनात् ॥ ४१ ॥
अधरं बहिराकृष्य तर्जन्यङ्गुष्ठयोगतः ।
ओष्ठाभ्यामद्विजं पीडा तद्द्विजाग्रहणं भवेत् ॥ ४२ ॥
अश्मश्रुः पुरुषो वापि वनितावधरच्छदौ ।
रदच्छदाभ्यां प्रणयन् मृदु संगृह्य चुम्बति ॥ ४३ ॥
तत्सम्पुटकमित्याह वात्स्यायनमुनीश्वरः ।
तत्र सम्पुटके केचिद्वाञ्छन्ति रसनारणम् ॥ ४४ ॥
निजागमनतः पूर्वं प्रसुप्तां वनितां प्रियः ।
आगत्य तत्प्रबोधाय चुम्बितं बोधितं हि तत् ॥ ४५ ॥
नेत्रे भावपरिज्ञानकृते कृतकनिद्रिताम् ।
प्रियां प्रियश्चुम्बयेद्यन्नायिकाचुम्बनं हि तत् ॥ ४६ ॥
प्रियः प्रिया वा भिन्ना वा रागं व्यञ्जयितुं यदि ।
मुकुरादौ प्रतिकृतिचुम्बनं छायिकं हि तत् ॥ ४७ ॥
स्त्रीपुंसयोश्च प्रतिमाशिशुचित्रादिचुम्बनम् ।
सङ्क्रान्तमिति विज्ञेयमिति चुम्बननिर्णयः ॥ ४८ ॥

इति चुम्बनाधिकारः ॥

---

## अथ नखक्षताधिकारः

क्षतिर्नखरसम्भूता यूनोः स्थानविशेषके ।
सा नखक्षतिराख्याता भेदतो नवधा भवेत् ॥ ४९ ॥

यथा छुरितकं चार्धचन्द्रमण्डलके तथा ।
रेखा व्याघ्रपदं चैव मयूरपदकं तथा ॥ ५० ॥
शशप्लुतं चोत्पलकं पत्रं स्मारकमित्यपि ।
नखरक्षतिभेदाः स्युस्तेषां स्थानं प्रचक्षते ॥ ५१ ॥

कक्षोरुजघनं पार्श्वपृष्ठहृत्कन्धरं तथा ।
स्तनाविति च तत्स्थानं यूनोः स्यात्खरवेगयोः ॥ ५२ ॥

कालः प्रणयकोपे च नवसङ्गे मधूत्सवे ।
परस्परं प्रीतिकाले प्रवासागमने तथा ॥ ५३ ॥

पुष्पोद्गमे प्रयोक्तव्या नित्यं तु खरवेगयोः
स्तनकण्ठकपोलोरुनितम्बे न्यस्तरेखकम् ॥ ५४ ॥
वामहस्तनखैस्स्पर्शमात्ररोमाञ्चनिर्गमम् ।
अन्ते नखरसम्बन्धात् प्रवृद्धध्वनिकं मृदु ॥ ५५ ॥

तथा छुरितकं नाम नखकर्मकृतं भवेत् ।
ग्रीवायां स्तनयोर्वक्रो नखाङ्कस्सोऽर्धचन्द्रकः ॥ ५६ ॥

तावेव द्वावभिमुखौ यदि मण्डलकं भवेत् ।
कन्धरोरू च मदनागारमूर्ध्नि तथैव च ॥ ५७ ॥

द्वित्राङ्गुलायतनखक्षती रेखेति कथ्यते ।
सैव वक्रा यदि व्याघ्रनखरं तदुदाहृतम् ॥ ५८ ॥

कुचाग्रे तु नखैस्सर्वैश्चूचुकाभिमुखा यदि ।
रेखा भवेयुस्तच्चोक्तं मयूरपदकं बुधैः ॥ ५९ ॥

स्तनान्त्ये सन्निकृष्टानि प्रत्येककुटिलानि च ।
पदानि नखराणां तच्छशप्लुतमुदाहृतम् ॥ ६० ॥

स्तने नितम्बे जघनेऽप्युत्पलच्छदनाकृति ।
यन्नखक्षतमुक्तं तद्बुधैरुत्पलपत्रकम् ॥ ६१ ॥

तथा त्रिचतुरा रेखाः स्तनोरुजघने स्त्रियः ।

श्लिष्टाः प्रवसता नेत्रा स्मरणार्थं कृता यदि ।
तत्स्मारकं समाख्यातं कामतन्त्रविचक्षणैः ॥ ६२ ॥

इति नखक्षताधिकारः ॥

अथ दन्तक्षताधिकारः

यूनोस्स्मरार्तयोः स्थानविशेषे दन्तदंशनम् ॥ ६३ ॥
दन्तच्छेद्यं समाख्यातं तदप्यष्टविधं भवेत् ।
गूढकोच्छूनके बिन्दुप्रवालमणितं तथा ॥ ६४ ॥
बिन्दुमाला तथा चान्या मणिमाला तथापरा ।
खण्डाभ्रकं तथा चैकं क्रोडचर्वितकं परम् ॥ ६५ ॥
अन्तर्मुखोत्तरोष्ठाक्षि वर्जयित्वा विचक्षणैः ।
स्थानेषु चुम्बनोक्तेषु प्रयोज्यं दशनक्षतम् ॥ ६६ ॥
अधरे रागमात्रेण विभाव्यं तद्धि गूढकम् ।
अधरे वामगण्डे वा पीडनात्किञ्चिदुन्नतम् ॥ ६७ ॥
उच्छूनकमिति प्रोक्तं दन्तदंशनकं बुधैः ।
मध्येऽधरं रदद्वन्द्वसन्दंशेनाल्पखण्डनात् ॥ ६८ ॥
जातं दशनविच्छेद्यं बिन्दुं वात्स्यायनोऽब्रवीत् ।
दन्तोष्ठयोगाभ्यासेन निष्पत्तेरधरे पुनः ॥ ६९ ॥
प्रवालपाटलं यत्र निक्षतं चिह्नमात्रकम् ।
प्रवालमणिराख्यातः स कामागमवेदिभिः ॥ ७० ॥
रदनद्वयदंशेन मालाकाराश्च बिन्दवः ।
ऊर्वोर्ललाटे च कृता बिन्दुमालेति तां विदुः ॥ ७१ ॥
शिताग्रैर्दशनैस्सर्वैर्युगपद्दंशनात्कृता ।
बिन्दुमालेव मुनिभिर्मणिमालेति सोदिता ॥ ७२ ॥
स्थानं च तस्याः कक्षौ च ललाटगलवङ्क्षणम् ।
पृथुमध्यातिसूक्ष्मैश्च रदनाङ्कैस्समन्ततः ॥ ७३ ॥

मण्डलाकृतिमद्दन्तद्वयसन्दंशकं भवेत् ।
तत्खँण्डाभ्रकमाख्यातं कुर्यात्कुचतटोपरि ॥ ७४ ॥
ताम्रान्तरा दन्तरेखा दीर्घा बाह्वोर्निरन्तरा ।
क्रोडचर्वितकं नाम दन्तक्षतमुदाहृतम् ॥ ७५ ॥

इति श्रीप्रौढदेवराजमहाराजविरचितायां रतिरत्नप्रदीपिकायां नायिकानायकबाह्यसुरतनिरूपणं नाम तृतीयोऽध्यायः ॥

अथ चतुर्थोऽध्यायः

करणानां प्रभेदेन सम्बन्धो योनिलिङ्गयोः ।
आभ्यन्तररतं तच्च सप्तविंशतिधा भवेत् ॥ १ ॥
प्रमाणकालभावैश्च प्रत्येकं नवभेदकैः ।
हरिणीशशयोर्योगे वडवावृषयोस्तथा ॥ २ ॥
हस्तिनीहययोर्योगे रतं समरतं त्रयम् ।
( मृगीवृषं च वडवाहयमुच्चरतिद्वयम् ॥ ३ ॥
हरिणीवृषयोर्योगो वडवाहययोश्च यः ।
उच्चद्वयं निगदितं नीचद्वयमथोच्यते ॥ ४ ॥
हस्तिनीवृषयोर्योगो वडवाशशयोश्च यः ।
तद्द्वयं नीचसुरतमत्युच्चं तु मृगीहयम् ॥ ५ ॥
अतिनीचमपि प्रोक्तं हस्तिनीशशयो रतम् ।
इत्थं प्रमाणतः प्रोक्तं कालतोऽप्यथ वक्ष्यते ॥ ६ ॥
लघुमध्यचिरद्रावाः पुरुषाः कालतस्त्रयः ।
एवमेव त्रिधा प्रोक्तं योषितोऽपि प्रमाणतः ॥ ७ ॥
परस्परं यथासङ्ख्यं योगे समरतं त्रयम् ।
लघ्वीमध्यमयोर्योगो यो मध्याचिरयोस्तथा ॥ ८ ॥
उच्चद्वयं निगदितं नीचद्वयमथोच्यते ।

मध्याया लघुपुंसा यच्चिराया मध्यमेन च ॥ ९ ॥
तन्नीचद्वयमाख्यातं वक्ष्ये शिष्टरतद्वयम् ।
लघ्व्याश्चिरेण सम्बन्धश्चिराया लघुना च यः ॥ १० ॥
अत्युच्चमतिनीचं च तद्द्वयं परिकीर्तितम् ।
मन्दमध्यमचण्डास्स्युः वेगतोऽप्युभयोस्त्रिधा ॥ ११ ॥
परस्परं यथासङ्ख्यं योगे समरतत्रयम् ।
मन्दाया मध्यवेगेन मध्यायायाश्चण्डवेगिना ॥ १२ ॥
उच्चद्वयं समादिष्टं नीचद्वयमथोच्यते ।
मध्याया मन्दवेगेन चण्डाया मध्यमेन च ॥ १३ ॥
नीचद्वयं समाख्यातं वक्ष्ये शिष्टरतद्वयम् ।
मन्दायाश्चण्डवेगेन चण्डाया मन्दवेगिना ॥ १४ ॥
अत्युच्चमतिनीचं चेत्येतद्द्वयमुदाहृतम् ।
इति प्रमाणैः कालैश्च भावैर्नवरतं भवेत् ॥ १५ ॥
अत्र चोदाहरिष्यामः श्लोकान् कोक्कोकभाषितान् ।
उत्तमानि समान्याहुर्मध्यमं च रतद्वयम् ॥ १६ ॥
नीचद्वयं तथाऽत्युच्चमतिनीचमिहाधमम् ।
कण्डूतेरप्रतीकारादन्तर्लिङ्गाविमर्दनात् ॥ १७ ॥
न द्रवन्ति न तृप्यन्ति ( हृष्यन्ति ) योषितो नीचमेहने ।
उच्चेऽपि मृदुगुह्यान्तः सम्पीडा सव्यथा यदि ॥ १८ ॥
न द्रवन्ति न हृष्यन्ति मनस्तन्त्रो हि मन्मथः ।
रक्तजाः क्रिमयस्सूक्ष्मा मृदुमध्योग्रशक्तयः ॥ १९ ॥
स्मरसद्मसु कण्डूतिं जनयन्ति यथाबलम् ।
चण्डध्वजाभिघातेन कण्ड्व्यपनयेन च ॥ २० ॥
क्षरणाच्च सुखं तासां विसृष्टेः स्यन्दनात्मनः ।
आरम्भप्रभृति स्यन्दः क्लेशात्मा सुखलेशदः ॥ २१ ॥
अन्ते तु नरवत्तासां विसृष्टेर्मूर्च्छनासुखम् ।

क्षणं रटन्ती रुदती नृत्यन्ती चातिविह्वला ॥ २२ ॥
निस्सहत्वं तथा याति मुकुलीकृतलोचना ।
यतस्स्मरतेनैव सौख्यं भवति कामिनाम् ॥ २३ ॥
तस्मात्तदर्थमेवायमुपायः कथ्यते मया ।
सहस्रभगसम्बन्धान्मुक्तिरित्यभ्यधान्मुनिः ॥ २४ ॥
तस्यापि चायमेवार्थ उक्तो भाष्यकृता स्वयम् ।
स्त्रीपुंसयोस्सहस्रावस्सहस्रभग उच्यते ॥ २५ ॥
सोऽर्थस्स्मरतेनैव यस्मात्तदभिधीयते ।
सुदीपपुष्पमालाऽवकीर्णे धूपसुदीपिते ॥ २६ ॥
गृहे सहचरैस्साकं वामाक्षीं वामपार्श्वके ।
निवेश्यालङ्कृतां नर्मगोष्ठीमपि च भावयेत् ॥ २७ ॥
वामदोष्णा परीरभ्य काञ्चीचेलाञ्चलस्तनम्
दक्षिणेन स्पृशेद्गाथागीतिभिर्हृदये स्त्रियः ॥ २८ ॥
रागमुत्पाद्य शनकैर्गोष्ठीमपि च भावयेत् ।
चिबुकालकगण्डं च तालुजिह्वे ससीत्कृतम् ॥ २९ ॥
भूयश्चुम्बेन्नाभिमूलं वक्षोरुहकटिस्थले ।
आचरेच्छुरितं भूयश्श्लथयेन्नीविकामपि ॥ ३० ॥
भजते यदि वैमत्यं गण्डपालिं विचुम्बय च ।
अपि स्मरगृहं तस्या लिङ्गाग्रेण विपीडयेत् ॥ ३१ ॥
मुखं चाभिमुखं तस्या दोर्भ्यामालिङ्गयेद् दृढम् ।
कराम्बुजेन मदनसदनं क्षोभयेन्मृदु ॥ ३२ ॥
सरोजमृदुलः कोऽप्यङ्गुलिकीर्णस्तथाऽपरः ।
अन्तस्तथाऽन्यो वलितः कोऽपि गोजिह्विकानिभः ॥ ३३ ॥
इति स्त्रीणां स्मरावासश्चतुर्धा परिकीर्तितः ।
शैथिल्यं श्लाघ्यतां चापि भजते पूर्वपूर्वकः ॥ ३४ ॥
योनिमध्ये निवसति नाडिका लिङ्ग ( चन्द्र ) सन्निभा ।

मदनागारडोला सा द्व्यङ्गुलक्षोभिता सती ॥ ३५ ॥
मदोदकौघं सृजति सा च कामातपत्रकम् ।
तदेतद्द्वयमेवाहुरिन्द्रिये युवतीजने ॥ ३६ ॥
मदनागाररन्ध्रादप्यूर्ध्वतो नासिकानिभम् ।
सिराभिर्मदयुक्ताभिर्युक्तं कामातपत्रकम् ॥ ३७ ॥
मदनागाररन्ध्रस्य चान्तरे नातिदूरतः ।
पूर्णचन्द्राभिधा नाडी पूर्णा स्मरजलैर्भवेत् ॥ ३८ ॥
बहुनाडीचक्रमन्यदस्ति मुख्यं तदन्तरे ।
एतत्त्रितयमेवाहुः करशाखाभिमर्दने ॥ ३९ ॥
फणीन्द्रभोगार्धचन्द्रकरिहस्तस्मराङ्कुशैः ।
तर्जनीमध्यमाभ्यां च क्षोभयेत्स्मरमन्दिरम् ॥ ४० ॥
इत्थं नखरदाश्लेषमृदुगुह्योपचारकैः ।
प्रमदां समदां कृत्वा यन्त्रयोगमथाचरेत् ॥ ४१ ॥
उत्तानं च तथा तिर्यगासितं स्थितमानतम् ।
इति पञ्चविधं यन्त्रं तद्भेदांश्च प्रचक्ष्महे ॥ ४२ ॥
ग्राम्यनागरिकोत्फुल्लजृम्भितेन्द्राणिसम्पुटान् ।
पार्श्वसम्पुटकं चान्यत्करणं परिकीर्तितम् ॥ ४३ ॥
पीडितं वेष्टितं चैव बाडवोद्भुग्नके तथा ।
अर्धाङ्गपीडितं जृम्भं प्रसारितकमित्यपि ॥ ४४ ॥
वेणुदारितशूलाङ्ककार्कटीप्रेङ्खकानि च ।
तथा पद्मासनं चार्धपद्मासनकमित्यपि ॥ ४५ ॥
फणिपाशः परावृत्तं संयमः कौर्ममेव च ।
समुद्गकं तथा चैकं परिवर्त्तितकं तथा ॥ ४६ ॥
तथा युग्मपदं चान्यद्विमर्दितकमार्कटे ।
आश्रितस्सम्मुखं चैव त्रैविक्रमिकमित्यपि ॥ ४७ ॥
तथा द्वितलकं जानुकूर्परं चावलम्बितम् ।

धैनुकैभिकसङ्घाटगोयूथं वारिकेलितम् ॥ ४८ ॥
पौरुषं भ्रामरं चैव प्रेङ्खोलितकमर्दने ।
कोहलामर्दने योनिपीडनिर्घातकं तथा ॥ ४९ ॥
वराहवृषघाते च चटकोल्लासितं तथा ।
श्रान्तसम्पुटमित्येषा करणानां विचारणा ॥ ५० ॥
उत्तानयोषिदुत्सङ्ग उपाविष्टनरस्य हि ।
बाहूरूपार्श्वगौ स्यातां तद्ग्राम्यकरणं स्मृतम् ॥ ५१ ॥
तौ नायकोरुमध्यस्थौ यदि नागरिकं तदा ।
एतद्वयं समरते योजनीयं विचक्षणैः ॥ ५२ ॥
कान्ता स्वपाणिचरणौ रतये प्रदेशे निवेश्य चोरुं नमयेन्नयेत् सा ।
न्यस्तोरुकस्तत्र कुचौ गृहीत्वा रमेच्च चोत्फुल्लकनामधेयम् ॥ ५३ ॥
उत्तानसंवेशवती च योषिदङ्कं निजं तिर्यगुदश्चितं चेत् ।
क्रियेत विस्तारनिजोरुयोनि तदा भवेज्जृम्भितकाभिधानम् ॥५४॥
उत्तानं शयिता स्वमूरुयुगलं पार्श्वद्वये कोमले
बिभ्राणा दयितस्य जानुयुगलं तेनैव संयोजयेत् ।
इन्द्राणीकरणाभिधानमृपयोऽभ्यासैकसाध्यं विदु-
स्तच्चैतत्करणत्रयं भवति हि प्रोच्चाभिधाने रते ॥ ५५ ॥
इति श्रीप्रौढदेवराजमहाराजविरचितायां रतिरत्नप्रदीपिकायां
आभ्यन्तररतिनिरूपणं नाम चतुर्थोऽध्यायः ॥

---

## अथ पञ्चमोऽध्यायः

ऋजुसंश्लिष्टविस्तारिजङ्घाया योषितः पुमान् ।
तथैव रमते चैतत्करणं सम्पुटं मतम् ॥ १ ॥
सम्पुटं पार्श्वयोगेन पार्श्वसम्पुटकं भवेत् ।
पार्श्वसम्पुटकं चोत्पीडनात्पीडितं भवेत् ।
पीडितं वेष्टिताख्यं स्यादूर्वोर्विपरिवर्त्तनात् ॥ २ ॥

सम्पुटके योषिच्चेद्योन्योरुभ्यां गृहीतयुवदण्डा ।
उद्धृत्यैतस्य पुनर्मुश्चेत्सङ्गृह्य वाडवं करणम् ॥ ३ ॥
उत्ताना निजमूरुयुग्ममृजुसंश्लिष्टं विधायोर्ध्वगं
तं कुर्य्यात्परिरभ्य सोऽपि रमते सोऽपि स्वकीये पदे ।
व्यत्यस्ते तदुरःस्थले विदधती कान्तेन सार्धं रमे-
तैतद्भोगभुजां सुखाय हि भवेदुद्भुग्नकाख्यं रतम् ॥ ४ ॥
उद्भुग्नके मृगाक्षी चरणं चैकं प्रसारितं चाधः ।
विदधीत यदि तदानीमर्धाङ्गनिपीडितं करणम् ॥ ५ ॥
उत्तानजानुनी नेतुस्स्कन्धयोरुपरि न्यसेत् ।
चरणावूर्ध्वगौ कुर्यात्तज्जृम्भकमुदाहृतम् ॥ ६ ॥
तत्रैव जृम्भके स्त्रीचरणश्चैकः प्रसारितश्शयने ।
उपरिष्ठस्तां रमते प्रसारितं तच्च विज्ञेयम् ॥ ७ ॥
तत्रैव जृम्भके पादौ पर्यायप्रसृतौ स्त्रियः ।
पौनःपुन्यं विपर्यासाद्वेणुदारितकं भवेत् ॥ ८ ॥
उत्तानशायिनी स्त्री स्वं जङ्घाग्रं स्वमस्तके न्यस्य ।
अपरमकुटिलं चोर्ध्वप्रसृतं कुर्यात्तदेव शूलाङ्कम् ॥ ९ ॥
उत्ताने जानुनी स्वे निजचरणतले कुञ्चितेऽन्योन्यसक्ते
कुर्यात्कान्तस्स्वनाभौ चरणयुगमथो योषितस्संनिदध्यात् ।
ऊरुभ्यां किञ्च कान्ताकटितटमवधृत्योपविष्टो रमेत्तां
एतत्कौलीरकाख्यं करणमतिशयप्रौढिदं भोगकाले ॥ १० ॥
एतत्कौलीरकरणे पादाभ्यां नायकं वधूः ।
आन्दोलयति चेन्मन्दं प्रेङ्खीकरणमुच्यते ॥ ११ ॥
स्ववामपादं निजदक्षिणोरावदक्षिणोरावपसव्यपादम् ।
न्यस्योर्ध्वगं तद्रमते गृहीत्वा प्रियश्च पद्मासनमुक्तमेतत् ॥ १२ ॥
यस्मिन् पद्मासने(१) चैकपदव्यत्ययतो भवेत् ।

(१) यत्तु पद्मासनामति युक्तः पाठः ।

अर्धपद्मासनाख्यं तत्करणं परिकीर्तितम् ॥ १३ ॥
उत्ताना निजजानुमध्यविलसद्बाहुद्वया सादरात्
आलिङ्ग्य प्रियकण्ठदेशमबला संवेशनं चाचरेत् ।
योषित्कण्ठमथावलम्ब्य रमणस्तत्कूर्परान्तर्गतौ
कृत्वा स्वीयभुजौ रमेत फणभृत्पाशाभिधानं हि तत् ॥१४॥
शय्यायां पूर्वभागेन परावृत्तस्य च प्रभोः ।
आलिङ्गन्त्यास्तस्य पृष्ठं परावृत्ताभिधं रतम् ॥ १५ ॥
उत्ताना स्वपदाङ्गुलिद्वितयकं धृत्वा कराभ्यां वधू-
र्भुग्नाङ्घ्रिद्वितया शयीत रमणो बाहू तदूर्वन्तरे ।
नीत्वाऽऽलिङ्ग्य गलं स्त्रियो यदि रमेत्तत्संयमाख्यं रतं
प्रोचुः प्रोच्चरतिप्रयोगनिपुणास्ते मल्लनागादयः ॥ १६ ॥
पार्श्वद्वयप्रसृतपाणितलाङ्घ्रिकायाः
वक्त्रे स्ववक्त्रमभिजङ्घमपि स्वजङ्घाम् ।
बाह्वोः स्वबाहुयुगलं विनिवेश्य कान्तो
यद्याचरेत्सुरतमेष हि कौर्मबन्धः ॥ १७ ॥
आरभ्योद्भुग्नकाद्यावत्कौर्मं साधारणं रतम् ।
उक्तमुत्तानसुरतं तिर्यग्रतमथोच्यते ॥ १८ ॥
तिर्यक् शायितकान्ताया ऊर्वोर्मध्ये पुमान्निजौ ।
ऊरू विन्यस्य रमते तामालिङ्ग्य समुद्गकम् ॥ १९ ॥
नायको नायिका वाऽपि सम्प्रवृत्तसमुद्गकः ।
परिवृत्तिं यदि भजेत् परिवर्तितकं रतम् ॥ २० ॥
आसीनकान्ता निजपादपद्मयुगं निदध्याद्विनिकुञ्चितं च ।
एकत्र तिर्यग्रमणस्तथाऽधः कृत्वा रमेद्युग्मपदाभिधं स्यात् २१
कामिनीकूर्परान्तस्थस्वकटिं भ्रामयन् युवा ।
तथाऽऽसीनोऽपि रमते तद्विमर्दितकाभिधम् ॥ २२ ॥
तद्विमर्दितकं च स्याद् रमेत्तत्सम्मुखं यदि ।
मार्कटं तद्धि विज्ञेयमथ स्थितकमुच्यते ॥ २३ ॥

कुडये स्तम्भेऽथवा कान्ता पृष्ठं दत्त्वाऽऽहिता यदि ।
क्रमात्सम्मुखमालिङ्ग्य रमेदाश्रितकं हि तत् ॥ २४ ॥
तथा स्थितायाा नायक्याः पादमेकं प्रसारितम् ।
स कूर्परेण विष्टभ्य रमेत्तत्सम्मुखं रतम् ॥ २५ ॥
तथा स्थितायाः पार्श्वे तु चरणं समुदञ्चितम् ।
स करेणालिङ्ग्य रमेत् तदा त्रैविक्रमं मतम् ॥ २६ ॥
भित्तिं संश्रित्य तिष्ठन्निजकरकमले नाभिपार्श्वद्वये च
न्यस्य प्रेयान् प्रियस्थं पदतलमपि तद्धस्तयोर्न्यस्य कण्ठे ।
दोर्भ्यामालिङ्गयन्ती सुखतरमुपविष्टा रमेत्सा रतं तत्
प्रोचुर्वात्स्यायनाद्यास्स्मरनिगमकलाप्रौढिभाजस्तलाख्यम् २७
कूर्परद्वितयकेन योषितो जानुकण्ठमवलम्ब्य संस्थितः ।
तस्य मध्यमवलम्ब्य सा रमेज्जानुकूर्परमुदाहरन्ति तत् ॥२८॥
भित्तिं संश्रित्य नेतुस्स्थितिमपि भजतो हस्तपद्मोपविष्टा
दोर्भ्यामालिङ्ग्य कण्ठं कटितटमबला प्रेयसो वेष्टयन्ती ।
ऊरुभ्यां ताडयन्ती चरणतलयुगेनापि भित्तिं विचित्रं
सीत्कारं चाचरन्ती श्वसितमपि रमेच्चुम्बितं चावपूर्वम् ॥२९॥
पादद्वयं करयुगं तिष्ठन् विष्टभ्य भूतले ।
वृषवद्रमते सोऽपि धैनुकं तदुदाहृतम् ॥३०॥
अवनिगतस्तनमस्तकवदनामौन्नत्यवत्स्फिजं नेता ।
तिष्ठेत् करेण योनिं पूर्वं विक्षोभयेद्रमेदैभम् ॥ ३१ ॥
ऐणगर्दभशावाश्वसैरभच्छागलादिकम् ।
चतुष्पादरतं चैवमूहनीयं विचक्षणैः ॥३२॥

अथ विचित्रम्

अन्योन्यं विपरीतसक्थियुतयोरन्योन्यविन्यस्तयो-
रभ्यर्णस्थितिमान् पुमानपि तयो रेखां च बाह्यै रतैः ।
सन्तोष्यान्यतमां तथाऽन्तररतैर्निर्व्यूढरागोदयां

कुर्यादेतदुदाहरन्ति मुनयस्सङ्घाटकाख्यं रतम् ॥ ३३ ॥
विपरीतस्फिग्युताभ्यां पतिर्नारी परस्परम् ।
विश्वस्ताभ्यां रमेतोच्चैस्त्वतिकामुककर्तृकम् ॥ ३४ ॥
परस्परं विश्वसनीययोपित्सङ्घाटकेन क्रमशो युवाऽथ ।
रमेत गोयूथकमेतदेका कान्ताऽपि कान्तैर्बहुभिस्तथैव ॥३५॥
करी जलक्रीडकाले करिणीयूथमध्यगः ।
क्रमेण रमते सर्वास्तद्वत्स्यात् वारिकेलितम् ॥३६॥
स्त्रीराज्ये बहुभिः कान्तैरेका स्त्री रमते भृशम् ।
कर्णाटे युवतीभिश्च बह्वीभी रमते युवा ॥३७॥
नायकस्यानुमत्या वा स्वमनीषिकयाऽथवा ।
पुंवत् स्त्री रमते रागात् पुरुषायितमुच्यते ॥३८॥
उत्तानितस्योज्जघनस्थपुंसो लिङ्गं स्वयोनावुपरिस्थकान्ता ।
निवेश्य तिर्यग्रमते तथैव तत्पौरुषं भ्रामरमुद्दिशन्ति ॥३९॥
उत्तानशयितस्योपर्युपविष्टा वधूस्तदा ।
किमप्यालम्ब्य हस्ताभ्यां रमेत्प्रेङ्खोलितं हि तत् ॥४०॥
आसन्नप्रसवां स्थूलां गुर्विणीं पुष्पिणीं मृगीम् ।
अचिरप्रसवां कन्यां कृशां नात्र नियोजयेत् ॥४१॥
उत्तानाया मदनसदने सन्निवेश्य स्वलिङ्गं
धृत्वा मूलं निजकरतलेनाग्रतस्तस्य कामी ।
योनेरन्तर्नयनमसकृत्सर्वतस्संविदध्यात्
एतत्कान्तामदविघटनं मर्दनं प्राहुरार्याः ॥ ४२ ॥
तथाऽवष्टब्धलिङ्गाग्रान्नायको जघनं स्वकम् ।
नीचीकृत्यैव योन्यन्तर्योजयेत्कोहलाभिधम् ।
तदेव विपरीतं तु सुरतं चावमर्दितम् ॥ ४३ ॥
लिङ्गेन योनिमाहत्य सोपतिष्ठेत पीडयन् ।
चिरं प्रियतमश्चैतद्योनिपीडितकं भवेत् ॥ ४४ ॥

तथैव दूरमाकृष्य लिङ्गं योनौ निपातयेत्।
सत्वरं सुरतं चैतन्निर्वातकमुदाहृतम् ॥ ४५ ॥
योन्येकपार्श्वे लिङ्गेन बहुशो विलिखेद्यदि।
वराहघातो विज्ञेयो रतिकर्मविशारदैः ॥ ४६ ॥
योनिपार्श्वद्वये चैव पर्यायेण लिखेद्यदि।
वृषघातस्स कथितो मुनिभिश्शास्त्रकोविदैः ॥ ४७ ॥
योनौ प्रवेशितं लिङ्गं प्रेयान् योनेः समुद्धरन्।
घट्टयेत्त्रिचतुर्वारं चटकोल्लासितं हि तत् ॥ ४८ ॥
श्रान्तो रतान्ते पुरुषो मृगाक्ष्या वक्त्रे स्ववक्त्रं हृदये च वक्षः।
लिङ्गं च योनौ स शयीत दत्त्वा श्रान्तादिकं सम्पुटमेतदाहुः ॥४९॥
इति श्रीप्रौढदेवराजमहाराजविरचितायां रतिरत्नप्रदीपिकायां
आभ्यन्तररतौ करणनिरूपणं नाम पञ्चमोऽध्यायः।

---

## अथ षष्ठोऽध्यायः

अथ निर्दिष्टकरणसाध्यस्य सुरतस्य च।
अधिकारिविशेषेण सञ्ज्ञाभेदो निरूप्यते ॥ १ ॥
तदप्यष्टविधं ज्ञेयं रागवच्च तदादिमम्।
आहार्यरागं तदनु कृत्रिमं तदनन्तरम् ॥ २ ॥
तदा व्यवहितं चान्यत्पोटासञ्ज्ञमतः परम्।
खलं चायन्त्रितं चैव प्रणयादिकलिस्तथा ॥ ३ ॥
आद्यदर्शनमारभ्य चक्षुःप्रीत्यादिकैर्मिथः।
प्रवृद्धरागयोर्यूनोर्दूतीसम्प्रेषणादिभिः ॥ ४ ॥
प्रयत्नैर्घटने सिद्धेऽन्योन्यं यत्सुरतं भवेत्।
यच्च प्रवासागमने विरहात्सौख्यशालिनोः ॥ ५ ॥
यच्च प्रणयकोपे हि प्रशान्ते सुप्रसन्नयोः।
रतं तद्रागवत्सञ्ज्ञं वदन्ति रसिकोत्तमाः ॥ ६ ॥

अर्थसिद्ध्यर्थमथवाऽनर्थहानार्थमेव वा ।
सङ्गमं भजतोर्यूनोस्तथा मध्यस्थरागयोः ॥ ७ ॥
प्रवृत्तं रतमाहार्यरागसञ्ज्ञं तदुच्यते ।
अन्यस्त्रीसक्तपुंसो वाऽन्यपुंसक्तस्त्रियोऽथवा ॥ ८ ॥
कार्यसिद्धिफलं यच्च रतं कृत्रिममुच्यते ।
रतारम्भात्प्रभृत्यन्यां प्रियां हृदि निधाय च ॥ ९ ॥
तस्यान्तर्भावनोत्पन्नरागस्य पुरुषस्य हि ।
तथाभूतस्त्रिया वृत्तं पोटासञ्ज्ञं रतं भवेत् ॥ १० ॥
वाराङ्गनायाः प्रौढाया अवशाया बलात् कृते ।
कर्षकप्रायमूढेन रतं खलरतं भवेत् ॥ ११ ॥
विदग्धनायकस्यापि चैवं ग्रामीणयोषिता ।
अनियन्त्रणयोर्यूनोश्चिरकालानुवर्तिनोः ॥ १२ ॥
प्राप्तविस्रम्भयो रागाद्यद्रतं तदयन्त्रितम् ।
संवर्धमानप्रणया सम्भोगसमये प्रिया ॥ १३ ॥
सपत्नीविषयालापतन्नामग्रहणादिकम् ।
प्रियस्य दुश्चेष्टितं साऽसहमाना च रोदिति ॥ १४ ॥
अत्यन्तकलहे नेतुः शिरोरुहविलुञ्छनम् ।
आत्मप्रहरणं चैव परुपालापमेव च ॥ १५ ॥
पराङ्मुखीकृतं भूमौ शयनं द्वारि संस्थितिम् ।
माल्यालङ्करणादीनां परित्यागं करोति च ॥ १६ ॥
एतादृशान्याचरन्तीं कोपचिह्नान्वितां वधूम् ।
साम्ना दानेन भेदेन नत्युपेक्षारसान्तरैः ॥ १७ ॥
प्रसन्नीकृत्य शयनमारोप्य रमते प्रियः ।
प्राहुस्तदेतत्प्रणयकलहाख्यं रतं बुधाः ॥ १८ ॥
तत्र प्रियवचस्साम भेदस्तत्सख्युपार्जनम् ।
दानं व्याजेन भूपादेः पादयोः पतनं नतिः ॥ १९ ॥

मानादौ तु परिक्षीणे स्यादुपेक्षानिवारणम् ।
रसस्तत्रान्तरुपायैः कोपभ्रंशो रसान्तरम् ॥ २० ॥

### अथ औपरिष्टकम्

अथ सम्भोगरूपत्वादौपरिष्टकमुच्यते ।
तच्चौपरिष्टकं वक्त्रजघनव्यावृत्तिर्भवेत् ॥ २१ ॥
तदपि द्विविधं प्रोक्तं योषित्पुरुषभेदतः ।
योषित्कृत्यं चौपरिष्टमष्टधा परिकीर्तितम् ॥ २२ ॥
निमितं पार्श्वदष्टं च बहिस्सन्दंशमेव च ।
अन्तस्सन्दंशकं चैव चुम्बितं परिमृष्टकम् ॥ २३ ॥
आम्रचूषितमित्येकं तथा सङ्गरमित्यपि ।
कान्ता नायकलिङ्गं च स्वहस्ताभ्यां समुद्धृतम् ॥ २४ ॥
स्वोष्ठसम्मुखमासाद्य न शक्नोम्येतदित्यथ ।
विधुन्वन्ती शिरोदण्डं सरोषेव परित्यजेत् ॥ २५ ॥
निमितं तच्च विज्ञेयमौपरिष्टककोविदैः ।
करेणाच्छाद्य दण्डाग्रं तदधस्ताद् ध्वजस्य च ॥ २६ ॥
पार्श्वद्वयं च निर्दन्तमवपीड्य पुनः पुनः ।
अलमेतावदित्येवं सान्त्वयेत्पार्श्वदष्टकम् ॥ २७ ॥
भूयश्चोक्ता नायकेन दण्डाग्रं वदनान्तरे ।
निवेश्य सम्मीलितोष्ठी निपीड्य च तदग्रकम् ॥ २८ ॥
आकर्षयन्ती च वपटकृत्य सीत्कृतिमाचरेत् ।
बहिस्सन्दंशसञ्ज्ञं तत्सन्दंशाच्चर्मणो बहिः ॥ २९ ॥
एतावता नालमिति पुनर्नायकचोदिता ।
दण्डं निष्कोश्य तस्याग्रमात्रं वक्त्रे निवेश्य च ॥ ३० ॥
ओष्ठाभ्यां तच्च निष्पीड्य निष्ठीवनकमाचरेत् ।
अन्तस्सन्दंशनादेतदन्तस्सन्दंशकं भवेत् ॥ ३१ ॥

करावष्टब्धमदनध्वजस्य त्वग्रमात्रकम् ।
अभिचुम्बेदधरवत्तच्चुम्बितकमुच्यते ॥ ३२ ॥
तथा सञ्चुम्ब्य रसनाग्रेण सम्पुट्य नायिका ।
व्यथयेत् स्रोतसो मार्गं किञ्चित्तत्परिसृष्टकम् ॥ ३३ ॥
विकोशितं ध्वजं चार्धमात्रं वक्त्रे प्रवेश्य तु ।
अवपीड्यादयं तं चाकृष्यान्तर्मुञ्चति प्रिया ॥ ३४ ॥
तदाम्रचूषिताख्यं स्यादाम्रचूषणसाम्यतः ।
वक्त्रे निष्कोशितं दण्डमामूलं तन्निवेश्य सा ॥ ३५ ॥
जिह्वाग्रेणावपीड्यौष्ठव्यापारेण च सत्वरम् ।
यावच्छुक्रागमं चैव वषट्कृत्यावचुम्बयेत् ॥ ३६ ॥
तदेतत्सङ्करं ख्यातमौपरिष्टकमुच्यते ।
कुलटा स्वैरिणी वेश्या दासी च परिचारिका ॥ ३७ ॥
एताः प्रयोजयन्त्येतन्नाचरन्ति कुलस्त्रियः ।
न च सर्वाः स्त्रियः कुर्युरिति वात्स्यायनोदितम् ॥ ३८ ॥
पुरुषाः केचिदप्येवं वनितास्वाचरन्ति तत् ।
तदप्यष्टविधं ज्ञेयमधरस्फुरितं तथा ॥ ३९ ॥
जिह्वाभ्रमणकं जिह्वामर्दितं चूषितं तथा ।
उच्चूषकक्षोभके च वहुचूषितकं तथा ॥ ४० ॥
काकिलादिरतं ह्येतदष्टधा परिकल्पितम् ।
ओष्ठाभ्यां मदनागारतोरणौ मन्दमन्दकम् ॥ ४१ ॥
आकृष्य चुम्बेदेतत्स्यादधरस्फुरिताभिधम् ।
तत्तोरणौ च प्रथमं विभिद्यैव स्वनासया ॥ ४२ ॥
योन्यन्तर्भावयेज्जिह्वां जिह्वाभ्रमणकं भवेत् ।
नासोष्ठचिबुकेनादौ योनेः परिसरात्पुनः ॥ ४३ ॥
आकुलीकृत्य कुसुमकार्मुकागारतोरणौ ।
जिह्वयाऽवष्टभ्य किञ्चिदवकृष्य तदन्तरे ॥ ४४ ॥

जिह्वां प्रवेश्य मदनक्षेत्रं भूयो विमर्दयेत्।
तज्जिह्वामर्दितमिति विख्यातं चौपरिष्टकम् ॥ ४५ ॥
तथा कृत्वा सृतं कान्तामदोदमवचूषयेत्।
निजोष्ठाभ्यां प्रियतमस्तच्चूषितकमुच्यते ॥ ४६ ॥
उन्नमय्य च पाणिभ्यां कान्ताया जघनं युवा।
नाभिरन्ध्रोरुमूले च जिह्वाव्यापारपूर्वकम् ॥ ४७ ॥
जिह्वयाऽवष्टभ्य च पुनर्मदनागारतोरणौ।
जिह्वामन्तः प्रवेश्यैव परितो भ्रामयेत् स्नुतम् ॥ ४८ ॥
चूषयेद्रतिपानीयं तदुच्चूषितकं स्मृतम्।
उरस्थस्त्रीरतिगृहं तत्पाणिधृतमस्तकः ॥ ४९ ॥
जिह्वया क्षोभयेदूरुमूलं धृत्वा करे स्त्रियः।
पिबेद्रतिजलं जिह्वयैतदुरक्षोभकं मतम् ॥ ५० ॥
मञ्चोपरिस्थकान्तायाः पदयुग्ममधस्स्थितः।
नायकः स्कन्धयोर्धृत्वा कराभ्यां तत्कटिस्थलम् ॥ ५१ ॥
आलिङ्ग्य च स्वरसनाक्षोभितस्मरमन्दिरम्।
तत्सम्भूतं रतिजलं बहुशोऽप्यवचूषयेत् ॥ ५२ ॥
तदौपरिष्टकं ज्ञेयं बहुचूषितसंज्ञकम्।
विपर्ययेन शयितौ नायकौ तु परस्परम् ॥ ५३ ॥
चुम्बतो युगपत् स्थानं तत्काकिलरतं भवेत्।
रतिकाले प्रयोज्यत्वाद्रत्यङ्गत्वात्तथापि च ॥ ५४ ॥
अभिधास्ये प्रहणनं लक्ष्मैतत्तस्य कथ्यते।
सम्भोगसमये यूनोः प्रहार इतरेतरम् ॥ ५५ ॥
यत्तत् प्रहणनं नाम तस्य भेदा दश स्मृताः।
अपहस्तं प्रसृतकं मुष्टिस्समतलं तथा ॥ ५६ ॥
कर्तरी च तथा भद्रकर्तरी यमकर्तरी।
शब्दपूर्वा कर्तरी च विद्धा सन्दंशिकेति च ॥ ५७ ॥

स्तनान्तरं तथा पृष्ठं शिरो जघनमित्यपि ।
ऊरुपार्श्वकपोलोरुफालं स्थानानि तस्य हि ॥ ५८ ॥

इति श्रीप्रौढदेवराजमहाराजविरचितायां रतिरत्नप्रदीपिकायां नन्दिकेश्वरमते औपरिष्टादिरतभेदनिरूपणं षष्ठोऽध्यायः ।

---

## अथ सप्तमोऽध्यायः

कान्ताया युक्तयन्त्रायाः स्तनयोरन्तरे युवा ।
मन्दप्रारम्भमपि च वर्धमानस्तनोदयम् ॥ १ ॥
अपहस्तेनासमाप्ति प्रहारस्त्वपहस्तकम् ।
तथा हिङ्कारमुख्यानि नैयत्येनाचरेद्युवा ॥ २ ॥
रतिकाले प्रियतमः किञ्चिदाकुञ्चिताङ्गुलिः ।
नायक्याश्च शिरोदेशे फूत्कृत्य प्रहरेन्मृदु ॥ ३ ॥
तच्च प्रसृतकं नाम तदन्तर्मुखकूजितम् ।
सीत्कृतं फूत्कृतं चैव नायिका सम्प्रयोजयेत् ॥ ४ ॥
उत्सङ्गे शयने वा समुपविष्टः स्त्रियः पुमान् ।
मुष्ट्या यत्प्रहरेन्मूर्ध्नि मुष्टिसंज्ञं तदुच्यते ॥ ५ ॥
सासूयेव तदानीं स्त्री स्तनितं कूजितं तदा ।
रुदितं प्रतिघातं च वरारोहा समाचरेत् ॥ ६ ॥
ऋजुप्रसार्याङ्गुलिना करपद्मेन वल्लभः ।
योषितो युक्तयन्त्रायाः कपोले मस्तकेऽथ वा ॥ ७ ॥
ताडनं तत्समतलं तत्र पारुष्यसाहसौ ।
हंसकोकिलकारण्डकूजितानि चरेद्वधूः ॥ ८ ॥
बहिर्मध्याङ्गुलिर्मुष्ट्या पुरतो (प्रोज्झिता) यदि कर्तरी ।
अधोमुखतया युक्तयन्त्राया हृदि ताडयेत् ॥ ९ ॥
( हिङ्कारादि तदा योषिन्नैकान्त्येन प्रयोजयेत् ) ।
तर्जनीमध्यमे मुष्टौ प्रसार्य व्यत्यये उभे ॥ १० ॥

कृत्वा ताभ्यां च नायक्यास्ताडयेन्मस्तके प्रियः ।
सा भद्रकर्तरी तत्र फूत्कारादीन् समाचरेत् ॥ ११ ॥
एवं हस्तद्वयाभ्यां च युगपन्मस्तके कृते ।
कान्तायाः पुरुषेणैषा तदा यमलकर्तरी ॥ १२ ॥
तथैव कान्ता पूर्वोक्तफूत्कारादीन् समाचरेत् ।
योषितो युक्तयन्त्राया उक्तप्रसृतके करे ॥ १३ ॥
सशब्दं प्रहरेन्मूर्ध्नि सा भवेच्छब्दकर्तरी ।
अन्तर्मुखेनैव तदा कूजितं सीत्कृतं तथा ॥ १४ ॥
भर्त्सनं प्रतिघातं चेत्येतानि स्त्री समाचरेत् ।
तर्जनीमध्यमे वाऽपि मध्यमानामिके तथा ॥ १५ ॥
तदन्तरेण निष्कास्याङ्गुष्ठं बद्ध्वा तु मुष्टिना ।
विद्धेति संज्ञां लभते तां कपोले प्रयोजयेत् ॥ १६ ॥
तदानीं दयिता स्वैरं रुदितादि समाचरेत् ।
अङ्गुष्ठतर्जनीभ्यां वा मध्यमाङ्गुष्ठकेन वा ॥ १७ ॥
सन्दंशनाद्भवेदेषा संज्ञा सन्दंशिकेति च ।
स्तनयोः पार्श्वयोश्चैषा तत्र सीत्कारमाचरेत् ॥ १८ ॥
अथ प्रहणनोत्थत्वात्सुरतोद्दीपकत्वतः ।
सीत्कृतस्याभिधास्येऽहं लक्षणं मुनिसम्मतम् ॥ १९ ॥
यूनोः प्रहणनाज्जातपीडाव्यक्तीकृतो भवेत् ।
गलादिजातो यच्छब्दविशेषस्तद्धि सीत्कृतम् ॥ २० ॥
न केवलं च सीन्मात्रं तत्सप्तदशधा भवेत् ।
हिङ्कृतं स्तनितं चैव श्वसितं रुदितं तथा ॥ २१ ॥
कूजितं धूत्कृतं चैव फूत्कृतास्म्यार्थके तथा ।
निषेधार्थालसार्थौ च मोक्षपीडार्थकौ तथा ॥ २२ ॥
करुणोक्तिस्तथा स्निग्धरूपोक्तिस्तथैव च ।
तथा काकरुतं च स्यात्सीत्कृतं चेति तद्विदाः ॥ २३ ॥

कर्णोद्गतेन शब्देन भवेन्मेघसघोषवत् ।
उन्नतं कर्णनासाभ्यां मूर्धारूढं तु हिङ्कृतम् ॥ २४ ॥
गम्भीरं शब्दरूपं यत्स्तनितं तदुदाहृतम् ।
निश्वास एव श्वसितं रुदितं रोदनं भवेत् ॥ २५ ॥
सुरतान्ते प्रयोक्तव्ये सीत्कृतस्य भिदा अपि ।
ज्ञातव्या देशभेदेन फूत्कृतं श्वसितं परे ॥ २६ ॥
कृकवाकुक्रोडवद्यो गलशब्दस्स कूजितम् ।
धूत्कृतं कूजितमिति वदन्त्यन्ये तु कोविदाः ॥ २७ ॥
वंशकाण्डस्य दलने यश्शब्दस्स च धूत्कृतम् ।
जलेऽश्वत्थफलस्याथ निरन्तरनिपातनात् ॥ २८ ॥
उपजायेत यश्शब्दः तद्वद्गलकृतो ध्वनिः ।
धूत्कृतं तदिदं प्राहुर्मणितं केचिदूचिरे ॥ २९ ॥
जीयाम्बेत्यादयश्शब्दा अम्बार्थाः परिकीर्तिताः ।
आतिष्ठेत्यादिकान् शब्दान्निषेधार्थान् प्रचक्षते ॥ ३० ॥
अलं भवतु पर्याप्तमित्याद्यास्त्वलमर्थकाः ।
त्यज मुञ्चेत्यादिकास्तु मोक्षार्थाः परिकीर्तिताः ॥ ३१ ॥
हन मां मारयेत्यादिशब्दाः पीडार्थकास्स्मृताः ।
मृताऽस्मि पालयेत्यादिशब्दाः स्युः करुणोक्तयः ॥ ३२ ॥
अविस्पष्टा तथा व्यग्रा चोक्तिः स्निग्धोक्तिरुच्यते ।
भापु नाथेत्यादिरुक्तिः परुषोक्तिर्निगद्यते ॥ ३३ ॥
केवलं गलमूलोत्थो ह्यविच्छिन्नो ध्वनिर्भवेत् ।
काकशब्देन सादृश्यात्तत्काकरुतमुच्यते ॥ ३४ ॥
क्षारद्रव्योपयोगेन गीतव्यसनतोऽपि वा ।
मुखान्तर्जायते शब्दो यत्तत्सीत्कृतमुच्यते ॥ ३५ ॥
एवं कारण्डवादीनां रुतं कुर्याद्रतान्तरे ।
अथ संभोगजनिता भावसंप्राप्तिरुच्यते ॥ ३६ ॥

देहे पुलकसंभूतिरङ्गेषु स्रस्तताऽपि च।
अक्ष्णोर्निमीलितत्वं च कपोले स्वेदसंभवः॥ ३७॥
मार्दवं मदनागारे भावाधिगमसूचकम्।
पीडयाऽपि रतिस्सम्यगधिकारनियोजिता॥ ३८॥
अनर्गलप्रलापित्वं भावासक्तेर्हि सूचकम्।
विधूननं च करयोः कान्तोत्थानासहिष्णुता॥ ३९॥
पादपृष्ठेन हननं पुरुषातिक्रमस्तथा।
सन्धुक्ष्यमाणभावस्य चिह्नान्येतानि सञ्जगुः॥ ४०॥
यूनोपभुज्यमानाया एवं प्रीतिस्तु वर्धते।
प्रीतिश्चतुर्विधा स्त्रीणां मुनिभिः परिकीर्तिता॥ ४१॥
तद्यथाऽऽभ्यासिकी चाऽऽभिमानिकी तदनन्तरम्।
संप्रत्ययाऽऽत्मिका चान्या तथा वैपर्यिकी परा॥ ४२॥
आखेटशिल्पनृत्येषु याऽभ्यासादुप(ची)जायते।
वीणास्वराद्यैर्विषयैस्तां विदोऽभ्यासिकीं विदुः॥ ४३॥
नाभ्यासान्नापि विषयान्नापि सङ्कल्पमात्रतः।
सञ्जायतेऽभिमानेन प्रीतिर्या साऽऽभिमानिकी॥ ४४॥
क्लीबस्य च तथा नार्या औपरिष्टककर्मणि।
आश्लेषणाऽऽदौ सादृश्यादन्यत्र च भवेत् क्वचित्॥ ४५॥
या प्रीतिर्जायते प्राहुस्तां च संप्रत्ययाऽऽत्मिकाम्।
प्रधानविषयैर्जाता प्रीतिर्वैपर्यिकी मता॥ ४६॥
प्रीतिभेदा निगदिता देशसात्म्यमथोच्यते।
मध्यदेशभवा नार्यो नखचुम्बनवैरिणः॥ ४७॥
सुचरित्रो (त्रा) नायको (का)ऽभिप्रेतकृत्साम्यमाचरेत्।
वाह्लीकावन्तिदेश्यास्तु शुद्धचारित्रशोभिताः॥ ४८॥
चुम्बनादिविरोधिन्यस्ताश्च चित्ररतिप्रियाः।
नखाऽऽदिकृत्यद्वेषिण्योऽप्यभिघातप्रिया अपि॥ ४९॥

आलिङ्गने लोलुपास्स्युराभीरविषयोद्भवाः ।
तथाविधाश्च मालव्यः किञ्च चुम्बनलोलुपाः ॥ ५० ॥
चन्द्रभागा तुङ्गभद्रा सरयूः (शतद्रूः) सिन्धुरेव च ।
इरावती वितस्तिश्चेत्यासां तीरसमुद्भवाः ॥ ५१ ॥
व्यापारेणौपरिष्टेन विना साध्या भवन्ति न ।
मन्दाभिघातैर्दशननखकृत्यैर्द्रवन्ति च ॥ ५२ ॥
सुकुमाराङ्गलतिकाः परिरम्भणलोलुपाः ।
लाट्यः प्रचण्डवेगाः स्युर्नृत्यन्ति सुरतोत्सवे ॥ ५३ ॥
तथैवावन्तिवनिता मृद्वङ्ग्यो रतिलोलुपाः ।
पापलोला निराऽऽचारा दुश्चरित्रा रतिप्रिया ॥ ५४ ॥
आन्ध्री पुरन्ध्री कुशला करणे वाडवाभिधे ।
प्रचण्डकण्डूतिभगाः कृतकध्वजमर्दने ॥ ५५ ॥
द्रवन्ति च प्रहृष्यन्ति दृढघातैस्तथैव च ।
स्त्रीराज्यसम्भवाश्चैव तथा कोसलदेशजाः ॥ ५६ ॥
अश्लीलाऽऽक्षेपवचनाश्चतुष्षष्टिकलारताः ।
विलज्जाः सत्वररताः महाराष्ट्रभवाः स्त्रियः ॥ ५७ ॥
तत्सर्वं पाटलीपुत्रजाता रहसि कुर्वते ।
अन्तर्बहिर्बाह्यरता बहुशोऽथ विमर्दिताः ॥ ५८ ॥
प्रभूतरतिपानीया द्रवन्ति विवशाः क्रमात् ।
शृङ्गारकुशलास्सत्यवचना मधुरोक्तयः ॥ ५९ ॥
औपरिष्टप्रिया नूनं स्त्रियो द्रविडदेशजाः ।
सर्वंसहा मध्यवेगाः स्वदोषाऽऽच्छादनोत्सुकाः ॥ ६० ॥
परदोषप्रकटनप्रगल्भाः कुत्सिताऽऽशयाः ।
श्लिष्टनिष्ठुरहास्योक्तिचतुरा वनवासिकाः ॥ ६१ ॥
मृदुगात्रलताश्चैव मधुराऽऽलापलोलुपाः ।
आश्लेषचुम्बनोत्सुक्याः स्वल्पवेगा रतोत्सवे ॥ ६२ ॥

कठोरचेष्टारहिताः गौड्यो वङ्गचश्च तादृशाः ।
करस्पर्शनमात्रेण द्रवन्त्यो मधुरोक्तयः ॥ ६३ ॥
शिरीषसुकुमाराङ्गाः स्मराऽगाररसा अपि ।
कामिन्यः कामरूपाऽऽख्यदेशजा हि भवन्त्यमूः ॥ ६४ ॥
विविधैर्नखकृत्यैश्च कृतकध्वजमर्दनैः ।
तथा चण्डप्रहारेण द्रवन्त्यास्यरतेन च ॥ ६५ ॥
निरन्तररताऽऽकाङ्क्षा वीतलज्जाः कलिङ्गजाः ।
अनुक्तेष्वपि देशेषु स्वबुद्धया सात्म्यमूहयेत् ॥ ६६ ॥
एवं सति च रक्तास्स्युर्योषितो मदनाऽऽहवे ।
अथाऽनुरक्तवनितालक्षणं सम्प्रचक्ष्महे ॥ ६७ ॥
सम्भोगविस्मयौत्सुक्यमुत्साहः स्वेदसम्भवः ।
रोमाञ्चः स्वरभेदश्च वैवर्ण्यं हर्षवेपथू ॥ ६८ ॥
स्मृतिर्व्रीडाऽश्रुनिचयो ह्यनुरागस्य लक्षणम् ।
एतल्लक्षणयुक्ताया नायिकायास्तु नायके ॥ ६९ ॥
प्रतिपत्तिविशेषांस्तान् प्रवक्ष्येऽहं यथामति ।
प्रसन्ना भवति क्षिप्रं नायकेनावलोकिता ॥ ७० ॥
नायकाऽऽगमने तोपमेत्यादौ भाषते स्वयम् ।
सखीजनेनुकथयत्य(लं)पि नाथगुणान् स्वयम् ॥ ७१ ॥
आच्छादयति तद्दोषान् सुप्तेऽस्मिन् स्वपिति स्वयम् ।
शय्यायां सम्मुखी शेते तत्सुहृत्पूजनोत्सुका ॥ ७२ ॥
पूर्वमेव प्रियोत्थानात्स्वयमुत्तिष्ठति प्रिया ।
तदमित्राणि च द्वेष्टि दूषिते दुर्मनाः प्रिये ॥ ७३ ॥
ददात्यात्मधनं त्वस्मा आलिङ्गत्यग्रतः स्वयम् ।
प्रियस्य यद्धनं तच्च रक्षत्यात्मधनं यथा ॥ ७४ ॥
तत्सुखं स्वसुखं मेने तद्दुःखं चाऽऽत्मदुःखकम् ।
तत्सम्मुखं चाप्यनिशमालोकयति साऽऽदरम् ॥ ७५ ॥

तेन सार्धं सदा भोगकाङ्क्षिणी तत्सुखोत्सुका ।
रहस्यमात्मनस्तस्मै कथयत्यनुरागिणी ॥ ७६ ॥
तस्या अप्यनुरागस्याऽऽकार एव हि सूचकः ।
गोपयत्यात्मनो दोषं तत्प्रतिप्रणयार्थिनी ॥ ७७ ॥
नोपेक्षते परावृत्तं सुप्तमालिङ्ग्य चुम्बति ।
प्रेक्षते चान्यमनसं शङ्कते चान्यसङ्गिनम् ॥ ७८ ॥
स्वकृतं नखचिह्नादि शङ्कते परकर्तृकम् ।
प्रियेण कृतसन्मानं स्वल्पं च बहु मन्यते ॥ ७९ ॥
करपद्मं नायकस्य निधायाक्षिललाटके ।
तत्सङ्गसौख्यानुभवं करोत्यार्द्रमनाः स्वयम् ॥ ८० ॥
प्रवासोद्यतमालिङ्ग्य भूयो भूयोऽपि चुम्बति ।
पुनः पुनस्सञ्चरति व्याजान्नायकसन्निधौ ॥ ८१ ॥
इति रक्तस्त्रियां लक्ष्म विरक्तायां विपर्ययः ।
पुरुषस्यानुरक्तस्याप्येवमेव समुन्नयेत् ॥ ८२ ॥

इति श्रीप्रौढदेवराजमहाराजविरचितायां रतिरत्नप्रदीपिकायां सर्वसुरताधिकारो नाम सप्तमोऽध्यायः ।

इति रतिरत्नप्रदीपिका समाप्ता ।

# अथ रतिकल्लोलिनी (१०) मञ्जरी

नृसिंहमार्तंडविकस्वरेऽनिशं मनोरविन्दे त्रिपुराविराजिते ।
यदङ्घ्रिपंकेरुहचिंतनादियं जगत्त्रयीवंद्यपरा सुरत्रयी ॥ १ ॥

एतत्कामिमनोवृत्तिपरितोषाय तन्यते ।
विदुषा सामराजेन क्षन्तव्यमिह तद्बुधैः ॥ २ ॥

आवीक्ष्य वात्स्यायनभाषितानि नराश्चिकीर्षन्ति रतोत्सवं ये ॥
पशुव्रतं पालयितुं निबद्धयोगाः कथं वेद्यतमा न ते स्युः ॥३॥

## अथ कन्यालक्षणदूषणप्रकरणम् (१) ।

तत्रादौ विवाहाद्युद्देशपूर्वं पद्मिन्यादयो निरूप्यन्ते—

सन्ताने बहुधर्मभाजि ललिते सद्विद्यया मंडिते
लक्ष्म्या ख्यातिमुपेयुषि प्रतिदिशं जाता सुरूपान्विता ।
मुक्ता दोषचयैर्गुणैरपि सदा पूज्या गदैर्वर्जिता
स्वधातृप्रसराः स्वगृह्यविधिना कन्या विवाह्या नृभिः ॥४॥

मनूक्तविधिना भाग्यं सामुद्रोक्तविधानतः ।
लक्षणानि स्मरोक्तेन वर्त्मना जातिचिन्तनम् ॥ ५ ॥

पद्मिनी चित्रिणी चैव शङ्खिनी करिणी तथा ।
वात्स्यायनेन मुनिना प्रोक्तं जातिचतुष्टयम् ॥ ६ ॥

पद्मिनी-लक्षणम्—

श्यामा ताम्ररसानुकारिनयना प्रोत्तुंगपीनस्तनी
मृद्वी पूर्णशरच्छशाङ्कवदना लज्जावती मानिनी ।
मध्येन त्रिवलीजुषा कृशतरेणाढ्या विपञ्चीस्वना
फुल्लाम्भोजसमाननाभिमदनच्छत्रा पवित्राकृतिः ॥ ७ ॥

वरटां मदनैर्विडम्बयन्ती लघुभुक् स्वल्परतैषिणी नितान्तम् ।
तिलसूनसमाननासिका च प्रथिता पङ्कजिनीति योषिदेषा ॥८॥

चित्रिणी—

तन्वी चञ्चललोचना गजगतिः सङ्गीतबद्धादरा
पीनश्रोणिपयोधरा परिमिताहारा मयूरस्वरा ।
भृङ्गश्यामलकुन्तला मनसिजक्रीडासु मन्दादरा
नानाकेलिकलाप्रपञ्चचतुरा चामीकराभासुरा ॥ ९ ॥

कृशावलग्नेन निसर्गवत्सला मनोज्ञकन्दर्पविलासमन्दिरा ।
दधाति या क्षौद्रसुगन्धमङ्गके सुशिल्पिनी सा कथितैव चित्रिणी ॥ १

शङ्खिनी—

दीर्घस्थूलकृशा पयोधरयुगं स्वल्पं दधाना सदा
कोपेद्धा घनसान्द्ररूक्षकबरी निम्नेक्षणा शीघ्रगा ।
पिङ्गा लघ्वशना विहीनहृदया पैशुन्यसक्त्यानना
क्षीरस्पर्द्धिसुगन्धमन्मथजला शङ्खस्वना पित्तला ॥ ११ ॥

लोमच्छन्नानङ्गगृहा कुर्वाणा नखरोत्सवम् ।
सुरते शङ्खिनी भूरिव्याकुलानङ्गमार्गणैः ॥ १२ ॥

हस्तिनी—

स्थूला स्थूलरदच्छदा च बहुभुक् पिङ्गालका क्रूरदृक्
खर्वा गौरतरा कृपाविरहिता जिह्माङ्गुलिभ्रूलता ।
धत्ते या मदनाम्बुकुञ्जरमदप्रख्यं सदा निर्दया
चक्रीवद्विकसस्वरापृथुभगा सङ्कीर्तिता हस्तिनी ॥ १३ ॥

रसाष्ट-दश-मार्तण्डाङ्गुलि-सम्मितयोनयः ।
विज्ञेयाः क्रमतो योषा नलिन्याद्या रतार्थिभिः ॥ १४ ॥

हरिणाद्याः—

आसां साङ्कर्यतो भेदास्त्रयः प्रोक्ता मनोभुवा ।
हरिणी वडवा चेति करिणीति समासतः ॥ १५ ॥
पद्मिनीचित्रिणीलक्ष्मसाङ्कर्यात्कथिता मृगी ।
चित्रिणी शङ्खिनीलक्ष्मयोगादुक्ता तुरङ्गमा ॥ १६ ॥

शङ्खिनीहस्तिनीलक्ष्मसङ्करात्करिणी स्मृता ।
क्रमान्मुनिग्रहेशानाङ्गुलिसम्मितयोनयः ॥ १७ ॥
अन्तर्भावो न चित्रिण्यादिष्वासां भाष्यसम्मतः ।
वदन्ति लल्लमुख्या यज्ज्ञाने सम्पाततश्च तत् ॥ १८ ॥
योनेर्भेदाः पृथग्भावं नाप्यासां मन्मथोऽब्रवीत् ।
यान्नलिन्यादिचिह्नानां दर्शनादाशु लेशतः ॥ १९ ॥
तस्मात्साङ्कर्यतो भेदाः स्युर्हरिण्यादियोषिताम् ।
भेदानेतान् विचार्याथ श्लक्ष्णां कन्यां समुद्वहेत् ॥ २० ॥

कन्यादूषणानि—

भूमीभृत्तरुपक्षिशैवलवती संज्ञा कृशा कोपिनी
लम्बोष्ठी कचलोचनाङ्गविषये पिङ्गा चला शीघ्रगा ।
निद्रालुर्बहुबर्बरा घनरवा कुप्येदकण्डादया
लज्जाहीनकठोरदुष्टहृदया न्यूनाधिकाङ्गेऽलसा ॥ २१ ॥
लोमशा प्रबला प्रौढा दुःशीला रोगसङ्कुला ।
खर्वा दीर्घा च मलिना नोद्वाह्या दन्तुराऽबला ॥ २२ ॥

## अथ पुरुषनायकलक्षणदूषणप्रकरणम्(२) ।

पुरुषाः—

जातोऽन्ववाये महति प्रवीणो विद्यासु दाता तरुणः सुशीलः ।
ख्यातो धनी धर्मरतिश्च धीरः कुटुम्बवान् रोगविहीनकायः ॥२३॥
दयापरो दुर्व्यसनैर्विहीनः स्वदेहखर्वीकृतमन्मथाङ्गः ।
वाग्मी सुवेषश्च नितान्तभोगी प्रोक्तो नरः कामकलाप्रवीणः ॥२४॥
शशको हरिणो वृषभस्तुरगश्चतुरः पुरुषान् कथयन्ति बुधाः ।
अथ कोप्यवदच्छशकोक्षहयांस्त्रिविधान्न तदस्ति मतं महताम् ॥२५॥
चतस्रो योषितः प्रोक्तास्त्रिविधाः स्युर्नरा यदा ।
तदा समञ्जसं न स्याद्रतं तस्माच्चतुर्विधाः ॥ २६ ॥

शशकलक्षणम्—

स्निग्धाः श्यामलकुन्तला लघुभुजः फुल्लारविन्देक्षणा-
श्चन्द्रास्याः शुचयोऽल्पदन्तरचनाः पाथोदतुल्यत्विषः ।
सूक्ष्माः पद्मसुगन्धयोऽल्पसुरता नानाकलाकोविदा
नम्राः कम्रगुणा रसाङ्गुलिमितं लिङ्गं शशा बिभ्रति ॥२७॥

मृगः—

ईषल्लम्बमुखाः सुपिङ्गलरुचो दीर्घायताक्षा मिता-
हाराः शिल्पकलाकलापचतुराः कामान्मनाग्भीरवः ।
क्षौद्रस्पर्धितगन्धिना मदजलेनाढ्याः कृपावत्सला
बिभ्रन्तो मदनाङ्कुशश्च हरिणा वस्वङ्गुलीभिर्मितम् ॥२८॥

वृषः—

पीवानः सुदृढा विशालहृदया रूक्षाश्च कूर्मोदरा
दीर्घा रक्तविलोचनाः पृथुभुजादण्डाः सदा त्यागिनः ।
बिभ्रन्तोऽरुणमङ्घ्रिपाणियुगलं क्षीराच्छकामाम्भसो
भ्राजन्तो वृषभा दशाङ्गुलिमितेनाङ्गेन ते संगताः ॥ २९ ॥

हयः—

रूक्षस्थूलकचा विशालनयनाः क्रोधोद्धरा लोभिनः
स्थूला दीर्घतरा नितान्तमलसा गम्भीरसम्भाषिणः ।
स्थूलस्त्रीरतिलालसा बहुभुजो निद्रालवः सन्ततं
क्रान्ता भूरिरिरंसयाऽतिकुटिलाः प्रायेण पित्तान्विताः ॥३०॥
इभदानविगन्धिमन्मथं सलिलं बिभ्रति ये निरन्तरम् ।
कथितास्तुरगा दिवाकराङ्गुलिसम्मानितलिङ्गधारिणः ॥३१॥

पुरुषदोषाः—

दुष्टः पापरतिर्दयाविरहितो रोगी प्रवासी रणी
वृद्धो दुर्व्यसनो यतीन्द्रकुलजो दारिद्र्यनिद्रान्वितः ।

पण्ढः स्नेहविवर्जितोऽतिकृपणो मूर्खः सदा कोपनः
सन्त्याज्यः पुरुषोऽपलक्षणयुतः कन्यासुखाकाङ्क्षिभिः ॥३२॥

## अथ परस्त्रीगमनागमनादिप्रकरणम् (३) ।

परदारनिषेधः—

आयुर्याति विनाशं जनोपहासार्थहानिपापानि ।
जायन्ते निजयोषा परपुरुषासक्तमानसा भवति ॥ ३३ ॥
लङ्केशवालिकीचकचरितान्याकर्ण्य धीरधीर्मनुजः ।
चेतः पराङ्गनानां सङ्गे तस्मान्न विदधीत ॥ ३४ ॥

परस्त्रीगमनम्—

नवानङ्गदशाक्रान्तो दशमीं याति मानवः ।
तस्माच्छरीररक्षार्थं नरो यायात्पराङ्गनाम् ॥ ३५ ॥
विशेषसुरतानाञ्च शिक्षार्थं प्राह मन्मथः ।
एतदेव मतं ज्ञेयं लक्ष्यागुरुकुण्डिनाम् ॥ ३६ ॥

वात्स्यायनो वदति चेत्तरुणी न कान्त-
मात्मानुरूपमनुविंदति मृत्युमेति ।
इत्थं विचिन्त्य पुरुषः सुरतार्थिनीं च
योषां परस्य समुपैतु न कामतोऽपि ॥ ३७ ॥

अगम्याः स्त्रियः—

सम्बन्धिन्यरिवल्लभा नृपवधूर्मित्राङ्गना रोगिणी
शिष्यब्राह्मणवल्लभेऽपि पतितोन्मत्ते महापापिनी ।
पिङ्गा प्रव्रजिता सती गुरुवधूर्वृद्धा तथा गर्भिणी
म्लेच्छा कृष्णतमा तथाऽपरिचितात्याज्या इमा योषितः॥३८॥

दूत्यः—

सैरन्ध्री प्रतिवेशिनी च रजकी धात्री च सम्बन्धिनी
मालाकारवधूः सखी च विधवा दासी नटी शिल्पिनी ।

बाला भिक्षुकगेहिनी पुरवधूर्गोपाङ्गना योगिनी
प्रेष्याः कामकलाप्रपञ्चचतुरैर्दूत्यः प्रसन्ना इमाः ॥ ३९ ॥

सुसाध्याङ्गनाः—

स्थूलक्षीणकठोरपण्ढबहुलस्त्रीक्षुग्विरूपानिश-
क्षीबक्रोधनकुब्जवामनजरच्छ्रीहीनमूर्खाङ्गनाः ।
निर्लज्जाः कुशलाः कलासु विधवा गोष्ठीपराश्चञ्चला
वन्ध्या प्रोषितभर्तृका युवतयः प्रोक्ताः सुसाध्याः स्त्रियः ॥४०॥

अनुरागिणीः—

दृष्ट्वा कामिनमुत्त्रपा नयनयोः प्रान्तं क्षिपन्ती मनाग्
गात्रं संवृणुते व्यनक्ति तरसा गाढं सखीं श्लिष्यति ।
धम्मिल्लं परिमोचयत्यविरलं धत्ते मृदुं भङ्गुरं
मध्यं हासमुपैति जोपमुदिता जाताऽनुरागाऽबला ॥४१॥

दुःसाध्याः—

सापत्रपा भूरिसुता सगर्वा भूयो दृढस्नेहवती च पत्यौ ।
आढ्याय सेर्ष्या सततं विरक्ता निर्लोभिनी पद्ममुखी न साध्या ॥४२॥

स्त्रीणां नाशकानि—

भवने जनकस्य सन्निवासः प्रतिवेशः सततं च पुंश्चलीनाम् ।
दयितस्य विदेशवार्द्धकेऽसत्पुरुषैः सङ्गतिरेव नाशकानि ॥४३॥

अल्पसाध्याः—

चिरविप्रयोगविधुरा नवज्वरा
कुसुमावसानरचिताभिषेकिका ।
अथ गर्भिणी प्रसवना कृतश्रमा
कथिता इमाः सुनयना रतेऽल्पिकाः ॥ ४४ ॥

रिरंसुः—

या चुम्बनालिङ्गनपाणिजातक्षतानि धत्तेऽभिमुखं च वोढुः ।
आलीषु सङ्कर्षति केशपाशं सा पङ्कजाक्षी कथिता रिरंसुः ॥४५॥

चिरेण प्रथमे शीघ्रं द्वितीये मदनोत्सवे।
लभन्ते तृप्तिमबलाः पुरुषार्चिपरिप्लुताः ॥ ४६ ॥

सामान्यधर्मः—

बाला यावत्षोडशाब्दं सुमालाश्रीखण्डाद्यैरुद्धतप्रीतिभावा।
सान्द्रध्वान्तेऽनङ्गलीलावितानमाकांक्षन्ती भूरिभावं नवीनम् ॥४७॥
यावत्त्रिंशत्तरुणी गदिता भूषणविवसने सप्रेमा।
महति ज्योतिषि रतिलीलामाकांक्षति कुञ्चितलज्जेयम् ॥४८॥
यावद्धारपयोधिवर्षमुदिता प्रौढा प्रसन्ना सदा
प्रेम्णा दीप्तितमिस्रयोर्विरचिताऽनङ्गोत्सवे प्रोद्धुरा।
ऊर्ध्वं स्याज्जरती न जातु मुदिता कन्दर्पलीलाऽलसा
सल्लापैरतिगौरवैश्च मुदिता जीवस्य संहारिणी ॥ ४९ ॥

प्रकृतयः—

शोभा शीतलमांसलभगरन्ध्रा मानिनी द्युतिस्निग्धा।
प्रोक्ता बलासप्रकृतिः सूक्ष्मवराङ्गी वरा कविभिः ॥ ५० ॥
क्रुद्धा क्षुण्णप्रसन्ना गौरी शोणाक्षिपाणिजा स्थिरधीः।
पीनश्रोणिकुचा स्त्री कोष्णवराङ्गी च पित्तला मध्या ॥५१॥
कृष्णाक्षिपाणिजाता बहुभुग् रूक्षप्रलापकेशाङ्गी।
गोजिह्वाखरयोनिर्धूसरवर्णाऽणुबालकाप्यधमा ॥ ५२ ॥

सत्त्वानि—

देवगन्धर्वयक्षाणां नरपैशाचभोगिनाम्।
काकवानरचक्रीवत्सत्त्वानि नरयोपिताम् ॥ ५३ ॥
देवसत्त्वा प्रसन्नास्या दक्षा च शुचिकर्मसु।
प्रियंवदा भूरिजया धन्या स्त्री बहुभाषिणी ॥ ५४ ॥
गन्धर्वसत्त्वा सङ्गीतलीलाबद्धमनाः सदा।
चारुवेशा सुगन्धिश्च शुभा शान्ता विशालिनी ॥ ५५ ॥

यक्षसत्त्वा मद्यमांसभक्षिणी सा गतत्रपा ।
पीनस्तनी गौरदेहा क्रोधिनी कामिनी सदा ॥ ५६ ॥
मनुष्यसत्त्वा विविधैर्व्रतैर्न परिखिद्यते ।
निर्मलातिथ्यविधिषु बद्धभावा निरन्तरम् ॥ ५७ ॥
पिशाचसत्त्वा खर्वातिभोज्या कुत्सितरूपिणी ।
विकृता मलिना कृष्णा तथा दुष्कर्मकारिणी ॥ ५८ ॥
नागसत्त्वेति कथिता भ्रांतिशीला निरन्तरम् ।
व्याकुला बहुनिद्रा च तथा सोच्छ्वासजृम्भिणी ॥ ५९ ॥
कालसत्त्वेति कथिता बहुलक्षुधयाऽन्विता ।
उद्वेगिनी निष्फलं या कुर्याल्लोचनचालनम् ॥ ६० ॥
कपिसत्त्वेति कथिता दन्तसंगरसंगता ।
अत्यन्तं या च चपला सतताभ्रांतलोचना ॥ ६१ ॥
खरसत्त्वेति कथिता सदा विप्रियभाषिणी ।
दुष्टस्वभावा स्नानादिशुचिकर्मवविर्जिता ॥ ६२ ॥

देशधर्मः—

मध्यदेशवनिता मनोजिनी प्रौढसंगरविनोदमोदिनी ।
पाणिजातरदनक्षतेष्वलं स्याद्विरक्तहृदया सुशिल्पिनी ॥६३॥
चिरकालरताभिलाषिणी नखराघातविरागभागपि ।
उपभोगकलासु लालसा कथिता मालवदेशजाङ्गना ॥६४॥
नखदन्तपदे विरागिणी परिरम्भाद्युपभोगलालसा ।
परिरम्भणचुम्बुरञ्जसा कथिताभीरवधूरतोत्सवे ॥ ६५ ॥
करजातनखक्षतैरलं द्रवती प्रौढसुखाभिलाषिणी ।
परिरम्भति कोमलाङ्गकैर्दयितं लाटभवा च कामिनी ॥६६॥
दक्षा रतौ गाढवराङ्गमध्या दृढाभिघातान् सहते ध्वजस्य ।
कृपाविहीना ललिता च तन्वी स्यादान्ध्रकर्णाटभवा पुरन्ध्री॥६७॥

द्रवति मदनतोयं चन्द्रसङ्गेन यासां
शमति भगजकण्डूर्गाढलिङ्गाभिघातैः ।
नखरदनपदे याः सन्ततं स्युर्विरक्ता
मसृणधवलहासाः कोशले जातयोषाः ॥ ६८ ॥

गौडवङ्गजनिता वनिता तु चुम्बनादिरसिका सुरतेषु ।
दन्तपाणिजपदेषु विरक्ता स्तोकमन्मथजलेति वदन्ति ॥६९॥

सस्मेरहासा रसिका जनेषु मनोजलीलाकुशला नितान्तम् ।
शिरीषमृद्व्यश्चतुराभिरामा रामा महाराष्ट्रभवा भवेयुः ॥७०॥

नखरदनपदेषु जाततोषा कृतविपरीतरतिः सुचारुवेषा ।
विरचितबहुरागवीतलज्जा सुरतविधाविषमुत्सुका च सज्जा ॥७१॥

मसृणमधुरहासा वीतलज्जा रतार्ता
मदनसदनमुच्चैर्बिभ्रती गाढसूक्ष्मम् ।
निपुणमतिरलं या मन्मथक्रीडितेषु
प्रणयसुभगचित्ता कीर्तिता गुर्जरी सा ॥ ७२ ॥

कष्टसाध्या रतोत्साहे तथा चञ्चललोचनाः ।
दुष्टाः पुरन्ध्रयः कोपिन्यो बाह्लिकावन्तिसिन्धुजाः ॥७३॥

माङ्गल्यसाध्या गलितकृपा मृद्व्यः ससाहसाः ।
श्रीखण्डशैलसौवीरसौराष्ट्रप्रभवाः स्त्रियः ॥ ७४ ॥

भोगे बाह्यकृते विरक्तहृदयाः संमर्दनाश्लेषणे
जातोल्लासभराः स्वभावकलुषाः प्रौढ्यश्च काम्बोजजाः ।
दुर्गन्धा लघुभोगतुष्टमनसो बाह्यैर्विहीना रतैः
काश्मीराद्रिभवाश्च गांध्ययवनम्लेच्छास्तथा योषितः ॥७५॥

चन्द्रकलाः—

मूर्धन्यक्ष्ण्यधरे कपोलगलके कक्षाकुचोरःस्थले
नाभिश्रोणिवराङ्गजानुषु तथा गुल्फे पदेऽङ्गुष्ठके ।

वामाङ्गे हरिणीदृशां मनसिजो मासस्य पक्षद्वये
शुक्लश्यामविभागतः सुविहरत्यूर्ध्वाध एवं क्रमात् ॥ ७६ ॥
वामे च दक्षिणे कृष्णशुक्लपक्षविभागतः ।
स्त्रीणां तिष्ठत्यनङ्गोऽङ्ग इति कोप्यवदद्बुधः ॥ ७७ ॥
वामपादाङ्गुष्ठगतः कामो यायाद्दिवा पुनः ।
द्वितीयचरणाङ्गुष्ठागतो दोषा स्फुरेच्च सः ॥ ७८ ॥
सीमान्ते नखदंशचुम्बनविधिं नेत्रे कपोलेऽधरे
दन्ताग्रं विदधीत किञ्च नखरं कक्षांसकण्ठेष्वपि ।
मन्दं वक्षसि ताडनं कुचयुगे श्रोणौ दृढं मर्दनं
नाभौ किञ्च चपेटकं स्मरगृहे मातङ्गलीलार्पितम् ॥ ७९ ॥
गुल्फजानुपदाङ्गुष्ठविषये घातनानि च ।
इत्थं चन्द्रकलास्पर्शाद् द्रावयेदब्जलोचनाम् ॥ ८० ॥

आद्यद्विकुञ्जरमुखोरगसंमितासु
संप्लावयेत्तिथिषु पङ्कजिनीं विदग्धः ।
षष्ठ्यष्टमीदशदिवाकरसंज्ञितासु
चित्राशिवाग्रहशिवेष्वथ शङ्खिनीं ताम् ॥ ८१ ॥

मुनिमनोजपितृष्वथ हस्तिनी रदनदन्तपदानि चुचूलिकाम् ।
दृढविमर्दनघातचपेटकप्रचुरचुम्बनचङ्क्रमितानि च ॥ ८२ ॥
तत्तत्स्थानेषु विदधज्ज्ञात्वा कामकलां नरः ।
संयोज्य चन्द्रकलया द्रावयेदम्बुजेक्षणाम् ॥ ८३ ॥

रतानि—

उच्चद्वयं नीचयुगं समं पञ्चविधं रतम् ।
समं तत्र प्रशस्यं स्यादुच्चद्वन्द्वं च मध्यमम् ॥ ८४ ॥
नीचं नीचरतं निन्द्यमिति वात्स्यायनोऽब्रवीत् ।
कृमयः पिशितोद्भूताश्चलाः सूक्ष्मा वराङ्गके ॥ ८५ ॥

जनयन्ति महाकण्डूमङ्गनानां सुदुःसहाम्।
न जातु हीनलिङ्गेन प्रयात्युपशमं हि सा ॥ ८६ ॥
नातस्तोपकरं स्त्रीणां नीचं नात्युच्चकं तथा।
कोमलत्वाद्वराङ्गस्य दीर्घं लिङ्गं न तोपकृत् ॥ ८७ ॥
दृढस्थूलेन लिङ्गेन समेन हरिणीदृशाम्।
शमयन्मूलकण्ड्वार्तिं वशीकुर्यादतूद्भवाम् ॥ ८८ ॥
चण्डमध्यममन्दाख्यं सुरतं त्रिविधं स्मृतम्।
तन्नामसंज्ञिता प्रोक्ता क्रिया च त्रिविधा बुधैः ॥ ८९ ॥
स्याच्चण्डवेगे रतिलोलता च कामाकुलत्वं बहुशो विसृष्टिः।
मन्दे तदा स्याद्विपरीतभावो मध्ये तु मध्यः कथितोऽभियोगः ॥९०॥
विसृष्टकामसलिला नारी नृत्यति रोदिति।
कैवल्यमेति मुकुलीकृतनयना(ति)नंदति ॥ ९१ ॥

योनिलिङ्गनिरूपणम्—

काप्यम्भोरुहकोमला गुणगणैः कीर्णा वलीव्यापृता
गोजिह्वाभखरापि योनिरुदिता सा पूर्वपूर्वोत्तमा।
लिङ्गं च द्विविधं खरं सरसिजप्रख्यं तयोरुत्तरं
श्रेष्ठं सा शिशिरा च कोष्णमितरद् व्याख्यातमेतद्बुधैः ॥९२॥
मदनसृणिसमाना नाडिका कापि मध्ये
स्रवति मदनवारि क्षेलिता या ध्वजेन।
क्षरयति मदपूर्णा सा सरोजेन तुल्यं
यदपि भवति मध्ये खण्डमित्याह कामः ॥९३॥
ऊर्ध्वं यद्भगरन्ध्रतो मदशिराचन्द्राशु भृङ्गाटक-
प्रख्यं तन्मदनातपत्रमिति च व्याख्यानमाचक्षते।
किंचैका निकटे मनोभवजलैः पूर्णास्ति या नाडिका
चान्द्रीं तां कथयन्ति भूरिसुखदां योषिन्मदद्राविणीम् ॥९४॥

यद्गर्भशय्यामदनान्तिकस्थं चिञ्चाप्रसूनप्रतिमं भगान्तः ।
तद्ब्रह्मसौख्यास्पदमाहुरार्याः स्पर्शात्परं द्रावकमङ्गनानाम् ॥९५॥

प्रीतिः—

निसर्गविषयाभ्यासजाता प्रीतिस्त्रिधोच्यते ।
केचिदाहुश्चतुर्धा यत् तन्न चक्षमिरे क्षमाः ॥ ९६ ॥
सहजाया निसर्गायामन्तर्भावात्तु तत्त्वतः ।
दम्पत्योः सहजा सान्द्रा प्रीतिर्नैसर्गिकी मता ॥ ९७ ॥
मालाचन्दनभोगाद्यैर्विषयैः परिवर्धिता ।
सोक्ता विषयजा प्रीतिराभ्यासिक्युच्यतेऽधुना ॥ ९८ ॥
केलिसङ्गीतदिविषत्पूजाखेटककर्मसु ।
अभ्यासयोगाद्वृद्धिं या गता साभ्यासिकी मता ॥ ९९ ॥

वाजीकरणम्—

सेवासु पङ्केरुहलोचनानां पुंसो न वृद्धिर्यदि रेतसः स्यात् ।
वृथा तदा मन्मथचेष्टितं स्यादतोऽत्र किंचित्कथये प्रकारम् ॥१॥
सिताश्रिते गोपयसि प्रभूते संभाव्य माषान् सुकृती दिनेषु ।
निशासु कृत्वा वटकान् घृतेन भुङ्क्ते स भुक्ते शतमङ्गनानाम् ॥२॥
गोधूमशालितन्दुलयवमापकणोद्भवेन चूर्णेन ।
भृष्टेनाज्ये सितया द्विगुणतया रेतसो वृद्धिः ॥ ३ ॥
तिलगोक्षुरयोश्चूर्णमजापयसि पाचितम् ।
शीतं प्रदोषे चूर्णेन भुक्तं स्याद्वीर्यवृद्धिकृत् ॥ ४ ॥
अभयां परिभाव्य भृङ्गराजस्वरसैः किञ्च विपाच्य तां चतुर्द्धा ।
अपसार्य च वीजमन्तरेऽस्याः कलयेच्छिन्नरुहोद्भवं सुसत्त्वम्॥५॥
अपि तन्तुभिरावृतामिमां हतसारामथ मध्यतः क्षिपेत् ।
उषसि प्रतिघस्रसेकिकां कलयेद्यः स जयेत्सुलोचनाः ॥६॥
सैरिभीपयसि पाच्य गृञ्जनं मध्यसाररहितं विरच्यते ।
सैरिभीघृतचये निवेशितं भक्षयेत्स वशयेत्पुराङ्गनाः ॥ ७ ॥

चूर्णं गोक्षुरसम्भूतं समया सितया सह।
प्रदोषे पयसा कर्षं भक्षयेद्यः स मन्मथः॥ ८॥
शतावरीनागरवानरीणां कणाश्वगन्धासितजीरकाणाम्।
चूर्णं समं षड्गुणितास्तथैलास्तिलास्तवक्षीरकगोक्षुरे च॥९॥
कूष्माण्डयुग्मं द्विगुणं ततोपि सर्वैः समांशैः कथिता सितापि।
सितासमानामथ मातुलानीं सम्मेलयेद्वैद्यकलाप्रवीणः॥१०॥
प्रातः समद्यात्पयसोऽनुपानान्नरस्त्रिटंकप्रमितं स एव।
यदङ्गणे चास्ति सुलोचनानां शतं पिनद्धीकुरुते रतेन॥११॥
गुडेऽजवानीं च नियोज्य सद्यस्त्रैहायने तद्गुटिकां विधाय।
तां मण्डलं सेवयतो नरस्य न रेतसो जातु दरिद्रभावः॥१२॥
धराशर्कराभूविदारान्मयोष्णौ नयेद् द्वन्द्वभागोन्मितां मौशलीं च।
पिकीवानरीरिङ्गिणीगोक्षुराणां समं मेलयेन्मूलपूर्वं मनुष्यः॥१३॥
क्षीरेऽजायाः पक्वमष्टावशेषे तुल्याभ्यां तच्छर्करामाक्षिकाभ्याम्।
आद्यं पश्चात्सर्पिषार्धोन्मितेन सेव्यं नित्यं कुक्कुटाण्डोन्मितञ्च॥१४॥
तस्याद्दताः पादतले लुठेयुः सौन्दर्यखर्वीकृतदेवनार्यः।
कन्दर्पशास्त्रश्रवणे प्रवीणा वीणाक्वणेषु प्रचुराः पुरन्ध्र्यः॥१५॥
मुशलीकोकिलगोक्षुरचूर्णं शशभृल्लोचनरासमितं चेत्।
पयसि प्रातरिदं यदि कोष्णं सितया टङ्कपट्प्रमितेन॥१६॥
त्रिगुणसप्तदिनं परिभक्षयन् शतवया अपि काङ्क्षति कामिनीम्।
किमिह चित्रमुदित्वरयौवनः शशिमुखीं शयनान्न जिहासति॥१७॥
पक्केष्टिकाविलपिमापशतावरीणां
शाखामृगप्रचुरगोक्षुरयोश्च चूर्णम्।
संसेवयेत् ससितगोपयसा प्रगे य-
स्तस्यापि किं न भविता बहुवीर्यवृद्धिः॥ १८॥
अर्जुनगुञ्जाचूर्णं पयसा यद्भक्षयेत्कामी।
मदनद्रावककेलीकाले बाले बालां जयत्येव॥ १९॥

श्वेतकरवीरमूलं पवगतं छायया निजया ।
नाक्रान्तमुद्धरेत्तन्निःपेष्य तथैव लेपयेल्लिङ्गम् ॥ ४५ ॥
मुञ्चति जातु न वीजं मनोजकेलीषु मानवः सोपि ।
स्पर्शेऽपि सुन्दरीणां द्रवभावं याति यः क्षणतः ॥ ४६ ॥
आमन्त्र्य सोमेऽपामार्गमूलं भौमे समुद्धृतम् ।
कन्याकर्तितसूत्रेण कटिस्थं वीर्यबन्धकृत् ॥ ४७ ॥
आकुञ्च्य मूलमपहृत्य समीरणं च मूर्ध्नि प्रवर्तितमना अपि दुर्गमेषु ।
सन्तापयन् दृढमनङ्गनिकेतनं च रेतो न मुञ्चति नरः सुरतोत्सवेषु॥४८॥

अथ योनिसङ्कोचनम् ।

न नागराणां भवति प्रवृत्तिर्नवप्रसूतासु सुलोचनासु ।
वृत्ते तदानन्दनिमित्तमत्र प्रसह्य सङ्कोचविधिं भगस्य ॥४९॥
तैलं भर्जितवृंताकसमुद्भूतं निकेतने ।
स्मरस्य लेपयेन्नार्या योनेः सङ्कोचहेतवे ॥ ५० ॥
सर्पिषा मर्दितस्येन्द्रगोपस्य परिमर्दनात् ।
जातापत्यापि शतधा कुमारीयति सुन्दरी ॥ ५१ ॥
किमत्र चित्रं यदि काण्डवल्लीरसेन सम्मर्दित इन्द्रगोपः ।
करोति पङ्केरुहलोचनानां सङ्कोचनं मन्मथमन्दिरस्य ॥५२॥
कर्चूरकर्पूरसमं मलं च पारावतानां भवनस्थितानाम् ।
सङ्गृह्य सम्मर्द्य वटीकृतं च सङ्कोचकृन्मन्मथमन्दिरस्य ॥५३॥
केतकीपांशुतैलेन लिप्तं योनिसरोरुहे ।
दृढेपि प्रविशेदत्र कथं लिङ्गं मधुव्रतः ॥ ५४ ॥
दलदब्जपत्रनयने खादिरमूलोद्भवैः क्वाथैः ।
संक्षालितोङ्गनाभिर्न चिराद्दाढत्वमेति भगः ॥ ५५ ॥
काशीशशैलसत्त्वे संमर्द्य विलेपिते योनौ ।
तन्वाते रुचिरदृशां नचिरात्सङ्कोचनं योनेः ॥ ५६ ॥

निर्यासो ह्यलवृक्षस्य सञ्चूर्ण्य भगमन्दिरे ।
लिप्तस्तनोति सङ्कोचमत्र किं परिचिन्त्यता ॥ ५७ ॥
पटोलीमातुलानीभवा योषितामन्तरङ्गे स्थिता याममात्रं यदा ।
पद्मपत्राक्षिचित्राय धत्ते तदा योनिसङ्कोचनं सन्मथक्रीडिते ॥

अथ लिङ्गदृढीकरणम् ।

न भजंति मुदं वराङ्गनाः श्लथसूक्ष्मध्वजतो रतोत्सवे ।
इति तत्परितोषहेतवे सुदृढस्थूलविधिर्वितन्यते ॥ ५९ ॥
वर्णैकतरेण भासुरतनोर्गोसर्पिपि प्लाविते,
मध्ये वासवगोपचूर्णकलितामन्धावकाक्तां दशाम् ।
प्रज्वाल्य क्षणतो गतेन दृढतां लिङ्गेन सङ्गे स्त्रियो
लोलाक्ष्याः प्रसभं भिनत्तु मदनावासं कलाकोविदः ॥ ६० ॥
शशांकचारणकणारसटङ्कणसङ्गतैः ।
माक्षिकैर्लेपतो लिङ्गं दम्भोलीयति तत्क्षणात् ॥ ६१ ॥
बीजानि काञ्चनतरो मेधाकरकुष्टकांडवल्लीभिः ।
गोक्षीरपचितान्यङ्गे लिप्तानि दार्ढ्यकारीणि ॥ ६२ ॥
आरण्यगोधानवकर्कटानां चिरत्नशालूरथरोरगाणाम् ।
तैलेन लिप्तो मदनाङ्कुशानां सुमंथितुं पद्मदृशां भवाब्धिम् ॥ ६३ ॥
हयारिवारणकेरणमहिषीनवनीतकैर्लिप्ते ।
मूशलफलसङ्काशं तथोनमदनाङ्कुशम् ॥ ६४ ॥
महिपीघृतमध्यस्थं मूशलीप्रभवं रजः ।
धान्यमध्यगतं धत्ते स्थूलतां लेपतो ध्वजे ॥ ६५ ॥
नवप्रसूतमहिपीघृतेन परिमर्दितम् ।
गुञ्जाचूर्णं तनोत्येवं मणौ मंथानतुल्यताम् ॥ ६६ ॥
तुरङ्गगंधातुरवारिकुंभीकणावचानागबलाबलानाम् ।
चूर्णं विलिप्तं नवनीतकेन तनोति लिङ्गं मुशलप्रमाणम् ॥ ६७ ॥

काशीशकुञ्जरबलालोध्रैस्तैलं तिलोद्भवं सिद्धम् ।
लेपेन लिङ्गयोनिस्तनकर्णविवर्धनं कथितम् ॥ ६८ ॥

अथ स्त्रीद्रावणम् ।

यावन्न भवति द्रावः पुंसः पूर्वं मृगीदृशाम् ।
नैव तावद् भोगफलमतो द्रावणमुच्यते ॥ ६९ ॥
चेन्नागवल्लीदलमध्यवर्ती दत्तो द्विगुञ्जाप्रमितः प्रियेण ।
रतेषु चामीकरभास्वराङ्गीं चामीकरारिर्नयति द्रवत्वम् ॥७०॥
नक्षत्रपातावसरे प्रयत्नाज्जंबीरमध्ये विनिवेशितं चेत् ।
रसं रते नेत्रपथे नयेयुर्द्रवन्ति सत्यं शरदिन्दुमुख्यः ॥७१॥
किमन्यैर्बहुभिर्वृक्षैर्भूमौ जयति केतकी ।
यत्पांसुर्योनिमध्यस्थो द्रावयत्यब्जलोचनाः ॥ ७२ ॥
क्षणं ताडयन् लोडयन् योनिमध्यं द्रुतं भावयंस्तद्बहिर्मन्दमन्दम् ।
क्षणं निश्चलं क्रीडिते मन्मथस्य द्रुतं कामिनी द्रावयत्येव शेफः ॥७३॥
उन्मत्तबीजचूर्णं यस्यां योनौ रतेषु निक्षिप्तम् ।
सा द्रवति पङ्कजाक्षी घृतभाण्डमिवाग्नियोगेन ॥ ७४ ॥

अथ वराङ्गोपस्कारः ।

तैले सिद्धार्थसंभूते मन्दाग्नौ यत्नतः पचेत् ।
जातिपुष्पाणि तल्लेपाद् योनिः सुरभितां व्रजेत् ॥ ७५ ॥

अथ रोमशातनम् ।

चित्रायनागचूर्णं सर्षपतैले निवेशितं यत्नात् ।
सप्ताहमातपस्थं हरति भगोद्भूतरोमाणि ॥ ७६ ॥
हरितालयुतं कंबुभस्म रंभाम्भसा मुहुः ।
सप्ताहं भावितं लेपे योनिलोमापहारकम् ॥ ७७ ॥
रंभाजलेन संभाव्य तालपालाशभस्मनी ।
हरतो लेपमात्रेण योनिलोमानि योषिताम् ॥ ७८ ॥

पुच्छेन कृष्णसर्पस्य त्रिसप्ताहं खरातपे ।
भावितं तिलजं तैलं लिप्तं लोमापहारकम् ॥ ७९ ॥

अथ नष्टपुष्पलब्धिः ।

हरितामरदारुतण्डुलान् परिपिष्टान्-शिशिरेण वारिणा ।
यदि नष्टरजाः सुलोचना काले पुष्पवती भवेद् ध्रुवम् ॥८०॥

अथ पुष्पाधिक्यनिवारणम् ।

वेणुपात्रसमं पिष्टं कपित्थं मधुना सह ।
सप्ताहलीढमाधिक्यं पुष्पस्य हरते ध्रुवम् ॥ ८१ ॥

अथ गर्भाधानविधिः ।

मुशलीदलानि पिष्ट्वा येन ऋतौ त्र्यहं निपीतानि ।
कुर्वन्ति पङ्कजदृशां गर्भं नास्त्यत्र संदेहः ॥ ८२ ॥
बीजानि बीजपूरोद्भवानि गोक्षीरपक्वपिष्टानि ।
त्रिदिनं ऋतौ निपीतान्यब्जदृशां गर्भकारीणि ॥ ८३ ॥
गोसर्पिषा निपीतेन पुन्नागेन ऋतौ त्र्यहम् ।
वंध्याऽपि लभते गर्भं किमन्यैर्बहुभाषितैः ॥ ८४ ॥
लक्ष्मणा नीलकण्ठीयशिखा च सनसागिका ।
गर्भं तनोति गोक्षीरे पीता चेदार्तवे त्र्यहम् ॥ ८५ ॥

अथ वंध्याकरणविधिः ।

जाते सुरते सैंधवगोलं योनौ रुचिरं तैलाभ्यक्तम् ।
दत्त्वा जातु न गर्भं धत्ते विधवा वेश्या नारी काचित् ॥८६॥
कालकाञ्चनमूलं तु पुष्यार्के प्राप्य या ऋतौ ।
तनोति मदनक्रीडां सापि नो गुर्विणी भवेत् ॥ ८७ ॥
तंडुलीयकमूलं च पिष्ट्वा तंडुलवारिणा ।
आर्तवे त्रिदिनं पीतं वंध्याकरणमुत्तमम् ॥ ८८ ॥

अथ केशोद्भवं रञ्जनम् ।

अश्नाति पलमात्रं या पक्षं त्रैहायनं गुडम् ।
यावदायुर्भवेद्वन्ध्या सा पतिं ध्रुवमीक्ष्यताम् ॥ ८९ ॥
गोक्षीरपिष्टगोक्षुरतिलपुष्पाणां विलेपनात्केशाः ।
सप्ताहाद्धनदीर्घा भवन्ति नास्त्यत्र संदेहः ॥ ९० ॥
सक्षौद्रगोक्षुराणीगुञ्जानां लेपतः कबरीः ।
चुम्बति नितंबबिंबं पञ्चदशां किं बहूक्तेन ॥ ९१ ॥
सौरभीशृङ्गमध्यस्थं षण्मासं कर्दमस्थितम् ।
असितं जीरकं धत्ते चिकुरेष्वतिकृष्णताम् ॥ ९२ ॥
आम्रप्रसूनं त्रिफलां त्वचमर्जुनशाखिनः ।
पिंडाकस्येतिकल्केन तिलतैलं प्रसाधितम् ॥ ९३ ॥
पतितोत्र मरालोपि ध्रुवं मेचकतां व्रजेत् ।
किमाश्चर्यं कचाः स्त्रीणां धिक्कुर्वन्ति महातमः ॥ ९४ ॥
नीलीसैंधवमिश्रेण कणासाजूफलेन च ।
सारनालेन चिकुरा लेपैर्यान्त्यलिकल्पताम् ॥ ९५ ॥

अथ श्वेतीकरणम् ।

भावितेभ्यः स्नुहीक्षीरैस्तिलेभ्यो यदपाकृतम् ।
तैलं तल्लेपनात्केशास्तुलयन्ति निशाकरम् ॥ ९६ ॥

अथ मुखकंटहरम् ।

वचासैंधवसिद्धार्थ लोध्राणां परिलेपनात् ।
क्षीयन्ते गंडपिटिकाः क्रमशो यौवनोद्भवाः ॥ ९७ ॥

अथ नीलीहरणम् ।

द्विजीरसिद्धार्थतिलैः सुपिष्टैः क्षीरे गवां लिंपति यो मुखाब्जम् ।
नीलीमपाकृत्य शशाङ्कबिंबमास्यं विधत्ते विनियोजयेत्सः ९८

अथ कुचसंस्कारः ।

हैयङ्गवीनं तिलतैलमिश्रं क्षीरं दिवानाथतरोः समांशम् ।
त्रयांनिशाद्वंद्वकणाबलानां सञ्चूर्णितानां च विधाय कल्कम् ॥
पक्त्वा सुधीर्मन्दकुपीटयोनौ नस्यप्रयोगेण सुलोचनानाम् ।
कठोरपीनौ विपुलौ सुवृत्तौ वरोरुहौ चारुतरौ करोतु ॥१००॥
बलातंदुलपाथोभिस्तैलमेतत्पिबेच्च या ।
न पतन्ति कुचौ तस्याः सुतपीतावपि ध्रुवम् ॥ १०१ ॥
सिद्धं यत्कटुतैलं दाडिमपञ्चाङ्गतैलेन ।
तन्मर्दनादजस्रं कुचपीनत्वं करोतु जलजाक्षी ॥ १०२ ॥
श्रीपर्णीरससंसिद्धं तिलतैलं यद्विलेपनात्तस्याः ।
पतितावपि पीनतरौ कुचौ कुरङ्गाक्षी रचयेत ॥ १०३ ॥

अथ वशीकरणादिः ।

सारमुद्धृत्य तंत्राणामिह संक्षेपतो मया ।
कामिनां प्रीतिजनकं वशीकरणमुच्यते ॥ १०४ ॥
सुवर्णबीजानि खरामसंख्यया तथेन्द्रपूर्वापि यवास्तु षोडश ।
मनःशिलादंतयुतानि पेषितान्यालोड्य शुक्रेण विलोड्य यत्नतः ॥
ललाटे तिलकं कृत्वा वशीकुर्यात्तिलोत्तमाम् ।
किमाश्चर्यं पदद्वंद्वे लुठंति मनुजाङ्गनाः ॥ १०६ ॥
स्वपुष्पैरुधिरैर्भाव्यरोचनां जलजेक्षणा ।
कृत्वा ललाटे तिलकं पतिं वशयति ध्रुवम् ॥ १०७ ॥
द्विरेफपक्षे सितकाकजङ्घामूलं सकुष्ठं तगरस्य पत्रम् ।
सञ्चूर्ण्य दत्तं शिरसि प्रसह्य परस्परं मोहनमेव यूनोः ॥ १०८॥
लवङ्गतिलसंयुक्तं क्षीरे मध्वाज्यमिश्रिते ।
पक्त्वा भक्षेत् स्त्रियै दत्तं सप्ताहाद्वशकारकम् ॥ १०९ ॥
समूलचूर्णभूधात्र्या वस्त्रे यत्नान्निबंधयेत् ।
ऋतौ त्र्यहं योनिमध्यगतं गव्ये घृते पचेत् ॥ ११० ॥

भक्ष्यप्रयोगादब्जाक्षी करोति वशतां पतिम् ।
सव्यपाणिगतेनाशु रत्यन्ते यः स्वरेतसः ॥ १११ ॥
लिम्पेदस्या वामपादं सा स्त्री तस्या वशीभवेत् ।
पुष्पार्के जलनलिनीशिलागोरोचनाञ्जनात् ।
परस्परेण भवति कामिनोर्मोहनं ध्रुवम् ॥ ११२ ॥
भोगावसाने कान्तस्य लिङ्गं वामांघ्रिणा च या ।
स्पृशेत्तस्या भवेद्दासः पतिर्नास्त्यत्र संशयः ॥ ११३ ॥
मधुसैंधवसंमिश्रं मलं पारावतोद्भवम् ।
लिप्त्वा लिङ्गे रमेन्नारीं वशयेन्नात्र संशयः ॥ ११४ ॥
पञ्चाशद्दाडिमीबीजं श्वेतसर्षपसंयुतम् ।
पिष्ट्वा मन्मथलीलासु योनिलेपेन दुर्भगा ॥ ११५ ॥
यावदायुः पदद्वन्द्वे पतिं लोडयते ध्रुवम् ॥ ११६ ॥

अथ मंत्राः ।

संबुध्यन्तां तु चामुण्डामुक्त्वा वेदादिपूर्विकाम् ।
मोचियद्वायुवरुणसंबुद्ध्यन्तां ततो वदेत् ॥ ११७ ॥
धातवायूनाम ततो द्वितीयांतां हविर्भुजाः ।
वल्लभा वेति विज्ञेयाश्चामुण्डाया महामनुः ॥ ११८ ॥
लक्षमेकं जपेन्मन्त्रमागमोक्तविधानतः ।
दशांशं जुहुयाद् ब्रह्मवृक्षजैः कुसुमैरपि ॥ ११९ ॥
पुष्पाणि सप्तधानेन मंत्रितानि यथाविधि ।
दत्तानि कुर्युर्वशगां कामिनीं नात्र संशयः ॥ १२० ॥
गेतोयचाटदेवस्तु वेदादिमतिपूर्विकाः ।
जप्त्वागमोक्तमार्गेण जुहुयाच्चदशांशतः ॥ १२१ ॥
अनेन सप्तवाराभिमंत्रितं कुसुमं फलम् ।
दत्तं स्त्रियै मोहनकृदिति प्रोक्तं कपर्दिना ॥ १२२ ॥

वामनेत्रार्धचंद्राभां धरणीस्थः पितामहः ।
जप्तो हुतो दशांशेन जगन्मोहयति ध्रुवम् ॥ १२३ ॥
कूपीटयोनिसंस्थः स्यादाकाशो वामनेत्रयुक् ।
चंद्रार्धशोभिचूडोपि जगन्नयति वश्यगम् ॥ १२४ ॥
कृतान्तो वामकर्णस्थो बिंदुनादकलान्वितः ।
रमणीसंमुखं जप्तः करोति वशगां ध्रुवम् ॥ १२५ ॥
तारनतिपूर्वकैश्चेद् ब्रह्मा नारायणेनाप्यः ।
भातं मालिनिठान्तद्वितयं सम्मांतिको मंत्रः ॥ १२६ ॥
जप्तो विधानतोऽयं पतिवश्ये योपितामिष्टः ।
विस्तारभीतिवशतो मंत्राः संक्षेपतः कथिताः ॥ १२७ ॥

अथाङ्गादिसुगंधिः ।

नलदचंदनपङ्कजकेसरं जलदबिल्वशशाङ्ककरञ्जनम् ।
अथ शिरीषमुनिच्छददाडिमीदलसुगंधियुगाङ्गमुदीरितम् ॥१२८॥
कर्चूरकर्पूरपयोदमांसीधात्रीनखैलाछहरीतकीनाम् ।
तोयेन यः स्नाति नरो विलासी स्यात्तस्य वासी सुचिरेण गंधा ॥
मुराकुष्टकिञ्जल्ककाश्मीरजानां नखैलालवङ्गैणनाभ्याम्बुदानाम् ।
वटिः क्षौद्रसर्पिःकृता संध्ययोर्यः समश्नाति तस्यास्यमीयात्सुगंधिम् ॥

अथ हेयस्थानादीनि ।

स्रोतस्वस्थपरालयापरग्रहारण्यश्मशानापणो
दुर्गब्राह्मणवह्निपूज्यनिकटे संक्रांतिदर्शेष्वपि ।
संध्याग्रीष्मशरज्ज्वरार्तदिवसश्रांतिव्रतेष्वप्यलं
विद्वान्नो विदधीत जातु मदनव्यापारलीलायितम् ॥१३१॥

अथोदितस्थानानि ।

अगरुचंदनधूपिनि मालतीकुसुममोदिनि चित्रसुशालिनि ।
रहसि दीपयुते निजमंदिरे रचयतात्सुरतं हरिणीदृशाम् ॥१३२॥

अथ बाह्यसंभोगः ।

परीरंभो रदनखक्षते चुम्बनमेव च ।
केशग्रह इति ख्याताः संभोगाः पञ्च बाह्यजाः ॥ १३३ ॥

अथ परिरंभाः ।

वृक्षाधिरूढवल्लीवेष्टितक्षीरनीरपरिविद्धम् ।
तिलतण्डुलाख्यभालिकजाघनजङ्घोपगूढसंज्ञानि ॥ १३४ ॥
आक्रम्य वोढुश्चरणाब्जमेकेनान्यांघ्रिणारुह्य तदीयजङ्घाम् ।
दोर्भ्यां समाश्लिष्य बलेन चुम्बेद् वृक्षाधिरूढं परिरंभणं स्यात् ॥१३५॥
सरलाङ्गमुपेत्य कामिनी तरसाश्लिष्य ससीत्कृतं मुहुः ।
परिचुम्बति नाथमञ्जसा कथितं वल्लिविवेष्टितं बुधैः ॥१३६॥
मिथो निजाङ्गैर्विशतो युवानौ स्वसम्मुखस्थावतिगाढरागौ ।
वदन्ति कन्दर्पकलाप्रवीणास्तत्क्षीरनीरं परिरंभणं स्यात् ॥१३७॥
चञ्चूभ्यां दयितं पश्चाद्विलिखत्यति सुन्दरी ।
गृहीत्वा सोऽपि तां यत्नात्तद्विद्धकमुदीरितम् ॥ १३८ ॥
परस्परं चेन्मिथुनं कुचाभ्यां गुह्यांशयोः श्लिष्यति गाढरागाद् ।
आहुः परीरंभणमेतदार्या रसैकभाजस्तिलतण्डुलाख्यम् ॥१३९॥
यदि ललाटविलोचननासिकावदनहृज्जघनांघ्रिषु सङ्घटेत् ।
रसवशान्मिथुनं परिरंभणं सखि ललाटभवं कथितं बुधैः ॥१४०॥
जघनस्थितस्य दयितस्य जघनमथ निजेन बाहुना-
श्लिष्य सपदि चुंबति चेदबलेति जाघनमुदीरितं बुधैः ॥१४१॥
जङ्घाद्वयेन जङ्घाद्वयीमुत्पीड्य दयितस्य श्लिष्यति ।
परिचुंबति चेदूरूढाख्यमितीरितं तु सुकविभिः ॥ १४२ ॥

अथ दन्तदानम् ।

अधरे रदनक्षतं नवं सुधियो गूढकसंज्ञकं विदुः ।
अधरोष्ठकपोलयोः पुनः क्षतमुच्छूनकसंज्ञमुच्यते ॥ १४३ ॥

अधरतिलकयोश्चेद्दन्तयुग्मेन कामी
लिखति मदनतन्त्रे बिन्दुमाहुः पुराणाः।
अथ सकलरदैः स्याद्बिन्दुमाला शरीरे
रचयति रतिकाले स्मारकं कोलचर्चम् ॥ १४४ ॥

प्रवालपूर्वो मणिरेव उक्तो दन्तोष्ठयोर्यश्चिरकालसंज्ञः।
गंडाभ्रकं भालकपोलवक्षोगलेषु यद्दन्तपदं निषिक्तम् ॥१४५॥

हिंकारसीत्कारनिषेधकाकुकोपाक्षिसङ्कोचनपाणिकंपाः।
भवन्ति ये पद्मदृशां रदाग्रे पादार्पणे ते सुखयन्ति चेतः ॥१४६॥

अथ नखदानम्।

प्रणयान्नखरं प्रयोजितं मृदृशामङ्गतटे प्रयोजितम्।
परितोषकरं मनोभुवो न तथा किञ्चिदुदीरितं बुधैः ॥१४७॥

कुचाधरकपोलेषु यत्कृतं नखरक्षतम्।
अव्यक्तरेखमुदितं रोमाञ्चच्छुरितं विदुः ॥ १४८ ॥

ग्रीवाऽऽस्यवक्षोजनखप्रहारमथार्धचंद्राख्यमुदीरयन्ति।
रेखात्रयं योनिकुचस्थले यत्तदुत्पलस्मारकमङ्गनानाम् ॥१४९॥

क्षतं चतुर्भिर्नखरैरधस्तादुपर्यथोऽङ्गुष्ठनखेन दत्तम्।
वक्षोरुहस्यैव मयूरपादं सर्वैः कुचाग्रे शशकप्लुतं स्यात् ॥१५०॥

अथ चुंबनानि।

प्रसह्य वदनांबुजं यदि युवा कुरङ्गीदृशः
सुचुंबति नरस्तथा मिलितचुम्बनं स्यात्तदा।
अथ स्फुरितमुच्यते पतिमुखे यदंभोजदृक्
नियोज्य वदनं निजं परिचुम्बति व्यायता ॥ १५१ ॥

एतद् घंटिकमाहुरंबुजमुखी नेत्रे निमील्यादरात्
कान्तस्यास्यगतां विधाय रसनां स्वीयं मुहुश्चुंबति।
साचिस्थोऽपि पतिः करेण चिबुकं धृत्वाऽधरं चेद्दसेत्
प्रेयस्याः किल तिर्यगाख्यमुदितं तच्चुम्बितं पण्डितैः ॥१५२॥

एतत्खण्डितसंज्ञितं शशिमुखी यत्नेन कान्ताऽधरं
धृत्वा लेढि दरोच्चबोधनमिति ख्यान्तं रसोद्बोधकम् ।
यद्भर्ताऽऽशु चिरागतोऽम्बुजदृशं संप्राप्तनिद्रां रहः
संचुम्बेदथ खण्डकं यदि पिबेत्स्वैरं तदीयाधरम् ॥ १५३ ॥
अधरं परिपाति चेन्मिथो मिथुनं श्लिष्य परस्परं रसात् ।
कथितं कविभिः पुरातनैरिदमत्युत्तममौत्तरोष्ठिकम् ॥ १५४ ॥
स्तनकंठाधरलोचनाधरे चिबुकालिककपोलमस्तके ।
विहितं परिचुम्बनं बुधैरथ नाभ्यूरुभगस्थलीषु च ॥१५५॥
कथयन्ति रसोद्रेकाल्लक्ष्म भागुरिकुंडिनः ।
प्रसिद्धं तच्च लाटेषु वाह्लीकोत्कलभूमिषु ॥ १५६ ॥

अथ केशपाशग्रहः ।

यदि कररुहेनांभोजाक्ष्याः कश्चन कलयन् ।
कृती वदनकमलं चुम्बेदुक्तो बुधैः समस्तकः ॥ १५७ ॥
एकहस्तेन चेत् केशान् सुतनोः कलयेत्कृती ।
तरंगरङ्गकाख्यःस्यात् केशपाशग्रहस्तदा ॥ १५८ ॥
मदनातुरेण दयितेन यदि जलजदृशः शिरोरुहैः ।
वेष्ट्य करमथ धृता यदि तत्कथयन्ति मन्मथभुजङ्गवेल्लिकम् ॥१५९॥
इति बाह्यभोगरचनाभिरङ्गनां रचयन्मनोजनतिवेगश्लथाम् ।
विदधीत मन्मथकलासु कोविदः सुरतानि भूरिरचनानि यत्नतः १६०

अथ बंधा उत्तानाः

चरणौ निधाय रमणांसयोर्निजौ कुरुते रतौ यदपजातमन्मथः ।
सुदती तदुक्तमिह तंत्रकोविदैः समपादसंज्ञकरणं सुखास्पदम् ॥१६१॥
तद् यस्य जानोर्विनिधाय भर्तुः कंठप्रदेशे चरणौ स्वकीयौ ।
उत्तानसुप्ता यदि पङ्कजाक्षी बंधस्तदा स्यात्किल नागराख्यः १६२
ऊर्ध्वं नयत्यब्जविलोचना चेत्पादद्वयं पाणियुगेन सुप्ता ।
धृतस्तनं संजनुते रतानि कान्तस्तदा लोमपदाख्य उक्तः ॥१६३॥

विधाय धरणीगतं निजकरद्वयं वल्लभः
प्रियाचरणयुग्मकान्तरगतो रमेत्सादरम्।
प्रसह्य परिचुंबयन् कुचकपोलवक्त्रांबुजं
स्मरस्य करणं भवेदिह वदन्ति तत्कोविदाः॥ १६४॥

जङ्घामेकामंसदेशे तथाऽन्यां धृत्वा भूमौ यत्र कांतो रमेत।
दोर्भ्यां गाढं श्लिष्य पङ्केरुहाक्षीं प्रोक्तो बन्धो वेणुदारः कवीन्द्रैः १६५

विनिधाय निजाङ्कयोः कृती कमलाक्षीचरणौ प्रयत्नतः।
धृतकंठतया रमेत चेद्रतिलीलाख्य उदीरितो हि सः॥१६६॥

अथ तीर्थं च।

हृदये विनिधाय पादमेकं शयनेऽन्यं सुदृशः कृती प्रयत्नात्।
कुरुते निभृतं मनोजलीला॰रतिबाणाख्य उदीरितः प्रयोगः॥१६७॥
निजजानुयुगाद्विनिर्गतौ स्वभुजौ चेद्विनिवेशयेन्निजांसयोः।
मिथुनं यदि मैथुनं करोत्ययमुक्तः किल बंधुरो बुधैः॥१६८॥
जान्वोर्जानू जङ्घयोश्चैव जङ्घे गुह्ये गुह्यं बाहुयुग्मे च बाहू।
वक्त्रे वक्त्रं योज्य पङ्केरुहाक्ष्या गच्छेत्कान्तः कौर्ममुक्तं कवींद्रैः १६९
क्रोडीकृतः पद्मसहोदराक्ष्याः संभ्रामयन् स्वीयनितम्बबिंबम्।
वितर्दितं यत्र भजेत्स्वकान्तस्तत्सम्मुखे मार्कटमुक्तमार्यैः॥१७०॥

अथोत्थितौ।

यद्यूर्ध्वमेकं चरणं रमण्याः कृत्वा पदं भूमिगतं च कान्तः।
रतिं विदध्यात्कथितं कवींद्रैस्त्रैविक्रमाख्यं करणं कवींद्रैः॥१७१॥
निजोरुयुग्मेन यदा पुरन्ध्री श्रोणिं समालंब्य रसेन भर्तुः।
कंठं भुजाभ्यां रचयेद्रतानि बन्धस्तदा स्याद्रतिकीर्तिनामा १७२

अथ व्यानतौ।

निवेश्य पाणी धरणीतले तु समुत्थितस्फारनितान्तबिंबम्।
कामत्यनङ्गाकुलिताङ्गना चेत्कामी तदा स्यात्पशुपूर्वबंधः॥१७३॥

कुचपाणिमुखैर्महीगतामबलामुच्चनितंबयुग्मकम् ।
यदि संक्रमति प्रियो धरागतपाणिः कथितं तदैभकम् ॥ १७४ ॥

अथ पुरुषायितम् ।

उत्तानास्यांभोजपत्रायताक्षी भर्तुर्लिङ्गं पाणिनाधाय योनौ ।
श्लिष्यन्ती चेच्चालयेत्स्वं नितंबं बन्धः प्रोक्तश्चारुनारीक्षितोऽयम्१७५

विजितोसि मनोजसङ्गरे कितव व्याकुलितोसि चापलम् ।
इतिहासमनोरमाक्षरं सुदती किञ्चिदुदीरयन्त्यपि ॥ १७६ ॥
सकचग्रहचुंबिताधरा श्रमसंमीलितलोचनोत्पला ।
विपरीतरतेऽतिविह्वला द्रवतीन्दीवरलोचना तदा ॥१७७॥
दरसंमीलितनयनां श्लथदेहलतामतीव निःसहतनुम् ।
समवेक्ष्य पङ्कजाक्षीं द्रुतामिति क्षिप्रमवगच्छेत् ॥ १७८ ॥
नवप्रसूतां ज्वरितां कुमारीमृतुयोगिनीम् ।
गर्भिणीं क्रिरणीं चापि विपरीते विवर्जयेत् ॥ १७९ ॥
इति संक्षेपितः केचिद् बंधाः प्रोक्ता मनोहराः ।
अश्लीलदुष्करास्त्यक्ता ग्रंथगौरवभीतितः ॥ १८० ॥

अथ नाडीसङ्गप्रकारः ।

ऊर्ध्वं भगान्तर्यदि पङ्कजाक्ष्याः सन्ताडयेद्गाढतमं ध्वजेन ।
स्याच्चन्द्रसङ्गोऽथ च वैपरीत्येऽसुखानि मंदः शतशस्तनोति ॥१८१॥
सृणौ ध्वजान्तःसुशिरे प्रविष्टे स्वस्वामितां वाञ्छतु मन्दधीकः ।
एवं ध्वजान्दोलनतो भगान्तः सृजन्ति तन्व्यः सुकृतैः सुखानि १८२
विसार्यलिङ्गे श्लथलिङ्गदंडं प्रवेशयन् यत्नत एव योनौ ।
उच्छोलिकां क्रीडति मन्दमन्दं स तिन्तिनीस्पर्शमुपैति सद्यः॥१८३॥

तिन्तिनीस्पर्शतो मुक्तिं वदत्येतन्मनोजनिः ।
सहस्रभगसंसर्गादिति लल्लादयोऽब्रुवन् ॥ १८४ ॥
नैतत्पुरा कीर्तिवर्मा जगाम निरयं ततः ।
अविरागान्न तस्यैते वास्तुकारणता ततः ॥ १८५ ॥

रमन्ति यस्मिन् सुधियो नितान्तं देवर्षिगंधर्वनरोरगाद्याः ।
तद्ब्रह्म तत्कर्तृ तदेव कर्म तदेव वेद्यं कवयो वदन्ति ॥१८६॥
यस्तितिनीस्पर्शमुपेत्य वेत्ति न संसृतेः कामपि हन्त चेष्टाम् ।
बुद्धिं तदा चेद् द्रवतीं विधाय स जातु मातुर्जठरं न याति ॥१८७॥
क्षुराग्ररेखासदृशं गृणन्ति सुशिरं बुधाः ।
तदेतदिति संप्राहुर्न किञ्चित् परतोऽस्त्यतः ॥ १८८ ॥

अथाङ्गम्

करताडनसीत्करे रतेः कथिते तेऽङ्गतया मनीषिभिः ।
इह भेदचतुष्टयं भवेत्प्रथमोक्तं सुविदग्धवन्दितम् ॥ १८९ ॥
फणाकारेण मूर्ध्नि स्याद् गुह्या पार्श्वे समेन च ।
पृष्ठे च मुनिना वक्षस्यपहस्तकपाणिना ॥ १९० ॥
भिन्नोष्ठाभ्यां भग्नदन्तविकृतं कामहारिकम् ।
विशेषभेदानलिखन्नात्र गौरवशङ्कया ॥ १९१ ॥
रसिका रसयन्त्विमां मुहुर्मधुपा मञ्जुमिवाम्रमञ्जरीम् ।
कलयन्तु न जातु दूषणं ग्रहतावेवमिवान्त्यजातयः ॥ १९२ ॥
बाणेन्द्रपृथ्वीधरशीतपाणिवर्षे तथा माधवशुक्लभूते ।
व्याख्यादिमां दीक्षितसामराजो रत्यादिकल्लोलवतीं रसेन ॥१९३॥

इति दीक्षितसामराजविरचिता रतिकल्लोलिनी समाप्ता ।

## अथ शृङ्गाररसप्रबन्धदीपिका(११)मञ्जरी

### मङ्गलाचरणम्

येनाभेदि हिमाचलेन तनयानाथस्य धैर्यं महद्
येनाकारि समस्तलोकविजयः पुष्पेषुभिस्सर्वदा ।
येनात्मीयवधूजनस्य सततं दासाः कृता मूर्तय-
स्तस्मै पान्थजनान्तकाय च नमो मत्स्यध्वजायान्वहम् ॥१॥
सपंकतलविन्यस्तसारं गोखुरसन्निभम् ।
अरोमकं मृगाक्षीणां वन्दे मदनमन्दिरम् ॥ २ ॥
ये संसारसमुद्रपारविधुरा निन्दन्ति योगीश्वरा
मत्काव्यं न तदर्थमुज्ज्वलतरं मूढाय नैतत्कृतम् ।
ये शृङ्गाररसामृतं हि सततं पीत्वा न तृप्तिं गतः
तेषामेव मयाधुना रचयते शृङ्गारपूर्णं महत् ॥ ३ ॥
काव्यानि सन्तु बहुशो ग्रथितानि पूर्वैः
शृङ्गारपूर्णसरसाखिलसम्मतानि ।
उद्धृत्य सारमधुनाहमुदीरयामि
काव्येषु तेषु सकलं सकलाविलासम् ॥ ४ ॥
मया विरचितं काव्यं दृष्ट्वा योगिजनस्य च ।
मानसं तु चलत्येव किमन्ये मनुजाधिपाः ॥ ५ ॥
नारीविहीनशयनं नवपंचबाण-
शास्त्रविहीनसुरतं रसहीनवाणी ।
लज्जागुणश्रियविहीनवराङ्गना चे-
देतानि पंडरतवत् सततं वृथा स्युः ॥ ६ ॥

### कामिनीभेदवर्णनम्

रूपयौवनसम्पन्ना गुणराजिविराजिना ।
कटाक्षविषयीभूता जना सा कामिनी मता ॥ ७ ॥

चंद्रानना चंपकपुष्पनासा घनस्तनश्रोणिविराजमाना ।
विशालकेशा गतरोमकक्षा गुह्याङ्गचेष्टा कुशला सती स्यात् ॥
शय्यावत् समसुरते तुरगारोहीव पुरुषभावे तु ।
वल्लीव बन्धसुरते या स्यात् सा नरवरैः पूज्या ॥ ९ ॥
सर्वाभरणसंयुक्ताः सर्वसद्गुणमण्डिताः ।
मुग्धा मध्या प्रगल्भा च कामिन्यस्त्रिविधाः स्मृताः ॥१०॥

मुग्धा

मुग्धा नववधूर्लब्धनवयौवनशालिनी ॥ ११ ॥
एकान्ते प्रियसंगृहीतवसना काले तनुं कम्पते
मूकीभावमुपागता न वदति प्रायो रुषा रोदिति ।
संभोगाय न याति तल्पमथवा संप्राप्ततल्पा परं
वस्त्रं निक्षिपति स्थिता सुवदना या सैव मुग्धा भवेत् ॥१२॥
हस्तविधूननपूर्वं मुखमपहृत्यैव मीलयति नेत्रे ।
भयकम्पिताङ्गयष्टिर्मुग्धा कान्ता करोतीयम् ॥ १३ ॥

मध्या

मध्याकिंचिद्विगलितलज्जा उद्यद्वदना यथा ॥ १४ ॥
लज्जानम्रमुखी प्रियेण गदिता किञ्चिद्वदत्यादराद्
गाढालिङ्गनवत्यपि प्रियतमे नात्यन्तहृष्टा नता ।
संभोगाय मनो नियच्छति नखस्थाने कृते ताडिते
जातस्नेहमुखी प्रियप्रणयिनी मध्या मता सा वधूः ॥ १५ ॥
किञ्चिद्विहसितवदना बहुविधसंभोगभक्तिसंपन्ना ।
रोदित्यन्यगतेऽस्मिन् सा मध्या कामिनी पूज्या ॥ १६ ॥
प्रगल्भा स्याद्गतव्रीडा संपन्नसुरता यथा ॥ १७ ॥
संभोगाय त्वरयति विभुं संक्वणत्काञ्चिदामा
पुंभावस्था रणितरशना कुर्वती कूजितानि ।

भूयो भूयः स्मितनतमुखी भूषणध्यानरम्या
सा प्रौढा स्यादखिलमनुजप्रेयसी पुष्कराक्षी ॥ १८ ॥
काश्मीरगन्धपरिलिप्तनिजाङ्गयष्टि-
स्त्रिस्थानशुद्धिसहिता धृतरत्नभूषा ।
संत्यज्य नाथमनुनीतवती हसन्ती
चित्राभिरामसुरते कुशला प्रगल्भा ॥ १९ ॥
वहुप्रिया तीव्ररतोत्सवप्रिया
स्वनायकं शासति ताडयत्यहो ।
गतत्रपा गानरता स्वचेष्टितै-
र्वशं नयन्ती सुजनान्विलोकनैः ॥ २० ॥
मुग्धा संभोगचातुर्यान्मध्या भवति सर्वतः ।
मध्या बन्धान्तसुरतैः प्रौढा भवति कालतः ॥ २१ ॥
दत्त्वा यथेष्टं धनभूषणानि विचित्रवस्त्राणि मृदूक्तिजालैः ।
तां सान्त्वयन् मन्मथशास्त्रवेदी मुग्धां रमेताधिकधैर्ययुक्तः ॥
विचित्रभूषणैः पूर्वकथाभिर्मन्मथोद्भवैः ।
वशं नयेत स्तोत्रैश्च मध्यां कान्तां मनोहराम् ॥ २३ ॥
हास्यैर्वचोभिर्घनमुष्टिपातैर्नखक्षतैर्दन्तनिपीडनैश्च ।
विश्वासवद्भिर्भणितैः प्रसिद्धैर्वशं नयेत प्रियवाक् प्रगल्भाम् ॥ २४ ॥

प्रासङ्गिके विटलक्षणम्

अविटलक्षणम् ।

प्रणयकुपितस्त्रीणां चित्तं पुनः परितोषयेद्
मनसिजमहाशास्त्रे योग्यः कथासु विशारदः ।
प्रवचनपटुर्गूढाकारो मनोघटनक्रिया-
निपुणवचनो नर्मस्वेर्ष्यं प्रयाजनसंमतः ॥ २५ ॥
सहास्यवचनोज्ज्वलत्सकलकामिनीसम्मतो
विटो विटजनप्रियो विगतभीस्त्रपावर्जितः ।

रतीरमणवेदवित् प्रणयरोपसर्वौपधः
स नर्मसचिवो भवेत् सकलकार्यगूढार्थवित् ॥ २६ ॥
त्यागी रूपविराजितः स्थिरतनुर्बन्धान्तसंभोगवित्
तन्त्रज्ञो रतिनायकोपनिपदो भव्याकृतिस्सत्यवाक् ।
नानादेशकथाविशेषकुशलो नानाकलास्थानवि-
न्मर्मज्ञोऽतिमृदुः क्रियासु स भवेद्धीमान् विटाधीश्वरः ॥२७॥
परिमलितनिजाङ्गः पञ्चबाणस्वरूपो
मणितवचनदक्षो मानिनीमानभेत्ता ।
नयविनयविशालो नर्मकामार्थवेदी
स भवति विटराजः कामिनीजातिभेत्ता ॥ २८ ॥
यो विटः कामिनीचित्ते रममाणस्सदा वसन् ।
मणिमन्त्रविदो यश्चेत् स विटः परिकीर्तितः ॥ २९ ॥
माता पिता चेत्पलिताङ्गयष्टिः वेश्याङ्गनानां भवनाङ्गणेषु ।
सा मृत्युरूपा हि महद्विटानां श्रीचन्दनाद्रेरुरगीव जाता ॥३०॥

प्रकारान्तेण कामिनीभेदवर्णनम्

स्वकीया परकीया च सामान्यवनिता तथा ।
पुनः स्त्रियस्त्रिधा ज्ञेयास्तासां लक्षणमुच्यते ॥ ३१ ॥
स्वकीया धर्मपत्नी स्यात् परकीयाः परस्त्रियः ।
वेश्या सामान्यवनिता तत्र स्वीया सती यथा ॥ ३२ ॥

सत्यं जल्पति नायकस्य पुरतः कामातुरा रोदिति
न प्रीतिं प्रकटीकरोति रतये वाञ्छत्यलं सन्ततम् ।
मातृभ्रातृजनाद्भयाकुलवती स्वेच्छानुकूलां रतिं
न प्राप्ता विरहातुराऽतिमलिना कान्ता स्वकीया भवेत् ॥ ३३ ॥
नखविहीनमताडनमण्डनं पुरुषभावबपट्कृतिवर्जितम् ।
वनितया निजया सुकृती कृतोमणितहीनरतोत्सवमाचरेत् ॥

यः पुण्यवान् सदाचारः कुलीनो विजितेंद्रियः ।
धर्माधर्मविवेकज्ञः स्वकान्तायां रमेत सः ॥ ३५ ॥
नानाविधौषधैर्मन्त्रैः परेण विवशीकृताः ।
अवस्थावशतः स्वीया परकीया भवत्यलम् ॥ ३६ ॥
दानेन भाषणशतैः प्रियभूषणैश्च
मंत्रौषधैः प्रतिदिनं प्रकृता स्वकीया ।
धात्रीसखीनिपुणसांत्वनभाषणैश्च
संबोधिता परजनेन पराङ्गना स्यात् ॥ ३७ ॥
संङ्केतितस्थलं प्राप्तो निर्भीकः परकामिनीम् ।
रमेत सुकृती धीमान् तामसावृतरात्रिषु ॥ ३८ ॥
निद्रां गते निजपतौ सकलाप्तवर्गे
ध्वान्ते घने जलशुचि स्थिरचित्तवृत्तिः ।
सङ्केतगप्रियमुपासितुमेव भक्त्या
गच्छत्यहो निशि सदा परकीयकान्ता ॥ ३९ ॥
श्रुत्वा प्रियस्य च गुणान् दृष्ट्वा तं परकामिनी ।
अलब्ध्वा विरहं प्राप्ताऽवस्थाभिः पीड्यते यथा ॥ ४० ॥

प्रासङ्गिकमवस्थावर्णनम्

श्रवणं चक्षुःप्रीतिः मनसः संगोऽथ संकल्पः ।
निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ॥ ४१ ॥
मोहो मूर्च्छा मृति रित्येकादशधा स्मृता अवस्थास्ताः ।
स्त्रीणामपि पुरुषाणां एतास्सन्दर्शनाज्जाताः ॥ ४२ ॥
अवस्थानां तु सर्वासां वक्ष्ये लक्षणमादितः ।
रूपवानेष सम्भोगकुशलो धनवान् शुचिः ।
इत्येकान्ते प्रियतमः सख्या सम्बोधितो यथा ॥ ४३ ॥
ग्रामेस्मिन्मदनाधिकोज्ज्वलतनुः वाग्मी वलङ्कृपणो
दाता मन्मथशास्त्रमंत्रविभवज्ञानी स्थिरैकः पुमान् ।

इत्येवं स्वसखीजनेन पुरतस्संबोधिता कामिनी
सम्पश्यामि कदेति सत्वरवती मार्गे सदा वर्तते ॥ ४४ ॥
पूर्वं मया हि गदितः सोयमित्याप्तकान्तया ।
या स्त्री सन्दर्शिता तस्याः चक्षुःप्रीतिर्भवेद्यथा ॥ ४५ ॥
संदर्शितः स्वाप्तसखीजनेन स याति यावन्निजदृष्टिमार्गम् ।
तावद्विभुस्तं श्रुतपूर्वरूपमपक्ष्मपातं हि ददर्श साक्षात् ॥ ४६ ॥
मनस्याधाय तं कान्तं विस्मृत्यान्यत्प्रयोजनम् ।
आत्मारामा भवेद्यत्र चित्तसंगस्ततो यथा ॥ ४७ ॥

ताद्रूपं वर्णयन्ती सदा सा चित्ते धृत्वा तं विभुं चान्यकार्यम् ।
हित्वा स्वात्मन्येव हर्षाभिरामा चिन्तायुक्ता जायते पद्मनेत्रा ॥ ४८ ॥

सर्वोपायैस्तमेवाहं यास्यामीति स्पृहायुता ।
सत्वरं वर्तते चित्ते सङ्कल्पः स भवेद्यथा ॥ ४९ ॥
भर्ता तिष्ठतु बान्धवाश्च पितरस्तिष्ठन्तु गेहे सदा
किं तैस्तस्य विटाधिपस्य सदनं गत्वा निशीथेपि वा ।
तेनानेकरतिं विधाय च पुनर्यास्यामि मद्गेहमि-
त्येवं मन्मथपीडिता सुवदना सङ्कल्पयन्ती शनैः ॥ ५० ॥

एवं चिन्ताकुलायाश्च निद्राच्छेदो भवेद्यथा—

एवं तदीयार्पितमानसाया मनोजबाणव्यथिताङ्गयष्ट्याः ।
दिवानिशन्तत्र विचारयन्त्या नायाति निद्रां नलिनायताक्ष्याः ॥ ५१ ॥

निद्राच्छेदवशाद्देहः कृशतां याति तद्यथा—

कृष्णचन्द्र इव सन्ततनिद्राच्छेदतः प्रतिदिनं निजदेह ।
दर्शनीयमतिसौष्ठवयुक्तं कार्श्यमाप कमलाभिनवाक्षी ॥ ५२ ॥

अङ्गे कार्श्यवशात्स्त्रीणां विषयद्वेषणं यथा—

स्रक्चन्दनेषु मणिमौक्तिकभूषणेषु
भोज्येषु वस्तुषु च निस्पृहतां प्रविष्टा ।

हा नाथ हा रमण इत्यभितो लपन्ती
सा मानसे तु विषयद्विषतामवाप ॥ ५३ ॥

अत्यन्तमोहवशतो लज्जात्यागो भवेद्यथा—

पश्यत्सु बन्धुषु समस्तजनेषु मार्गे
चाहूय वाञ्छति कथाङ्गदितुं तमेषा ।
पश्चात्तदीयगृहमण्डपमध्यमाप्तु-
मिच्छावती परिहृतत्रपतामवाप ॥ ५४ ॥

मोहात्तदीयसुगुणान् प्रत्यक्षं वदती यथा—

मज्जीवितेश्वर मम प्रियनाथ किं त्व-
मादाय मां न रमसे निजमन्दिरान्ते ।
इत्थं सखीपुरत एव सदा लपन्ती
मोहं गता मदनपंचशरानुविद्धा ॥ ५५ ॥

मोहाधिक्यादशक्त्या वा मूर्च्छाज्ञानक्षयो यथा—

अथालपन्ती निजनायकस्य गुणाननेकान् परितापयुक्ता ।
सखीपुरस्सन्ततबाष्पवर्षं पुनःपुनर्मोहमवाप मूर्च्छाम् ॥ ५६ ॥
अत्यन्तमोहयुक्तापि तदभावात्तनुं त्यजेत् ।
एवं भवन्ति पुन्नार्योरवस्था मोहसंभवाः ॥ ५७ ॥
दृढानुरागा सा तस्मिन् प्राप्तावस्था घने रसे ।
नीता देशान्तरं तेन वेश्या भवति सा वधूः ॥ ५८ ॥
करक्वणितकंकणा रणितमेखलाकिंकिणी
विशालजघनस्थला रणितरत्नभूषोज्ज्वला ।
दिगन्तनिहितेक्षणा प्रसवक्लृप्तवेणीधरा
गताधिकतरत्रपा गतभयेव वाराङ्गना ॥ ५९ ॥
सा वेश्या द्रविणप्रीत्या प्रियं नाद्रियते प्रिया ।

(१) प्रियान्नाट्यते इति पाठान्तरम् ।

आदत्ते द्रविणं तेषां तासु मूढा रमन्त्यहो ॥ ६० ॥

वाग्भिः प्रीतिकरैर्विलोकनशतैः संतर्जनैः सस्मित-
क्रोधैरौषधमन्त्रतन्त्रमणिभिः कृत्वा वशं नायकम्।
हृत्वा तस्य समस्तवस्तुनिचयं त्यक्त्वा तमन्यं नरं
सेवन्ते धनिनं मृषैव सततं वाराङ्गनानां रतिः ॥ ६१ ॥

अदत्त्वा द्रविणं ताभ्यः कथाभिर्मन्मथोद्भवैः।
मणितैर्बन्धसुरतैः कलाभिश्च वशं नयेत् ॥ ६२ ॥

मन्त्रैरौषधलेपनैः प्रियशतैर्नानाकलास्पर्शनैः
घातैर्मुष्टिभिरुज्ज्वलैर्नखपदैः सत्येतरैर्भाषणैः।
दास्यामीतिवचश्शतैश्च सुरतैः नानाविधैर्मोहितां
वारस्त्रीजनमण्डलं च वशतां धीमान्नयेतान्वहम् ॥ ६३ ॥

स्त्रीणां जातिमनिश्चित्य यो मूढो रतिमेष्यति।
अज्ञात्वैव कलास्थानं मृत्यः स्त्रीणां भवेन्नरः ॥ ६४ ॥

हेमन्ते सौधमध्ये परिमलललसिते शैशिरे सद्मनान्ते
ग्रीष्मे काले जलहितगृहे सद्भवन्ती गृहेषु।
वर्षाकाले शरत्सु प्रकटविधुकलापूर्णजालान्तराले
कल्याणीभिर्वधूभिः सममतिविमलो नायकस्संवसेत ॥ ६५ ॥

हस्तिन्यादिवधूनां तु कलानिर्णयमाचरेत्।
कलाज्ञानात् स्खलत्येव स्खलनान्मोहिनी भवेत् ॥ ६६ ॥

मोहितायां प्रियायां तु कामसिद्धिर्भवेद् ध्रुवम्।
तथा मन्मथसिद्धौ तु स्वयमेव स्त्रियो वशाः
गतासु स्त्रीषु वशतां कामशास्त्रसुखं भवेत् ॥ ६७ ॥

इति सर्वविद्यानवद्यसहजसारस्वतचन्द्रनामाङ्करामविद्वन्मणि-
कुमार-हरिहरनामाङ्कविरचितायां शृङ्गाररसप्रबन्ध[1]-
दीपिकायां प्रथमः परिच्छेदः।

---

(१) शृङ्गारदीपिकायामिति पाठान्तरम्।

## अथ द्वितीयः परिच्छेदः

वक्ष्ये जातिकलास्थानं प्रमाणं मन्मथालयम् ।
मन्मथोदकभावं च पुरुषाणां च लक्षणम् ॥ १ ॥
संस्कारतन्त्रं भावं च दृष्टसंभोगलक्षणम् ।
स्थानानि ताडनादीनां संभोगगृहलक्षणम् ॥ २ ॥
वाह्यसंभोगजं लक्ष्यवन्धानां लक्षणं तथा ।
अथेदानीं तु हस्तिन्यादिलक्षणं निरूप्यते ॥ ३ ॥

### हस्तिन्यादिलक्षणप्रकरणम्

हस्तिनी चित्रिणी चैव शंखिनी पद्मिनी तथा ।
स्त्रियश्चतुर्विधा ज्ञेयाः तासां लक्षणमुच्यते ॥ ४ ॥

हस्तिनी यथा—

रक्ताक्षी घनवक्त्रकेशसहिता रक्ताम्बरालङ्कृता
दीर्घाङ्घ्रिद्वितयांङ्गुलिस्तनुकरा पित्तप्रधानाङ्गिका ।
उष्णाहाररतातितीव्रसुरतानेकप्रिया श्यामला
गुह्यप्रान्तसुनीलकेशसहिता सा हस्तिनीति श्रुता ॥ ५ ॥
दीर्घेक्षणा तनुकला नीलवक्षास्तनुस्तनी ।
कटुतिक्तप्रिया क्रोधयुता वहुजनप्रिया ॥ ६ ॥
तीव्रसम्भोगलोला च रत्नाभरणभूषिता ।
रक्तानङ्गजला गुह्यप्रमाणं द्वादशाङ्गुलम् ॥ ७ ॥
एवंलक्षणसम्पन्ना हस्तिनी कामिनी भवेत् ।
तां भद्रजातिपुरुषः यसेतानङ्गवेदवित् ॥ ८ ॥

चित्रिणी यथा—

किञ्चित्कुञ्चितलोचनाऽतिचपला चित्राम्बरस्रग्दीर्घवान्
दीर्घानेकविचित्रकेशसहिता चित्राम्बरालङ्कृता ।

कुम्भोदारकुचा विचित्रसुरता दीर्घाधरालपप्रिया
त्रिस्थानस्थितनीलरोमसहिता सा चित्रिणीति श्रुता ॥ ९ ॥
चित्रान्नभुक् चित्रवस्त्रा संदर्शितनखक्षता।
हीनमध्यरता हीनवचना बहुसम्मता ॥ १० ॥
असत्यभाषिणी कक्षयुग्मदुर्गन्धसंयुता।
पीनोरुमन्मथगृहा शुभ्रोष्णमदनोदका ॥ ११ ॥
धनप्रिया मद्यरता प्रमाणं च दशांगुलम्।
दक्षस्तथाविधगुणस्तां रमेतान्वहं प्रियाम् ॥ १२ ॥

शङ्खिनी यथा—

पीनोष्ठीमम्बुजाक्षीमतिकठिनकुचां दीर्घकण्ठीं सुमध्यां
हीनाङ्गीं रक्तहस्तां सुरुचिरदशनां नीलवस्त्राभिरामाम्।
नीलोदारोरुभूपां सुविमलवसनां सर्वमान्यां कृशाङ्गीं
कान्तां तां शंखिनीमित्यतिविमलधियः संस्तुवन्त्युत्पलाङ्गीम्॥
हीनांगी दीर्घकण्ठी च स्मितवाक्यविशारदा।
मद्यमांसरता तन्वी घनस्नेहयुताल्पभुक् ॥ १४ ॥
धनप्रिया शुभरता दुष्टमन्मथमन्दिरा।
त्रिस्थानहीनकेशी च दुर्गन्धमदनोदका ॥ १५ ॥
अष्टाङ्गुलसद्गुह्या शंखिनी परिकीर्तिता।
एवंविधां कूचिमारस्तां रमेत तथाविधः ॥ १६ ॥

पद्मिनी यथा—

कुमुदविमलनेत्रा कुन्ददन्ताभिरामा
वलयिततनुमध्या वक्रदीर्घोरुकेशा।
अतिमृदुतरनासा रक्तहस्तांघ्रियुग्मा
घनकुचकुचनितंबा कामिनी पद्मिनी स्यात् ॥ १७ ॥

---

(१) उज्ज्वलाङ्गीमिति पाठा०। (२) विराजितेति पाठा०।
(३) पतिप्रियेति पाठा०। (४) पीनलोमेति पाठा०।

पद्मगन्धवदना सुकपोला मन्दगा तनुषडङ्गुलगुह्या ।
दानधर्मनिरता कृतपुण्या पद्मिनी विविधभाषणलोला ॥१८॥
शुभ्रवस्त्रप्रिया धीरा मुक्ताभरणभूषिता ।
श्वेतपुष्पप्रिया रम्या मधुरा हास्यसेविनी ॥ १९ ॥
वर्जिताऽसज्जनाभाषा सर्वसद्गुणमण्डिता ।
तान्तादृग्गुणसम्पन्नः पांचालः पद्मिनीं यभेत् ॥ २० ॥
हस्तिन्यादिगुणा यत्र वर्तन्ते संकरा भुवि ।
सा सङ्करवधूर्ज्ञेया सङ्करस्तां यभेन्नरः ॥ २१ ॥

## भद्रादिपुरुषलक्षणप्रकरणम्

भद्रो दत्तः कूचिमारः पांचालः पुरुषाः स्मृताः ।
हस्तिनीगुणसंपन्नो भद्रजातियुतः पुमान् ॥ २२ ॥
समसंभोगसिध्यर्थं हस्तिनी भद्रमाश्रयेत् ।
चित्रिणीगुणसंपन्नो दत्तजातियुतः पुमान् ॥ २३ ॥
समसंभोगसिध्यर्थं चित्रिणीं दत्त आश्रयेत् ।
शंखिनीगुणसंपन्नो कूचिमारनरः स्मृतः ॥ २४ ॥
सुखाभिरतये सोपि कूचिमारश्च तां यभेत् ।
पद्मिनीगुणसंपन्नः पांचालः परिकीर्तितः ॥ २५ ॥
तुल्यसंभोगसिध्यर्थं पांचालः पद्मिनीं यभेत् ॥ २६ ॥

## रतिभेदवर्णनम्

### अन्ये रतिभेदाः

बाह्यमाभ्यन्तरं चैव संभोगो द्विविधो मतः ।
ताडनैर्मुखभेदैश्च चुम्बनैश्च कचग्रहैः ॥ २७ ॥

---

(१) भद्रोऽसौ पुरुषः स्मृतः । स तथा समरत्यर्थं हस्तिन्यां तु रमेत्सदेति पाठान्तरम् ।

(२) सुखाभिरामरतये कूचिमारश्च तां यभेदिति पाठान्तरम् ।

आलिङ्गनैर्विग्रहैश्च मिथस्संल्लापनैरपि ।
प्रीतिरुत्पाद्यते यत्र सा बाह्यरतिरुच्यते ॥ २८ ॥
नानाविचित्रबन्धैश्च रतिराभ्यन्तरा भवेत् ।
आभ्यन्तरं त्रिधा ज्ञेयं रतं शास्त्रे तु मान्मथे ॥ २९ ॥
समं चार्धसमं चैव विषमं परिकीर्तितम् ।
समं सजातिसंयोगाद्रतमित्युच्यते बुधैः ॥ ३० ॥
अल्पांगेन तु यो गच्छेत् तदर्धरतमुच्यते ।
घनांगेन तु यो गच्छेत् सा रतिर्विषमा भवेत् ॥ ३१ ॥
बाह्या रतिर्द्विधा ज्ञेया दर्शनात् स्पर्शनात्तथा ।
अनिमेषालसद्दृष्ट्या दर्शनं दर्शनं स्मृतम् ॥ ३२ ॥
आलिंगनादिसंस्कारैः स्पर्शनं परिकीर्तितम् ।
दर्शनेन रतिं कृत्वा प्रिया स्पर्शनमाचरेत् ।
स्पर्शेन द्रवमुत्पाद्य शनैस्संभोगमाचरेत् ॥ ३३ ॥

नखरशिखरभेदैश्चुम्बनैर्मुष्टिघातै-
रतिघनतरहास्यैर्हासवाग्भिः कथाभिः ।
मणि[1]गणवरमन्त्रैर्भद्रजातिप्रसूतो
रमयति हि कलाभिर्हस्तिनीमादियामे ॥ ३४ ॥

घनकुचनखभेदैर्मुष्टिघातैश्च मर्दै-
रतिनिबिडतरैश्च प्रीतियुक्तैर्वचोभिः ।
अनृततरकथाभिस्तत्र यामे द्वितीये
सुगुणसहितदक्षश्चित्रिणीं तां रमेत ॥ ३५ ॥

अतिघनतरहास्यैर्मान्मथैर्द्रव्यदानै-
र्घननखपदहीनालिङ्गनैः खंडरागैः ।

(१) मणितमदनमन्त्रैरिति पाठान्तरम् ।
(२) श्चन्द्रनैश्चेति पाठान्तरम् ।

कुसुमितवनमध्ये कूचिमारस्तृतीये
तिमिरनिविडयामे शंखिनीं संयभेत ॥ ३६ ॥
स्मितसमुदितवाग्भिः पुण्यराजत्कथाभि-
श्चलिततनुकलानां स्पर्शनैश्चुम्बनैश्च ।
परिमिलितनिजाङ्गस्तत्र पांचालमर्त्यो
नयति रतिमनेकां पद्मिनीं तुर्ययामे ॥ ३७ ॥
अभिनवगिरिमध्ये हस्तिनीजातिकान्तां
किसलयति निकुञ्जे चित्रिणीं शंखिनीं च ।
कुसुमितवनमध्ये पद्मिनीं सौधभागे-
ष्यतुलितघनभोगः कामिनीं संयभेत ॥ ३८ ॥

दृष्टिभेदवर्णनप्रकरणम्

दृष्टिभेदं तथा वक्ष्ये कान्तानां भावसंभवम् ।
हास्ये निमेषदृष्टिस्स्यात् कुञ्चिता क्रोधसंयुता ॥ ३९ ॥
ऊर्ध्वगा तु विचारे स्यादर्धदृष्टिर्जुगुप्सिते ।
विषादे खंडदृष्टिः स्यात् सकटाक्षा प्रियप्रदा ।
अत्यन्तनीचा दुःखाय सप्तधा दृष्टिरुच्यते ॥ ४० ॥

अनिच्छाव्यापारवर्णनम्

परगेहेषु वसतिः खिलत्वं च रतौ तदा ।
पराङ्मुखत्वं शयने दीर्घरोषः प्रिये सदा ॥ ४१ ॥
दोषारोपोऽपराधश्च निद्राभिमुखता सदा ।
परेण भाषणं साक्षाद् रतिमध्येऽपसर्पणम् ॥ ४२ ॥
एते त्वनिच्छाव्यापारा भाषिताः पूर्वसूरिभिः ।

---

(१) संलभेतेति पाठान्तरम् ।
(२) रुचिरमुदितवाग्भिः पुण्यराजत्कलाभिरिति पाठान्तरम् ।
(३) मनल्पामिति पाठान्तरम् ।
(४) किसलयवनराजौ इति पाठान्तरम् ।

## कलास्थानवर्णनम्

कलास्थानानि वक्ष्यामः कलालक्षणसिद्धये ॥ ४३ ॥
अङ्गुष्ठे पदगुल्फजानुजघने नाभौ च वक्षःस्थले
कक्षे कण्ठकपोलदन्तवसने नेत्रालिके मूर्धनि।
शुक्लाशुक्लविभागतो मृगदृशामङ्गेष्वनङ्गस्थिति-
रूर्ध्वाधोभिमुखाः कलाः प्रतिदिनं स्थानेषु गच्छन्त्यलम्॥४४॥
संस्कारैर्दशभिर्मुष्टिताडनैः पेठनादिभिः।
या कला पीड्यते येन स कलावित्प्रकीर्तितः ॥ ४५ ॥
रजोदर्शनमारभ्य आपंचदशवासरम्।
शुक्लपक्ष इति ख्यातः कृष्णपक्षस्तथेतरः ॥ ४६ ॥
कृष्णान्तेन यदा रक्तं प्रसूनं च बहिर्गतम्।
तावत्स्वस्थानगा मूर्ध्नि कला तिष्ठति सर्वदा ॥ ४७ ॥
हस्तिन्याः कृष्णपक्षे तु वामभागावरोहिणी।
आरोहेद्दक्षिणाद्भागात् शुक्लपक्षे कला भवेत् ॥ ४८ ॥
आरोहेद्दक्षिणात्कृष्णे वामभागावरोहिणी।
शुक्ले कलेति विख्याता चित्रिण्याः पूर्वसूरिभिः ॥ ४९ ॥
आरोहेद्वामतः कृष्णे शंखिन्याः सर्वदा कला।
दक्षिणादवरोहे स्याच्छुक्ले[1] सर्वमनोहरा ॥ ५० ॥
आरोहे वामतः शुक्ले पद्मिन्याः प्रहिता कला।
दक्षिणादवरोहे स्यात् कृष्णे जनमनोहरा ॥ ५१ ॥
रोमसूर्धविमर्दनभागे चंचला प्रतिदिनं निखिलेषु।
वर्तते विगतजातिकहस्तिन्यादिसुन्दरिजनेषु सर्वदा ॥५२॥
ज्ञात्वा जातिं कलानां च स्थानानि विपर्याण्यपि।
रमेत सततं कान्तां कान्तः प्रेमभरालसः ॥ ५३ ॥

---

(१) शुक्लपक्षे मनोहरेति पाठान्तरम्।

## दशसंस्कारवर्णनम्

ताडनं[1] पेठनं[2] चैव दन्तक्षत[3]नखक्षते[4] ।
चुम्बनं[5] चूर्णं[6] चैव चालनं[7] च वषट्कृतिः[8] ॥ ५४ ॥
पञ्चाङ्गुलं[9] पीडनं[10] च संस्कारा दश भाषिताः ।
घट्टनं करपादाभ्यां ताडनं परिकीर्तितम् ॥ ५५ ॥
चुम्बनान्ते गलरवो यः स पेठनमुच्यते ।
दन्तक्षतं दन्तपीडा नखपीडा नखक्षतम् ॥ ५६ ॥
अधरद्वितयस्पर्शश्चुम्बनं परिकीर्तितम् ।
अन्योन्यमुखवायुभ्यां पूरणं चूपणं स्मृतम् ॥ ५७ ॥
नखैः केशेषु संस्पर्शश्चालनं परिकीर्तितम् ।
जिह्वां मूर्ध्नि तु सम्बध्य भेदनं तु वषट्कृतिः ॥ ५८ ॥
कुञ्चिताङ्गुलिघातः स्यात् पञ्चांगुलमुदीरितम् ।
अङ्गान्यङ्गेषु संमर्घ पीडनं पीडनं स्मृतम् ॥ ५९ ॥
कृत्वैतानि कलास्थाने कलां संपीडयेत्सुधीः ।
हस्तिन्यादिवधूनां तु संभोगद्वितये तथा ॥ ६० ॥
संस्कारदशकं कुर्यात् कलास्थानेषु सर्वशः ।
कलास्थानेषु सर्वेषु संस्कारेषु कृतेषु च ॥ ६१ ॥
कलासिद्धिर्भवेन्नूनं सङ्करायां अपि स्त्रियः ।

## पञ्चतन्त्रवर्णनम्

पेटितं[1] कुट्टितं[2] क्रीतं[3] नागितं[4] घटितं[5] तथा ॥ ६२ ॥
पञ्चतन्त्राणि चैतानि भाषितानि रतिस्मृतौ ।
अङ्गुल्या नाभिमध्ये तु चालनं पेटितं स्मृतम् ॥ ६३ ॥
मध्यमानामिकाङ्गुल्या मन्मथालयचालनम् ।
तत्कुट्टितमिति प्रोक्तं कलावद्भिर्मनीषिभिः ॥ ६४ ॥
चिकुराकर्षणं नाम नागितं परिकीर्तितम् ।
नखैः पादतले घर्षः क्रीतं तु परिकीर्तितम् ॥ ६५ ॥

यदाङ्गुष्ठेन तर्जन्या चिबुकं परिपीड्यते ।
घट्टितं तत्परिख्यातं[1] यथास्थानेषु कारयेत् ॥ ६६ ॥

संस्कारतन्त्रस्थानवर्णनम्

संस्कारतन्त्रस्थानानि प्रत्येकं लक्ष्मतो ब्रुवे ।
ऊरू हृदयपृष्ठं तु ताडनानां स्थलं स्मृतम् ॥ ६७ ॥
श्रुती च गलभागौ च पेषणस्थानमुच्यते ।
तावेव मणितस्थाने वारस्त्रीणां यथाक्रमम्[2] ॥ ६८ ॥

कक्षोदरस्तनयुगं च कपोलभागौ
कण्ठं च दन्तपरिपीडनसत्पदानि ।
एवं कलासु कुशलैस्तरुणीजनानां
दन्तक्षतानि रुचिराणि रतौ तु कुर्यात् ॥ ६९ ॥

ऊरौ नितम्बजघनस्थलपृष्ठभागे
वक्षोजकक्षगलहस्ततदीयमूले ।
गुल्फे कपोलयुगले करजक्षतानि
कुर्यान्मनोजयुधि वारवधूजनानाम् ॥ ७० ॥

फालस्थलेऽधरकपोलविलोचनाब्जे
कण्ठद्वये कुचयुगाग्रकराग्रमूले ।
नाभौ मनोजसदनोपरिभागगुल्फे
कुर्यात्कृती विविधचुम्बनमाशु तस्याम्[3] ॥ ७१ ॥

मुखे तु चूषणं कुर्याच्चालनं केशपाशयोः ।
कण्ठद्वये श्रुतिपुटे नासाग्रे कक्षभागयोः ।
मुखे शीर्षे गुल्फभागे कुर्याद्धीमान् वषट्कृतिम् ॥ ७२ ॥

---

(१) तदिति ख्यातमिति पाठान्तरम् ।
(२) सर्वस्थानं यथाकृतमिति पाठान्तरम् ।
(३) मासमन्तादिति पाठान्तरम् ।

कालशीर्षभुजसत्कुचमध्ये जानुपादतलपृष्ठनितम्बे ।
कुञ्चिताङ्गुलिकरेण च तत्र पञ्चसंख्यमितमङ्गुलिकं स्यात्॥७३॥
कण्ठांसपादोरुतले गुल्फे वक्षोरुहद्वये ।
पीडयेत्सुकुमारेण करेण सुरतान्तरे ॥ ७४ ॥
एवं विधाय वनमन्मथशास्त्रवेदी
नानाविचित्रसुरतैस्तरुणीसमूहान् ।
सन्तर्प्य ताभिरतिरम्यकलाविशेषै-
र्यो वर्तते स खलु नूतनपञ्चबाणः ॥ ७५ ॥
बालां पुष्पफलैर्विनोदवचनैः सद्यौवनालंकृतां
कान्तां रत्नविभूषणैः सुरुचिरैर्वस्त्रैः प्रगल्भां स्त्रियम् ।
सम्भोगैर्विविधैः कलाभिरनिशं वाग्भिः प्रियैस्सत्कृतै-
र्नीतिज्ञो हि वशं नयेत सुकृती स्वेच्छानुकूलां स्त्रियम् ॥७६॥

## नायकवर्णनम्

अनुकूलश्शठो धृष्टो नायकस्त्रिविधः स्मृतः ॥ ७७ ॥
सान्त्वनैर्भाषणैश्चैव स्त्रीकृतालंकृतैस्सदा ।
वशं नयति यः कान्तां सोऽनुकूलः प्रकीर्तितः ॥ ७८ ॥
ताडनैः करपादाभ्यां सदन्तक्षतचुम्बनैः ।
शनैर्नयेत वशतां यः कान्तां स शठः स्मृतः ॥ ७९ ॥
अनेकमणितैर्बन्धविशेषैश्च कलाग्रहैः ।
वशं नयेत यः कान्तां स धृष्टः परिकीर्तितः ॥ ८० ॥
नानाधूपयुते वितानसहिते कर्पूरदीपोज्ज्वले
रत्नस्तम्भविराजितेऽतिविमले श्रीगन्धलेपान्विते ।
सौधे पल्लवपुष्पकल्पशयने कान्तः प्रियाभिस्समं
सम्भोगैर्विविधैर्नयेत दिवसान् कन्दर्पवेदार्थवित् ॥ ८१ ॥
मूढास्त्रियस्सत्यविहीनवाचो बहुप्रिया दातरि दत्तचित्ताः ।

त्रपाविहीनाः परुषं वदन्त्यो दानैः स्त्रियः साधुवशं नयेत॥८२॥
अङ्गुष्ठे या कला तिष्ठेत् तां कलां हस्तपीडनैः ।
नखक्षतैश्च संपीड्य रमेत प्रियकामिनीम् ॥ ८३ ॥
पद्भ्यां तले तु करजैः कलामुद्धृष्य पीडयेत् ।
चुम्बनैश्चर्पणैश्चैव नखैः पञ्चाङ्गुलैरपि ॥ ८४ ॥
ताडनैर्जानुभागस्थां कलां संपीडयेत्सुधीः ।
चुम्बनैरङ्गुलिन्यासैः पीडनैर्नखलेखनैः ॥ ८५ ॥
जघने या कला तिष्ठेत् तामेभिः परिपीडयेत् ।
पीडितैश्च नखैर्घातैर्मण्डूकैर्नाभिमध्यमे ॥ ८६ ॥
या कला विद्यतेऽभीष्टा तां कलां परिपीडयेत् ।
चुंबनैस्सवपट्कारैः सनखैः परिपीडनैः ॥ ८७ ॥
पञ्चाङ्गुलैर्वपट्कारैः कलां वक्षसि पीडयेत् ।
चुम्बनैस्सवपट्कारैर्नखैश्च करपीडनैः ॥ ८८ ॥
तदग्रलेखनैः कान्तः पीडयेत् कुचयोः कलाम् ।
जघनैर्नखरैः पेटैश्चुम्बनैस्सवपट्कृतैः ॥ ८९ ॥
चालनैर्मणितैः कक्षे कलां संपीडयेच्छनैः ।
नखैश्च पेटनैश्चैव पीडयेत्करयोः कलाम् ॥ ९० ॥
नखैर्दन्तक्षतैः पेपैश्चुम्बनैः सवपट्कृतैः ।

---

(१) तां हस्तपरिपीडनैरिति पाठान्तरम् ।
(२) परकामिनीमिति पाठान्तरम् ।
(३) पेपितैश्च नखैर्वाक्यैर्मण्डूकैर्नाभिमध्यमे इति पाठान्तरम् ।
(४) पेपणैरिति पाठान्तरम् ।
(५) मेतैरिति पाठान्तरम् ।
(६) चुम्बनैर्मुष्टिघातैश्च पेपणैर्नखरैरपीति पाठान्तरम् ।
(७) लेहनैर्नखरैः पेपैरिति पाठान्तरम् ।
(८) नखैश्च पीडनैश्चैव पीडयेत्करयोः कलामिति पाठान्तरम् ।

लेहनैः[1] करयुग्मस्थां कलामेभिः प्रपीडयेत् ॥ ९१ ॥
घट्टितैश्चुम्बनैः पेटैः[2] वषट्कारैर्नखैरपि ।
दीनैर्मनोहरैर्वाक्यैः कपोले पीडयेत्कलाम् ॥ ९२ ॥
सपीडनैश्चूषणैश्च सदन्तक्षतचुम्बनैः ।
मणितैरधरे या तु तां कलां पीडयेद् बुधः[3] ॥ ९३ ॥
कलां नेत्रयुगे गाढचुम्बनैः परिपीडयेत् ।
पञ्चाङ्गुलैश्चालनैश्च पीडयेदलिकीं[4] कलाम् ।
शब्दैः पञ्चाङ्गुलैश्चापि कलां मूर्ध्नि प्रपीडयेत् ॥ ९४ ॥

एवं कृत्वा पञ्चबाणस्य गेहं
सान्द्रं कृत्वा रम्यबन्धैर्विचित्रैः ।
नित्यं पुष्पोदारशय्यान्तराले
स्त्रीभिः सौख्यं सन्ततं याति धीमान् ॥ ९५ ॥

इति सर्वविद्यानवद्यसहजसारस्वतचन्द्रनामाङ्करामविद्वन्मणि-
कुमारहरिहरनामाङ्कविरचितायां शृङ्गाररसप्रबन्ध-
दीपिकायां द्वितीयः परिच्छेदः ॥ २ ॥

---

( १ ) लेखनैरिति पाठान्तरम् ।
( २ ) पेपैरिति पाठान्तरम् ।
( ३ ) सुधीरिति पाठान्तरम् ।
( ४ ) दलिके इति पाठान्तरम् ।
( ५ ) सशब्दपञ्चांगुलैरिति पाठान्तरम् ।

## अथ तृतीयः परिच्छेदः

कुचकचग्रहणैः करपीडनैः समणितैरतिदीर्घसुभाषणैः ।
ललितसन्ततबन्धरतोत्सवैर्वनितया रमयन्ति विलासिनः ॥ १ ॥

### अथ द्रावकलक्षणम्

किञ्चित्कदुष्णं मदनोदकस्य प्रिये प्रियं वक्ष्यति वामभागे ।
सुशीतलं विप्रियकृन्महोष्णमन्यत्प्रियं प्रीतिकरं वधूनाम् ॥२॥
बहुद्रवः प्रीतिकरः किञ्चिद्विप्रियसंयुतः[1] ।
पुनःपुनर्द्रावकं च परप्रीतिं प्रवक्ष्यति ॥ ३ ॥
द्रवस्य रक्तता प्रीता शुक्लता स्वजने प्रिया ।
विचित्रितातिप्रिया स्यादेवं द्रावकलक्षणम् ॥ ४ ॥
सकूटा स्नेहयुक्तोपि विप्रिया कामिनी यथा ॥ ५ ॥
न वदति[2] पुरो नाथस्यापि स्वलोचनचेष्टितै-
र्निकटमिलितान्मर्त्यान् दृष्ट्वा हसत्यनुशासति ।
गृहमुपगते नाथेऽप्यन्यं गृहं प्रति गच्छति
प्रणयकुपिता [3]रात्रिष्वेवं करोति च विप्रिया ॥ ६ ॥
प्रियैव विनयासक्ता परप्रीतिरता [4]यथा ॥ ७ ॥
बहिर्दृष्टिं दत्वा स्वपिति पुरतस्तं मृगयते
रतावन्यच्चित्तं गमयति कथञ्चिद् द्रवति च ।
अनिच्छासातत्यान्मणितवचनं नैव वदति
प्रिये शय्यान्तस्थे पररतियुतैवाकृतवती ॥ ८ ॥
सुनिश्चलमनःप्रीतिः प्रिये कान्ता भवेद्यथा ॥ ९ ॥

---

(१) सम्भवमिति पाठान्तरम् ।
(२) नटति पुरतो नाथस्यापीति पाठान्तरम् ।
(३) रात्रिक्षेपमिति पाठान्तरम् ।
(४) प्रियमेव विनासक्ता परप्रीतियुता यथेति पाठान्तरम् ।

प्रिये याते गेहं हसितवदना रम्यविनया
तदाकारे दृष्टिं विनिहितवती जातपुलका ।
रतौ नानाबन्धैरधिकमणितैस्तस्य हृदयं
सहर्षं कृत्वैवं भवति विवशा मन्मथसुखैः ॥ १० ॥
किञ्चिन्निमीलितविलोचनदृष्टिभेदा
दीनाभिरामगलितप्रियरम्यवाचा ।
हा नाथ हा रमण इत्यभितो लपन्ती
तद्वक्षसि प्रियतमा शयनं प्रविष्टा ॥ ११ ॥

अथ बन्धनिरूपणम्

सजातिसंयोगवशाद्रतयश्च समाः स्मृताः ।
यदा विजातिसंयोगो विषमा रतिरुच्यते ॥ १२ ॥
तदाल्पदीर्घलिङ्गानां समसंभोगसिद्धये ।
बन्धांश्चतुरशीतिश्च वक्ष्ये संख्याविशेषतः[1] ॥ १३ ॥
सम्भोगे तु समे कान्ता मरणान्तं वशं ययुः ।
समश्चोपरतिश्चैव भ्रमणं चक्रबन्धनम् ॥ १४ ॥
लंबकं चैकपादं च धेनुकं मार्कटं तथा ।
मार्जारं श्वानकं चैव गार्दभं हास्तिकं तथा ॥ १५ ॥
मार्गं वृषभबन्धं च स्वस्तिकं पद्ममेव च ।
कुक्कुटं हंसबन्धं च पक्षीबन्धं च सार्पकम् ॥ १६ ॥
कौर्मं मात्स्यपुटं चैव ज्वालाबन्धं कलागृहम् ।
देवबन्धन्तु विजयं शङ्खं मौसलमेव च ॥ १७ ॥
[2]डोलितं मुकुटं चैव पल्लवं नागकेसरम् ।
संयुतं वियुतं चैव कर्कटं वृश्चिकं तथा ॥ १८ ॥

---

(१) वक्ष्ये बन्धांश्चतुरशीतिसंख्यान्युक्तिविशेषत इति पाठान्तरम् ।
(२) दोलितमिति पाठान्तरम् ।

चक्रितोद्धटितं चैव मायूरं गारुडं तथा ।
कलावतरणं चैव विप्लुतं[1] मुरजं तथा ॥ १९ ॥
कन्दुकं चैकरूपं च तोलितं वल्लितं[2] तथा ।
ध्वजं पारावतश्चैव विक्रमं विरजं तथा ॥ २० ॥
कुण्डली वेणुबन्धं च तिर्यग्बन्धमधोमुखम् ।
सर्वतोमुखबन्धं च कर्णाभरणबन्धनम् ॥ २१ ॥
कपोलचुंबनं चैव तथैवाङ्गनिपीडनम् ।
ध्वजबन्धं विचित्रं च त्रिवल्लीबन्धमेव च ॥ २२ ॥
मन्मथप्रियबन्धं च लीनमुड्डीनमेव च ।
माण्डूकं नीचबन्धं च रंभाप्रियमतः परम् ॥ २३ ॥
चन्द्राभरणबन्धं च शङ्करप्रियमेव च ।
तुरगारोहणं चैव [3]वीरदर्पविनाशनम् ॥ २४ ॥
विटाधिपतिबन्धं च तथा सर्वाङ्गमर्दकम् ।
गौरीप्रियं च कांदर्पं हास्यमद्भुतमेव च ॥ २५ ॥
नीवीनिवारणं चैव गुह्यचुम्बनमेव च ।
भयानकं च बीभत्सं बन्धराजमतः परम् ॥ २६ ॥
एतानि चतुरशीतिबन्धानि मदनस्मृतौ ॥ २७ ॥

अथ सुरत-प्रशसा

ग्रथितान्यथ कान्तानां समसम्भोगसिद्धये ।
वक्ष्येऽहं बन्धसंपूर्णं सुरतं सुमनोरथम् ॥ २८ ॥
यथा पुंसां लिङ्गं कमलवदनामन्मथगृहे
प्रसन्नाग्रं मन्दं विशति यदि पीडाविरहितम् ।

(१) विद्रुतमिति पाठान्तरम् ।
(२) वल्गितमिति पाठान्तरम् ।
(३) धीरेति पाठान्तरम् ।

ततस्तस्य प्रान्ते स्थितविवरयुग्माच्च शनकैः
स्रवद्रेतः सान्द्रं मदनसदनं तत्र कुरुते ॥ २९ ॥
आरोहणावरोहाभ्यां कामिन्याः कुसुमस्य च ।
विषमः समतां याति समो विषमतां व्रजेत् ॥ ३० ॥
बन्धेन येन रमणी विनिमीलिताक्षी
स्रस्ताङ्कार्धगदिता न्वनुमेयरावा ।
विस्मृत्य देहमभितो सुखपीडतापि ।
दीर्घद्रवा[1] भवति तेन रतेन भोग्या ॥ ३१ ॥
स्विद्यत्कपोलयुगला च सती रुदन्ती
सोष्णद्रवा विचलितोरुवलालसाङ्गी ।
या येन बन्धसुरतेन भवेत्सुभोग्या
तादृग्विधेन सुरते न च सा हि गम्या ॥ ३२ ॥
हसितवदनपद्मा किञ्चिदुन्मीलिताक्षी
विशकलितनिजोरुः कोष्णसान्तद्रवा स्यात् ।
चकितहरिणनेत्रा या मनोजातयुद्धे
विविधमदनतन्त्रस्तां यभेतानुकूलाम् ॥ ३३ ॥

इदानीं बन्धलक्षणानि निरूप्यते—

सर्वलोकजनेष्वेव साधारणरतिर्भवेत् ।
सा रतिस्समबन्धः स्यात्तदादौ गण्यते सदा ॥ ३४ ॥
अथैकान्ते तु शय्यायां सम्मुखी पुरुषोपरि ।
यभेत मणितैर्दीनैस्सैवोपरतिरुच्यते ॥ ३५ ॥
कुर्वन्त्युपरतिं या चेद् भ्रामयेद्भ्रमणं विदुः ॥ ३६ ॥
पुंभावसंस्थितवती विमुखी प्रियस्य
पश्चान्निवृत्य च करेषु करान्निपीड्य ।

(१) अतः परमिति पाठान्तरम् ।

यच्चक्रवक्रमति चुंबनमाचरन्ती
तच्चक्रबन्धमिति तन्निपुणा वदन्ति ॥ ३७ ॥
उत्तिष्ठतः प्रियतमस्य करद्वयान्ते
स्थित्वा स्वकीयकरपीडितनाथकण्ठम्।
पश्चात्प्रसारितपदा परिरम्भयन्ती
या चुंबती रतिमुपेष्यति लम्बकं तत् ॥ ३८ ॥
उत्तिष्ठते प्रियगृहीतपदा करेण
स्थित्वा पदेन भुवि नायककण्ठलम्बी।
तत्पाणिपल्लवगृहीतकुचातिदीन-
वाणी रतिं च समुपैति तदैकपादम् ॥ ३९ ॥
विनमितनिजदेहा गुल्फरूढप्रियापि
स्वकरपरिगृहीतोदारशय्यान्तभागा।
भुजगकृतस्वहस्ता स्वेच्छया संगृहीत-
स्तनकलशयुगा स्याद्यत्प्रिया धेनुकं तत् ॥ ४० ॥
शय्याप्रविष्टरमणीघनगुल्फमूल-
मारुह्य तत्करगृहीतपदाम्बुजश्च।
उच्चास्थितो घनवपट्कृतिपेटपूर्वं
चुंबन् यभेत सुरतेष्वपि मार्कटं तत् ॥ ४१ ॥
करेण पादावुद्धृत्य गृहीत्वा शयने स्थितः।
गृहीतचिबुको यत्स्यान्मार्जारो बन्ध उच्यते ॥ ४२ ॥
श्वानवत्कटिमारुह्य यत्र स्यात्संमुखो रतेः।
वदन्ति श्वानकं तद्वै रतं रतिकलाविदः ॥ ४३ ॥
तदूरुनिक्षिप्तकरा भूस्थापितपदाम्बुजा।
पश्चात्प्रियेण यभिता रतं गार्दभमुच्यते ॥ ४४ ॥
पादसंरुद्धनादेव निष्पीडितकरा सती।
पादापकर्षणोत्कर्षैर्या रतिं याति हास्तिकम् ॥ ४५ ॥

कान्ताङ्गनिक्षेपपरस्तस्या वक्षोरुहद्वयम् ।
पीडयेत्स्वकरेण स्याद्रतिर्मार्गं तदुच्यते ॥ ४६ ॥
प्रसारितपदस्यास्य विमुखी पुंस्त्ववद्यभेत् ॥ ।
गृहीत्वा तत्पदद्वन्द्वं रतिर्वृपभ उच्यते ॥ ४७ ॥
तदूरुनिक्षिप्तगुल्फौ गाढालिङ्गनमाचरन् ।
आसीनो यद्रतिं याति स्वस्तिकं परिकीर्तितम् ॥ ४८ ॥
सगुल्फकरयुग्मेन हृतकण्ठप्रियेण तु ।
मणितैर्या रतिं याति पद्मबन्धमुदाहृतम् ॥ ४९ ॥
पुंभावतः समासीना प्रसारितकरा भुवि ।
प्रियस्याङ्कविनिक्षिप्तपदा तत्कुक्कुटं विदुः ॥ ५० ॥
अधःस्थितोर्ध्वदेहायाः पुटीकृतपदद्वये ।
आसीनेन कृतं यत्तु हंसबन्धं तदुच्यते ॥ ५१ ॥
अगान्यंगेपु संमर्द्य चुम्बनादिक्रियाशतैः ।
पुम्भावकान्तया साकं वल्लीबन्धं विदुर्बुधाः ॥ ५२ ॥

प्रियतमपरिपीडितांघ्रियुग्मा घनतरफूत्कृतिभी रतैर्विचित्रा ।
सुरुचिरघनचुम्बनैश्च तिष्ठत्यनुदिनमेति रतिं च सार्पबन्धः ॥५३॥
कान्ताकुचप्रान्तनिविष्टपादस्तस्याः पदद्वन्द्वकृतांसभागः ।
करौ गृहीत्वा स्वकरद्वयेन यभेत यस्मिन् स हि कूर्मबन्धः॥५४॥

शय्यानिविष्टपदहस्तयुगस्य पुंसो
जङ्घाद्वये निजपदद्वितयं विधाय ।
घृष्यत्युरोजयुगलं हृदि नायकस्य
सम्भोगमेति घनमात्स्यपुटीं वदन्ति ॥ ५५ ॥

अङ्गेपु संमर्द्य यथोन्नतायास्तिर्यग्विवृत्तस्वमुखांबुजायाः ।
यभेत शय्याग्रनिविष्टपादो ज्वालामुखं बन्धमुशन्ति सन्तः ॥५६॥

गण्डस्थलेऽपि स्वाङ्गानि सम्मर्द्य विपमे स्थितः ।
रतिमेष्यति कान्तायाः कलागृहमुदाहृतम् ॥ ५७ ॥

उपर्युपरि विन्यस्तपादो वक्षोरुहद्वये ।
करौ निक्षिप्य कान्तायाः देवबन्धो भवेत यत् ॥ ५८ ॥

अङ्गाङ्गान्तरभावजानुयुगले निक्षिप्य पादद्वयं
कान्तायाश्च कुचान्तरे शितनखैस्सङ्घर्षयन्नन्तरे ।
दृष्ट्वास्वादितवल्लभोऽतिमधुरैः कामं वचोभिर्वदन्
कक्षान्तःकुचमध्यचालितकरो बन्धो जयो व्यग्रतः ॥ ५९ ॥

कान्तानितंबभागात्पुरतो विधृतार्धदेहभागः सन् ।
दृढबन्धनिश्चलाङ्गश्चुंबन् रतिमेति शङ्खबन्धं तत् ॥ ६० ॥

दण्डवद्युगलं शय्या मध्यमे रतिमेष्यति ।
कूजितैर्मणितैर्हीनं मौसलं बन्धमुच्यते ॥ ६१ ॥

शय्यान्तस्थितपाणिपादयुगला निक्षिप्य कुक्षिं निजा-
मन्योन्याङ्घ्रिमध्यपीडितकरा डोलीकृता प्रेयसा ।
कान्ता लीनभयाऽनवद्यवचना सम्भोगमातन्वती
या चञ्चद्भगवत्प्रसन्नवदना बन्धं तदा डोलितम् ॥ ६२ ॥

प्रियहृदि वर्तितमध्या मुकुलितसर्वाङ्गसन्धिभागापि ।
या रतिमेष्यति मुकुलं बन्धं तदुच्यते तज्ज्ञैः ॥ ६३ ॥

अन्योन्यासक्तकण्ठापि चुम्बिताधरपल्लवा ।
ऊरुभागस्थिता कान्ता रतिः पल्लव उच्यते ॥ ६४ ॥

ऊरावुरू जानुभागं च जानौ कण्ठे कण्ठं कक्षयुग्मे च कक्षाम् ।
वक्षोजातौ वक्षसि प्रेमयुक्तं पुन्नारीभिर्नागबन्धं श्रुतं तत् ॥६५॥

वियुतं वियुताङ्गैस्तु स्त्रीपुंसैर्या कृतश्च तत् ।
संयुतं संयुताङ्गस्य कर्कटं चाङ्गमर्दनम् ॥ ६६ ॥
शय्यामध्ये पुष्पयुक्ते व्यक्ताङ्गं वृश्चिकं विदुः ॥ ६७ ॥

करहृतकरमूलप्रान्तमाकुञ्चिताङ्गं
कुचयुगलमुखाग्रं चुम्बयन् वद्दितं स्यात् ।

करधृतघनगुल्फद्वन्द्वभागान्तराला
प्रियहृदि परिविष्टा प्रीतिरुद्धृत्तिं तत् ॥ ६८ ॥
वियति समशिरस्कं चैकमुद्धृत्य पादं
कररुहयुगलैकस्वांघ्रिमुत्पीडयन्ती ।
भुवि निहितपदा सा प्रेयसा लिङ्गितापि
प्रतिदिनकृतभागा स्यान्मयूरं रतिः स्यात् ॥ ६९ ॥

प्रियैकपादस्थितगुल्फभागा-
प्यन्यांघ्रिमध्यस्थितजानुभागा ।
तदूडोलितावर्तितजानुभागं
या स्त्री रतिं यास्यति गारुडं तत् ॥ ७० ॥
कलास्थानेन संस्पर्शः कलावतरणं विदुः ।
विप्लुतं दशसंस्कारं सम्भोगे संसृतिर्यथा ॥ ७१ ॥

पुम्भावादिसमस्तबन्धरचनाः स्त्रीचातुरीसाधिता
स्ता अत्यन्तविचित्रभोगसहितः कुर्यात्प्रियाभिः कृती ।
एवं व्यस्तविचित्रबन्धनहितः स्त्रीकारिता आचरन्
कामी काममनोज्ञकेलिषु सदा धीमान् सुखं संवसेत् ॥७२॥
अव्यस्तस्त्रीमुखाः केचिद् व्यस्तनाथमुखाः परे ।
व्यस्ताव्यस्ताश्चतुरशीतिबन्धा मान्मथकेलिषु ॥ ७३ ॥
व्यस्तं विप्लुतबन्धन्तु तदेव मुरजं भवेत् ।
कलावतरणं यत्तु व्यस्तं कन्दुकनामकम् ॥
व्यस्तं गारुडबन्धन्तु तद्भवेदेकरूपकम् ॥ ७४ ॥

एका रज्जुस्संहृताग्रा द्विरूपा
यादृग्दृश्या बन्धचारास्तदैव ।
कृत्वा व्यस्ताव्यस्ततो नामयुग्मैः
कुर्याद्विद्वानेकबन्धं लिखित्वा ॥ ७५ ॥

एवं ज्ञात्वा कामिनीषु कलाज्ञानविशारदः ।
आचरेद्बन्धसुरतं समसम्भोगसिद्धये ॥ ७६ ॥
समं नीचातिनीचं च परमो नीच एव च ।
उच्चस्तथात्युच्चरतिः परमोच्चरतिस्तथा ॥ ७७ ॥
एवं सप्तविधं प्रोक्तं रतं शृङ्गारपारगैः ॥ ७८ ॥

तद्यथा—

पुन्नारीभिस्तुल्यलिङ्गसहिताभिर्यदा रतिः ।
क्रियते सा समरतिरिति ज्ञेया मनीषिभिः ॥ ७९ ॥

द्वादशाङ्गुलमिताङ्गजायया यो दशाङ्गुलमितेन कामिना ।
आचरेद्यदि रतिं पुरातनैः नीचबन्धरतिरित्युदीरिता ॥ ८० ॥

द्वादशाङ्गुलगुह्यायास्तथाष्टाङ्गुललिङ्गिना ।
रतिमेष्यति तं बन्धमतिनीचं विदुर्बुधाः ॥ ८१ ॥

षडङ्गुलमितेन या नरवरेण कान्ताङ्गुल-
द्विषट्कमितमन्मथप्रियगृहा रतिं यास्यति ।
पिशङ्गहरिणादयो मदनशास्त्रपारङ्गता-
स्तथाविधरतिं विदुः परमनीचबन्धाभिधाम् ॥ ८२ ॥

या षडङ्गुलमनोजमन्दिराऽष्टाङ्गुलध्वजनरेण कामिना ।
यभ्यते यदि तथाविधा रतिः नूनमुच्चरतिरित्युदीर्यते ॥८३॥

द्वित्रिकाङ्गुलिगुह्या या दशाङ्गुलनरेण तु ।
रमेत सततं पूर्वैस्सात्युच्चरतिरुच्यते ॥ ८४ ॥

जगति षडङ्गुलगुह्या पुरुषं या द्वादशाङ्गुलं यायात्[१] ।
सा परमोच्चरतिः स्यादेवं सप्तप्रकाररतिरुक्ता ॥ ८५ ॥

---

(१) चरति षडङ्गुलगुह्या पुरुषो वा द्वादशाङ्गुलो यत्रेति पाठान्तरम् ।

मतान्तरमाह—

ह्यङ्गुल्यधिकेन रतिं या कान्तान्मन्मथालयात्स्वस्याः ।
यद्याचरेद्रतिः स्यान्मदनज्ञैरुच्चरतिर्ज्ञेया ॥ ८६ ॥

निजपञ्चसायकनिकेतनादलं
चतुरङ्गुलाधिकनरेण कामिनी ।
रतिमेति यत्र मदविह्वला प्रिया
अतिपूर्वकां च सुरतं वदन्ति तत् ॥ ८७ ॥

सरसाङ्गना निजमनोजमन्दिराद्
युगलत्रिकाङ्गुलिमनङ्गकामिना ।
रतिमाचरेद्यदि नृगादिपूर्वजाः
प्रवदन्ति तान्तु परमोच्चरतिम् ॥ ८८ ॥

मदनसदनादात्मीयादङ्गुलद्वितयेन सन्
मनुजशिशुना कान्ता श्रयेत रतिं यदि ।
नकुलसहिता गोपुत्राद्यनेकपुरातना-
स्तमतिविरसं नीचं बन्धं वदन्ति मनीषिणः ॥ ८९ ॥

कान्तास्वगुह्यमानाच्चतुरङ्गुलहीनलिंगेन ।
रतिमेति याङ्गना सा रतिरतिनीचेति विज्ञेया ॥ ९० ॥

निजमनोजगृहोनषडङ्गुलध्वजवरेण वधूरतिमाचरेत् ।
यदि तथाविधबन्धरतिं बुधाः परमनीचरतिं प्रवदन्ति ताम्॥९१॥

तुल्यांगुलप्रमाणांगैः स्त्रीपुंभिस्समकारितम् ।
बन्धं समरतिं चेतिं प्रवदन्ति मनीषिणः ॥ ९२ ॥

रेतःप्रस्रवणोत्सवात्प्रतिदिनं सन्तोषसंवर्धिनी-
मोहोत्पादनकारणातिविमला हृल्लोचनाह्लादिनी ।
अन्योन्यप्रणयास्पदा नरवधूयुग्मेष्वनष्टप्रिया
वश्या सर्वसुखप्रदा समरतिस्संप्रार्थिता निर्जरैः ॥ ९३ ॥

विषमरतिवर्णनम्—

विषमा षडिव धरतिर्यैर्बन्धैस्समतां व्रजेत् ।
यद्विरच्य मया स्पष्टं प्रोच्यते विस्तरादिह ॥ ९४ ॥
अद्भुतवल्लीमृगसमदैर्धेनुदैवैश्च वल्लभेनैव ।
घटितेन मुरजपारावतबन्धाधोमुखविचित्रैर्हि ॥ ९५ ॥
नीचेन दर्पनाम्ना बन्धेन पुरुषनारीणाम् ।
जातिभ्रष्टानामपि नीचरतिस्तुल्यतामेति ॥ ९६ ॥

इति नीचसमः ।

[1]नीतिसर्वव्रपोपरि मर्कटविजयैश्च नागबन्धेन ।
उद्घटितकन्दुकविभ्रमरम्भासर्वतोमुख्यैर्बन्धैः ॥ ९७ ॥
त्रिवलीपिकबन्धाद्यैराचरितं यद्रतं स्त्रीणाम् ।
तेन च समतां यात्यतिनीचा रतिः सत्यम् ॥ ९८ ॥

इत्यतिनीचसमः ।

कूर्मस्वस्तिकगुह्यैर्मार्जारभ्रमणशङ्खबन्धैश्च ।
संयुतविजयमयूरैः कर्णाभरणेनैकरूपसर्वाङ्गैः ॥ ९९ ॥
मन्मथचक्रविटाधिपजयसंभोगैः समाचरितः ।
तेन पुनर्नारीणां भवति समः परमनीचाख्यः ॥ १०० ॥

इति परमनीचसमरतिः ।

मत्स्यभयानकपद्मीमुसलविमुक्तैश्च नागगरुडैश्च ।
डोलितकुण्डलनयनैः[2] कपोलचुम्बाभिधेन बन्धेन ॥ १०१ ॥
शंकरगौरीभ्यां या रतिराचरिता यया रत्या ।
जातिविहीनाया अपि जात्युच्चरतिः समरतिर्भवति ॥१०२॥

---

(१) नीवीनिवारवृश्चिकेति पाठान्तरम्
(२) सभयानकैकपादैर्मुसलवियुक्तैर्गारुडेनैव तोलितकुण्डल-दीनैरिति पाठान्तरम् ।

ज्वालालम्बितकुक्कुटगार्दभबीभत्सडोलितैर्बन्धैः ।
कर्कटवल्लिततुरगारोहणकन्दर्पवेणिबन्धैश्च ॥ १०३ ॥

उड्डीनकलावतरणबन्धाभ्यामङ्गघट्टनान्येव ।
आचरितं यत्नेनात्युच्चरतिः समरतिर्भवति ॥ १०४ ॥
हंसकलाग्रहमुसलैर्हस्तिकवीराख्यबन्धराजैश्च ॥ १०५ ॥
इत्युच्चसमः । रतिवेगस्त्रिविधः
मन्दवेगो मध्यवेगश्चण्डवेगस्त्रिधा रतिः[1] ।
मन्ददोलनकण्ठः स्यान्मन्दवेग उदाहृतः ॥ १०६ ॥

मध्यमान्दोलनेनैव मध्यवेग उदाहृतः ।
उच्चमन्द्रेण वेगेन जववान्धावनेन तु ॥ १०७ ॥

प्रचण्डान्दोलनेनैव चण्डवेगोऽभिधीयते ।
ज्ञात्वैवं मान्मथे तन्त्रे वेगात् सम्भोगमाचरेत् ॥ १०८ ॥
समं मध्यमवेगेन चण्डवेगेन नीचकम् ।
उच्चं मन्द्रेण[3] वेगेन कुर्यादेवं रतिं बुधः ॥ १०९ ॥

---

(१) जातिं दर्शनरूपभावसुगुणस्थानानि च ग्राहक-
ग्राहिण्या सहिते मनोजसदने मानं प्रियाणां सदा ।
निश्चित्याधिककामतंत्रविभवज्ञानप्रियाभिः समं
पूर्वस्मिन् मदनस्थलेषु मतिमान् कालं नयेतान्वहम् ॥
इच्छाहास्यबहुप्रतारणपरा तुल्यक्रिया रोदनं
क्रोधाक्षिप्तकषायदुःखमिथुना या संयुताया रतिः ।
सोच्चानीचरतौ तु मत्सरधिया दैन्यप्रियालापन-
स्वेदोद्दामसुखा भवन्ति सुरतं पूर्वैस्त्रिधोदाहृतम् ।
समो मध्यमवेगश्च चण्डवेगस्तथैव च ।
नीचकश्चोच्चवेगश्च अत्युच्चो मन्दकस्तथा ॥
एवं रतिर्नवविधा तथा पुंभिः प्रकीर्तिता ॥
इति एतत्पूर्वं द्वितीयपुस्तके अधिकः पाठः ।
(२) इदं श्लोकार्धं पुस्तकान्तरे नास्ति ।
(३) मन्द्रेनेति पाठान्तरम् ।

कमलनयनशोभादीपिता शान्तभागा
प्रियतमतरुणीनां भावनाज्ञः प्रियोपि।
सकलरतिरहस्यं कर्तुकामोपि मूढः
स्थिरतरविभवोपि प्राप्यते नीचभावम् ॥ ११० ॥

अथ निर्धनिकः प्रियाप्रियो वा
विकलाङ्गः सकलाङ्गको युवा वा।
तरुणीजनभावपारगो यो
वशतां यान्ति नरस्य तस्य कान्ताः ॥ १११ ॥

धारितबाह्यप्रीतिर्निस्वे प्रीतिर्न कान्तानाम्।
उभयोः प्रीतिर्निविडा सा रतिरस्या वर्धते पुंसि ॥ ११२ ॥

मधुरसुमृदुवाचः काञ्चनादानलोलाः
चपलहृदयभाजश्चाटुकारप्रवीणाः।
नियमितनिजनाथाः कूटदोषप्रचारा
निखिलमदनतन्त्रज्ञाननिष्ठास्तरुण्यः ॥ ११३ ॥

संपत्स्वरूपकान्त्यादिसहितं तं प्रियं स्त्रियः।
कं हसन्ति न पञ्चेषुशास्त्रपारगता हिताः ॥ ११४ ॥

एवं लक्षणमुक्तं समरतये सर्वबन्धानाम्।
मन्मथकलासु दक्षाः युक्तिविशेषाद्रतिं हि रचयन्तु[१] ॥११५॥

इति सर्वविद्यानवद्यसहजसारस्वतचन्द्रनामाङ्करामविद्वन्मणि-
कुमारहरिहरनामाङ्कविरचितायां शृङ्गाररसप्रबन्ध-
दीपिकायां रतिरहस्ये बन्धनिरूपणं नाम
तृतीयः परिच्छेदः।

---

(१) कण्डूतेरप्रतीकारादन्तर्लिङ्गाविमर्दनात्।
न द्रवन्ति न तृप्यन्ति योषितः नीचमैथुनैः ॥
इत्यधिकं पुस्तकान्तरे।

## अथ चतुर्थः परिच्छेदः

नत्वाहं त्रिपुरां जगत्त्रयनुतां हेलां पुरारिप्रियां
वश्या याऽखिलमेदिनीतलवधूसङ्घस्य यत्रौषधान् ।
मन्त्रादीन् तिलकं विलेपनविधिं दत्तस्य सिद्धिक्रियां
मूलेनाथ वदामि सारसहितं पूर्वोक्तशास्त्रक्रमात् ॥ १ ॥
प्रसंगेन मया सम्यक् प्रोच्यते विस्तरादिह ।
वश्यं स्त्रीणां तथा पुंसां मन्त्रयन्त्रौषधिक्रियाम् ॥ २ ॥
विना मन्त्रौषधीः कान्ता न गम्याश्च कदाचन ।
तस्मादौषधमन्त्राणि प्रयुज्य रतिमाचरेत् । ॥ ३ ॥
औषधास्त्रिविधा ज्ञेया लेपास्वादनधारणैः ।
मन्त्रयन्त्रैश्च सहितान् तान्वक्ष्ये पूर्वसम्मतान् ॥ ४ ॥
द्रावकराणि स्त्रीणां वश्याकद्रावकराणिबिन्दूनाम् ।
ध्वजवैवर्ध्यकराण्यभितः पुरुषाणामौषधानि सर्वत्र ॥ ५ ॥
आदौ वचोभिरनुनीय ततो विचित्रैर्मन्त्रौषधैरनुदिनं हृदयं विदार्य ।
लज्जाभये च विनिहत्य रतिप्रसङ्गैः कान्तं नितान्तहृदयो विवशं नयेत ६
प्रातःस्थिते तां बलवद्गृहीतां श्वश्रूयुतां पुत्रवतीं रिपुस्त्रीम् ।
न मंत्रतंत्रैश्च वशं नयेत समागता चेन्न कदापि गम्या ॥७॥
गम्या स्वतन्त्रवनिता भृतकाङ्गनापि
सापि प्रवासवनिता पितृमन्दिरस्था ।
व्याधिस्थमर्त्यवनिता च नपुंसकस्य
भार्या च गेहगृहिणी सततं नरेण ॥ ८ ॥
वने जने तीर्थजने च रथ्यामार्गेषु कान्तापुरतो निशीथे ।
पादाङ्गनामण्डलमध्यमेव न भाषयेत्प्रेमभरां परस्त्रियम् ॥ ९ ॥

गृहीतभारां व्याधितां दुःखिनीं तु रजस्वलाम् ।
गतत्रपां च निःस्वां च भापयेदिच्छया स्त्रियम् ॥ १० ॥
संपन्नमन्त्रितैरिष्टैर्निश्चयभक्षैश्च नौपधैः ।
लेपनैर्व्याधियुक्ता चेद् ध्रुवं साध्यवराङ्गना ॥ ११ ॥

ह्लीं क्लूं महाकालि होलि होलिक्लूं तदीयदेहं मदनानीतेन तापय तापय शोपय शोपय मदभिमुखं कुरु कुरु स्वाहा । इति पुष्पाणि मन्त्रयित्वा दद्याद्वश्या भवति ।

हीं श्रीं क्लैं निलि नलातिणांल्लंगुलेयसंवकणांल्सुरास्सिअप्पा-पुणांयङ्कुलं कुरु स्वाहा । इति गन्धमभिमन्त्र्य देयम् ।

दुलुक्किदसिरीयकुंमाणिविलिय्यालिदिव्विणाताणिमोत्तिणो-चलंकुवारजंतेसियताणिरिसारुसदलाकाणिअणोयिरुक् । इति मन्त्रे-णाभ्यंजनतैलशिरसि वास्थित्रिदगभस्म दद्यात् ।

अथ यन्त्रम्

अर्कपत्रैः स्त्रीवश्यम् । तमालपत्रैः पुरुषवश्यम् ।

के गृह्णन्ति कुचान् ललाटनयने चुम्बन्ति दन्तच्छदं
दन्तोष्ठेन निपीडयन्ति बहुशश्चुम्बन्ति गण्डस्थलम् ।
कक्षे कण्ठतटीं लिखन्ति नखरैर्गृह्णन्ति गाढौ स्तनौ
मुष्ट्या कक्ष्यसि ताडयन्ति दधते नाभौ चपेटं शनैः ॥१२॥
कुर्वन्ति स्मरमन्दिरे करिकरक्रीडां स्त्रियो जानुनी
गुल्फाङ्गुष्ठपदानिजत्रिकपदं निघ्नन्ति तैरात्मनः ।
इत्येवं कलयन्ति ये शशिकलामालिंग्य मध्यत्रिते
शीतांशूत्पलपुत्रिकां शशिकरस्पृष्टामिव प्रेयसीम् ॥ १३ ॥

अथ कलातिथयः कथ्यन्ते

दत्त्वा श्लक्ष्णं नखाङ्कं मृदुकरजमुखैरङ्कयन्तं नितम्बं
प्राग्भागं मन्दसीत्काप्रतिपदि युवतेर्नागरा द्रावयन्ति ॥ १४ ॥

स्तनमिलननलार्तो गण्डपालिं विचुम्बन्
कति न कुचयुगादाकृष्य पार्श्वं नखाग्रैः ।
अधरपदभुजानां मूलचञ्चन्नखाग्रैः
भृतनखपरिरंभो द्रावयेदंह्रियुग्मे ॥ १५ ॥

तृतीयामाश्लिष्यन् निबिडतममासाद्य पुलकं
मुहुर्बाह्वोर्मूले मृदुलिखितपार्श्वं कररुहैः ।
भुजानीडं कण्ठे दशनवसनास्वादितरणा
स्वकोपान्ताशब्दच्छुरितमबलां विह्वलयति ॥ १६ ॥

चतुर्थ्यामाश्लिष्य स्फुटमलघुसंपीडितकुचो
विचुम्बन् दन्तोष्ठं नखफलितवामोरुफलकाम् ।
दधाना घोरास्रच्छुरितमसकृन्नीरजदृशः
शरीरे क्रीडन्ति स्मररसनदीनिर्झरजलैः ॥ १७ ॥

एवं प्रकारेण मन्मथशास्त्रं सर्वमुखं ज्ञात्वा स्त्रीभिः पुरुषैश्च रतिः कर्तव्या । इतोऽधिकं ज्ञातव्यं कक्कोकादिशास्त्रे द्रष्टव्यम् । ग्रन्थविस्तरभयादिहास्माभिर्न विलिख्यते । दिङ्मात्रप्रदर्शनमेतत् ।

इति सर्वविद्यानवद्यसहजसारस्वतचन्द्रनामाङ्करामविद्वन्मणिकुमारहरिहरनामाङ्कविरचितायां शृङ्गाररसप्रबन्धदीपिकायां रतिरहस्ये चतुर्थः परिच्छेदः ।

शृङ्गाररसप्रबन्धदीपिका(११)मञ्जरी समाप्ता ।

# अथ कामतंत्रकाव्य(१२)मञ्जरी

## अथ प्रथमः सर्गः

फक्प्रत्ययस्य प्रकृतिभूतो बालिशपुङ्गवः।
तस्य योपासक्थिमध्ये भूमौ चोत्कंठते मनः॥ १ ॥
प्रह्लादं च नृसिंहं च विशालाक्षीं च जानकीम्।
विद्युत्पादोद्भुतां दुर्गां तथा ज्योतिर्विदः स्त्रियम्॥
एताः मनांसि संस्मृत्य महेशं प्रणिपत्य च।
कामतंत्रस्य ग्रन्थस्य व्याख्यानं प्रकरोम्यहम्॥

चिकीर्षितस्य ग्रन्थस्य विघ्नपरिसमाप्त्यर्थं क्लीबस्य सुखकांतिध्वंसरूपं मङ्गलं शिष्यशिक्षायै निबध्नन्प्रतिजानीते। इदानीम् अवकीर्णिनो ये बालिशाः द्रव्यलोभेन स्वभगिनीं स्वजननीं स्वस्त्रियं वा प्रयच्छन्ति तेषां महद्दर्पार्थं हर्षजनकप्रबंधानाह—फगिति। नडादिभ्यः फगिति जायमानो यः फक्प्रत्ययः तस्य प्रत्ययस्य प्रकृतिभूतो यश्शब्दः नडशब्दः स शब्दः 'केवला प्रकृतिर्न प्रयोक्तव्या केवलः प्रत्ययो न प्रयोक्तव्य' इत्यनेन न्यायेन प्रत्ययविशिष्टो गृह्यते। एवं च नाडायनशब्दस्य ग्रहणे जात एव। ननु नस्तु नारायणशब्दस्य अपेक्षितत्वात् नाडायनशब्देन कथं निर्वाहः इत्युक्तं चेत्तत्रोत्तरमाह—'एकदेशविकृतमनन्यवद्भवती'-त्यनेन न्यायेन नाडायनशब्देन नारायणशब्दस्यैव ग्रहणम्। तच्छब्दस्य वाचको यो जनः। अवकीर्णी मुख्यदूत इति

(१) प्रकर्षेण ह्लादते इति प्रह्लादः तं, ह्लादी सुखे चेत्यस्माद्धातोः पचाद्यच्, स्वकीययोषाम् अवकीर्णिसात्करणेन यः सुखरूपत्वेन तिष्ठति सः प्रह्लादः। विगता शाला शोभा ययोस्ते विशाले, विशाले अक्षिणी यस्याः सा तथोक्तां कुत्सिताक्षीमिति यावत्।

(२) उपादानं जातद्वयमेव।

यावत्। सः कीदृशः बालिशानां मूर्खाणां मध्ये पुङ्गवः श्रेष्ठः मूर्खाधमो वा। तस्य अवकीर्णिनः मुख्यदूतस्येत्यर्थः। योपासक्थिमध्ये योपायाः सक्थिनी योपासक्थिनी योपासक्थ्नोः मध्यं योपासक्थिमध्यं तस्मिन् योपासक्थिमध्ये तत्र स्थिता या भूमिः शक्तित्रयात्मिका तस्यां भूमौ। अत्र भूमिशब्दवाच्यं स्त्रीणां कामसद्म लक्ष्यते मे मनः उत्कंठते प्रथमं मे मनः तस्याः विषये उत्कण्ठते तथा तस्याः क्वापि मनः मद्विषये अतितराम् उत्कण्ठते कुतः उभयोः एकशरीरत्वात्। जन्मान्तरीयस्नेहस्य उभयोः स्मरणविषयत्वात् 'सक्थि क्लीबे पुमानूरुरि'त्यमरः। अहं तस्याः चलपत्रसदृशस्य अङ्गस्य अभिलाषुको भवामीत्यर्थः। निरन्तरं तस्याः अभिलाषं करोमीति भावः। तां विना मम किमपि न रोचत इति निष्कृष्टोऽर्थः॥ १॥

स्वैरिणी तस्य योषा च नेत्रपातं च सर्वतः।
करोति सुतरामेव अत्यन्तानङ्गपीडिता॥ २॥

ननु कुलाङ्गनायाः पुरुषान्तरे नेत्रपातनम् अतीव अनुचिततरमित्याशङ्क्य अनुचितत्वमेवोपपादयन्नाह—स्वैरिणीति। स्वेन स्वबुध्या ईरितुं परपुरुषान् प्रतिगन्तुं शीलं स्वभावो यस्याः सा स्वैरिणी। "स्वैरिणी पांशुला वेश्ये" त्यमरः। स्वादीरेरिणोरिति वृद्धिः। तस्य योषा स्त्री च नेत्रपातं च नेत्रयोः पातं नेत्रपातं च सर्वस्मिन् इति सर्वतः दृढपुरुषान्प्रति नेत्रशरयोः प्रक्षेपः सुतरामेव अत्यन्तमेव करोति पुरुषेच्छां विनैव करोति। ननु धवे विद्यमानेपि पुरुषान्तरेषु स्नेहोद्रेकस्य प्राकट्यं कथमियं करोतीत्याह—अत्यन्तेति। अनङ्गेन कामेनेति शेषः। अनेन वाक्येन अस्याः पतेः नर्मकर्मणि सामर्थ्याभावः सूचितः॥ २॥

धवस्तस्याः क्लीबरूपो नारायण इति श्रुतः।
क्लीबत्वादिति हेतोश्च दुःखिता सा भृशं सदा॥ ३॥

ननु अस्याः पतेः नर्मकर्मणि सामर्थ्याभावो वर्त्तत एव तथापि कुलीनत्वात्पुरुषान्तरेषु दृष्टिपातनमतीव अयुक्तमित्यत आह— धव इति, क्लीवरूपः नपुंसकं इत्यर्थः। तस्य नामधेयं किमित्यत आह—नारायण इति। प्रसिद्ध इत्यर्थः। अहं तु अतीव सुंदरी मम धवस्तु क्लीवः। मया पूर्वजन्मनि किं दुष्कर्म कृतं येन दुष्कर्मणा ईदृक् पतिः प्राप्तः। एतद्रूपेण दुःखहेतुना सा भृशं दुःखिता। अनया मानसीव्यथया तस्याः उदरे अन्नं न गच्छति। अनेन भर्तृजनितदुःखेन अत्यन्तं कृशतरा जातेति भावः। ॥ ३ ॥

अन्येषां सह संप्रीतिं करोति स्वमनीषया।
द्वौ जारौ सा वृता पूर्वं सुधाकरनिशाकरौ ॥ ४ ॥

परपुरुषेच्छां विनैव स्वयमेव पुरुषान् प्रति अनुरक्ता जातेत्यत आह—अन्येषामिति। स्वमनीषया स्वबुद्ध्या अन्येषां जाराणां सह संप्रीतिं नाम अतीव स्नेहमिति यावत् करोति। निरन्तरम् अपरिचितानां पुरुषाणां सह स्वयमेव सम्भाषणादिकं करोतीत्यर्थः। आदिशब्देन स्वयमेव परपुरुषशरीरे पततीत्युक्तं भवति। ननु क्लीवयोषा सा अतीवदुःखकारिण्याः कामपीडायाः प्राप्तो यो मनःक्षोभः तं क्षोभं कथं सहते इत्यत आह—द्वौ जाराविति। सुधाकरनिशाकरसंज्ञकौ द्वौ जारौ उपपती पूर्वमेव वृता मम कामशमने दक्षतरौ इति मनसि निश्चिता ॥ ४ ॥

स्त्रीविहीनौ तौ च जारौ तया च प्राणधारिणौ।
प्रतोल्यां धारणे दक्षौ कुचमर्दनतत्परौ ॥ ॥ ५ ॥

ननु अबलाभ्यां सहितौ जारौ यदा अस्यां संलग्नौ तदा जारयोः स्त्रियोः का गतिरित्यत आह—स्त्रीविहीनाविति। तौ जारौ स्त्री-

(१) 'क्लीवः पण्ढो नपुंसकं' इत्यमरः।
(२) अत्र 'अन्यैश्च' इति प्रयोगः साधुः।
(३) 'जारस्तूपपतिः समौ' इत्यमरः।

विहीनौ स्त्रीभ्यां विहीनौ स्त्रीरहितौ अनेन कारणेन अनयोः अस्यां योषायां स्नेहाधिक्यम् अतीव उचिततरम् । कुतः । वियुक्तत्वात् अनन्यजेन पीडितत्वाच्च । कीदृशौ तौ तया पूर्वोक्तया योषया च प्राणधारिणौ प्राणान्धारयतः तौ तथोक्तौ । तस्याः नेत्रसायकयोः प्रक्षेपस्य ग्रहणमात्रेणैव जीवितौ उपायांतररहितौ । ननु प्रतारिका सा अनयोः हस्तमध्ये कथं प्राप्नोतीत्याह—प्रतोल्यामिति । 'रथ्या प्रतोली विशिखे'त्यमरः । तत्र धारणे आलिङ्गने दक्षौ बलिष्ठौ कीदृशौ तौ कुचमर्दनतत्परौ । कुचयोः मर्दनं दृढतया धारणं तत्र तत्परौ अतीव निष्णातौ । सा योषा यदा दीपानयनार्थं वा आश्रयाशस्यानयनार्थं वा स्वपत्तनसकाशात्सन्निहितजारपुटभेदनं प्रति यदा गच्छति तदा उभावपि प्रघाणे[2] तां धृत्वा अतीवोत्सुकतया ओष्ठमधुनः प्राशनन्निरन्तरं कुरुत इत्यर्थः । 'आश्रयाशो बृहद्भानुरि'त्यमरः । 'पत्तनम् पुटभेदनमि'त्यमरः ॥५॥

ताभ्यां कृत्वा च सा योषा कामपीडां जहाति नु ।
कामतंत्रे दक्षतरौ तस्या वचसि किंकरौ ॥ ६ ॥

किञ्च । ताभ्यामिति । सा योषा ताभ्यां पूर्वोक्ताभ्याम् उपपतिभ्यां कामपीडां पञ्चशरवेदनां जहाति नु त्यज्यते किम्नु । नु इति वितर्के । ननु अनङ्गमतङ्गजपीडितायाः अस्याः मनसः प्रसन्नताकरणे अनयोः क्व सामर्थ्यमित्युक्तं चेत्तत्रोत्तरमाह—कामतन्त्रे इति । कामतन्त्रे नाम कामशास्त्रे मैथुनादौ दक्षतरौ अत्यन्तम् दक्षौ दक्षतरौ तस्याः वचसि आज्ञायां किंकरौ । क्षणदायाः यामद्वयानन्तरम् अनयोः यस्मिन्विषये आज्ञा दीयते यस्य कस्यचिद्वस्तुनः अभिलाषा क्रियते तद्वस्तुजातमानीय

(१) अग्नेरित्यर्थः ।

(२) वहिर्द्वारप्रकोष्ठके, 'प्रघाणप्रघणालिन्दा वहिर्द्वारप्रकोष्ठके' इत्यमरः ।

तस्मिन्नेव क्षणे तां ददत इत्यर्थः । अनेन वाक्येन अस्याः वचसः साधने अनयोः अतीव व्यवसायाधिक्यमुक्तम् ॥ ६ ॥

सुनेत्रा सा च योषा तु ताभ्यां तु बहु मोदते ।
क्लीबस्तु ज्ञायमानोपि[1] तयोः कर्मातिदुःखदम् ॥ ७ ॥

उपपतिभ्यां कृत्वा अतीव प्रसन्नहृदया जातेत्यत आह—सुनेत्रेति । शोभने नेत्रे यस्याः सा तथोक्ता सा योषा च ताभ्यां तु बहु मोदते । आनन्दोदधौ उपपतिभ्यां प्लावनं करोतीत्यर्थः । आभ्यां कृत्वा स्वशरीरस्थितां कामपीडां विहाय अत्यन्तमानन्दमनुभूयत इति भावः । ननु पूर्वोक्तः क्लीबः स्वयोषायाः ईदृशं कर्म दृष्ट्वा तस्याः ताडनादिकं किमर्थं न करोतीत्याह—क्लीब इति। तयोः योषाजारयोः अतिदुःखदं स्वशरीरस्य अत्यन्तं दुःखजनकं कर्म ज्ञायमानोपि जानन्नपि बालिशः क्लीबः अजानन्निव तूष्णीं भूत्वा स्थीयते[2] । स्वस्त्रियः ईदृग् दुःखजनकं कर्म दृष्ट्वा तस्याः मुखोपरि हस्तेन ताडनं न ददातीत्यर्थः । स्वशरीरे सामर्थ्याभावात् तस्याः शरीरे अनन्यजकोपस्य अतीव प्रवर्धितत्वात् स्वस्य तस्याः कामशमने सामर्थ्याभावात्तस्याः दुष्कर्म जानन्नपि किमपि न वदतीति भावः ॥ ७ ॥

तूष्णीं भूत्वा स्थीयते च अजानन्निव बालिशः ।
रात्रौ योषां गृहे त्यक्त्वा अत्यन्तानङ्गपीडिताम् ॥ ८ ॥

मदविह्वलां स्वयोषां त्यक्त्वा पतिस्तस्य मठे शयनार्थं च गच्छतीत्याह—रात्राविति । योषां स्वस्त्रियमिति यावत् । रात्रौ निशीथे जायमानेपि गृहे अत्यन्तम् अनङ्गपीडितां त्यक्त्वा तस्मिन्नृसिंहस्य मठे शयनार्थं च गच्छति । एवं निरन्तरं करोतीत्यर्थः । अनेन वाक्येन अस्याः योषायाः स्वपतेः सकाशात्

---

(१) अत्र 'जानानोपि स तु क्लीब' इति पाठः साधुः ।
(२) अत्र 'तिष्ठती'ति साधुः ।

पञ्चशरसुखानुभवः कदापि न प्राप्तः। भर्त्तुः सकाशात्प्राप्तं कामसुखस्यानुभवं स्वप्नेपि न जानातीत्यर्थः। अनेन वाक्येन इयं जारेणैव कामपीडां जहातीत्यर्थात् सिद्धम् ॥ ८ ॥

नृसिंहस्य मठे तस्मिन् शयनार्थं च गच्छति।
दुर्गापथिषु विख्याते सुदृढे राजनिर्मिते ॥ ९ ॥

ननु तस्य मठः कस्मिन् स्थाने वर्तत इत्यत आह—दुर्गापथिष्विति। उपरितनमार्गेष्वित्यर्थः। कीदृशे मठे सुदृढे महद्भिः पाषाणैः रचिते अत एव राजनिर्मिते राजभिः निर्मितः तस्मिस्तथोक्ते ॥ ९ ॥

तदा सानङ्गयुक्ता च अत्यन्तं मदपीडिता।
उपस्थे कृत्रिमं शिश्नं संप्रक्षिप्यानुमोदते ॥ १० ॥

ननु एतस्य क्लीबस्य निरन्तरं मठे शयनार्थं गमनं कुलवृत्तिरेव तथापि मदपीडिता अस्य योषा क्षणदायाः पर्यावर्तनं केन प्रकारेण करोतीत्याह–तदेति। यदा अयं मठे शयनार्थं गच्छति तदेत्यर्थः। अनङ्गयुक्ता च अनङ्गेन कामेनेति शेषः। अत एव अत्यन्तं मदपीडिता मदेन पुष्पधनुषः मदेनेति शेषः। तदा तस्याः दर्पकपीडाशमने उपायान्तरमाह—उपस्थेति। कृत्रिमं क्रियया निर्वृत्तं कृत्रिमं काष्ठादिना सम्यक् रचितम्। यद्वा घृतकोशातक्या निर्मिता घृतकोशातक्यपि शिश्नाकारत्वात् शिश्नं संप्रक्षिप्य सम्यक् प्रवेशनं कृत्वेत्यर्थः। अनुमोदते पञ्चशरैश्वर्यसुखं तस्यां यामिन्यां सम्यगनुभूयत इत्यर्थः ॥ १० ॥

यद्वा जारौ समाहूय ताभ्यां तु बहु मोदते।
क्लीबस्तु तत्र गच्छन् सन् रात्रौ शिश्नस्य धारणम् ॥
करोति सुतरामेव तस्य संतोषहेतवे ॥ ११ ॥

(१) मनुभवतीति युक्तः पाठः।

ननु कृत्रिमशिश्नेन कृत्वा अकृत्रिमशिश्नसुखैश्वर्यं तु न जायते इति कृत्वा इतः परं कृत्रिमशिश्नप्रवेशनं कदापि न करिष्यामि किंचिदुपायं तस्य अनुसन्धानं कर्तव्यमिति मनसि विचार्य जारयोः स्वमुखेनैव आकारणं कृतवतीत्याह—यद्वेति । यद्वा नाम पक्षांतरे । जारौ समाहूय संकेतयुक्त्या तयोः आह्वानं नाम आकारणं कृत्वेत्यर्थः । हे सुधाकर हे निशाकर अद्य युवाभ्यां मम सद्मनि निशीथे सर्वथैव आगन्तव्यम् अहं एकाकी भवामि । श्वश्रूप्रभृतयः सर्वेपि जनाः तत्रैव गताः सन्ति। अद्य रहआनुकूल्यं अति समीचीनं वर्तते । अनन्यजेन क्रियमाणस्य सप्ततन्तोः कर्माणि यावन्ति उपकरणानि विहितानि कृत्स्नानि तावन्त्युपकरणानि गृहीत्वा झटिति मत्सन्निधाने आगन्तव्यम् । अहं तु केलिसद्मनि खट्वायाः उपरि आस्तरणस्य उत्तरच्छदस्य च बहुमूल्यैः कार्तस्वरतन्तुमिश्रितैः रश्मिभिः स्थानचतुष्टये बन्धनं करोमीति आह्वानसमये इति वाक्यमुक्त्वेत्यर्थः । ताभ्यां पूर्वोक्ताभ्यामिति यावत् । बहु मोदते । पूर्ववद्व्याख्येयम् । ननु स्वपुटभेदने विद्यमानाः याः योपाः तासां अवकीर्णिने प्रत्यर्पणे अतीव निष्णातः एतादृशः आंध्रानूजः झपकेतुर्व्यथां दधौ । अतीवमग्नां स्वप्रियां विहाय किमर्थं रात्रौ प्रथमाश्रमे विद्यमानस्य अवकीर्णिनः पत्तनं प्रति किमर्थं अटतीत्याह—क्लीब इति । क्लीबस्तु नपुंसकस्तु तत्र गच्छन् तत्र मठे गच्छन् सन् रात्रौ निशीथे जायमानेपि शिश्नस्य धारणं सुतरामेव करोति । ननु कुलोत्पन्नस्य ईदृक्शिश्नधारणं कर्म अत्यन्तम् उपहासजनकम् इत्युक्तं चेत्तत्रोत्तरमाह—तस्येति । शिश्नधारणं तु तस्य आह्लादद्योतनार्थम् अन्तर्मदावस्थः यः कश्चन पुरुषः तस्य शिश्नधारणं करोति चेत् तस्य कल्पपादपसदृश इत्यर्थः ॥ ११ ॥

मातुर्गेहे च सा योपा यदायाति द्विजोत्तम ।

कासेन पीडितत्वाच्च अत्यन्तं कर्म दुष्करम् ॥ १२ ॥

इत्थमनेन प्रकारेण भर्तृगेहे अत्यन्तं शंबरारिणा पीडिता सा क्लीवधविका यदा कदाचिद्दैववशात् जनन्या आहूता सती यदा जनन्याः गृहं प्रतिगच्छति तदा आत्मभुवः शरीरान्निःसरणं पुरोभागिनैव कथं करोतीत्याह—मातुरिति । हे द्विजोत्तम द्विजेषु उत्तमः तस्य सम्बोधनमित्यर्थः । यदा मातुर्गेहे आयाति तदा कासेन पीडितत्वाद्धेतोः अत्यन्तं दुष्करं कर्तुं शक्यं कर्म करोति यथा बुभुक्षितः क्षुधावशात् अपक्कं कृत्स्नमपि वस्तुजातं भुंक्ते तथा इयमपि जाराणां कटिबन्धनं स्वजङ्घाभ्यां कृत्वा अतीव दृढतरस्य जाराघातस्य ग्रहणं करोतीत्यर्थः । मातृगृहसंबन्धिनां जाराणां सह संयोगमात्रेणैव कृत्स्नां स्मरवेदनां संपरित्यज्य नेत्रे निमील्य क्षणदायाः पर्यावर्त्तनं सुखरूपेणैव करोतीति भावः । 'दोषैकदृक् पुरोभागी'त्यमरः ॥ १२ ॥

करोति सा द्विजश्रेष्ठ जारजं मैथुनं महत् ।
क्लीवात्पत्युश्च सा योषा भृशं दुःखं च धार्यते ॥ १३ ॥

करोतीति । जाराघातस्य ग्रहमात्रेणैव स्मरवेदनां परित्यज्य एव तथापि तस्याः सन्तोषस्य लेशोपि नास्तीत्याह—क्लीवादिति । सा योषा क्लीवात्पत्युश्च भृशं दुखं धार्यते । मया पूर्वजन्मनि किं दुष्कर्म कृतं येन दुष्कर्मणा ईदृक्पतिः प्राप्तः अनेन आधिना पश्चिमयामिन्याः सादृश्यमनुकरोतीत्यर्थः ॥ १३ ॥

दैवेन प्रतिबद्धा सा तस्याः दोषो न विद्यते ।
तां स्त्रियं ये च पश्यन्ति ते भवन्ति च दुःखिता ॥ १४ ॥

किञ्च । दैवेनेति । 'प्रारब्धकर्मणां भोगादेव क्षय' इत्यनेन न्यायेन अस्मिन् विषये तस्याः दोषः किमपि नास्तीति भावः । उदासीनजना अपि तां विलोक्य अत्यन्तं दुःखिता भवन्तीत्याह—

तामिति। ये जनाः तां क्लीबधविकां पश्यन्ति तेपि दुःखिताः भवन्ति। किं दुःखिता भवन्तीत्याह—चतुराननस्य तिलोत्तमानुरूपायाः अस्याः अबलायाः क्लीबेन सह संबन्धरूपः व्यवसायः अनुचिततरः। कुतः सौन्दर्याकूपारे निमग्नत्वात्॥ १४॥

अन्ये तु च प्रमोदन्ते क्लीबस्य मुखभञ्जनात्।
क्लीबस्य दुःखन्नास्त्येव पशुत्वादिति मे मतिः॥ १५॥

किञ्च। अन्ये त्विति। क्लीबस्य शत्रुभूताः ये जनाः ते तु प्रमोदन्ते। आनन्दपारावारे एव निरन्तरम् आस्थानं क्रियते। आस्थानकरणे कारणमाह—क्लीबस्येति। लोके स्वशत्रुपराजयः स्वस्य महान् ह्लादजनकः। मुद हर्षे इत्यस्माद्धातोः कर्तरि लट् आत्मनेपदप्रथमपुरुषबहुवचनांतं पदम् उदासीनजना अपि उभयोः दशां विलोक्य अत्यन्तं दुःखिताः भवन्ति। क्लीबदशाम् अनुभवकर्तुः स्वकीयक्लीबत्वविषये दुःखं नास्तीत्याह—क्लीबस्येति। पशुसदृशत्वाद्धेतोः एतद्विषयकं दुःखजातं किमपि तस्य हृदि न विद्यते मे मतिरिति निबन्धकर्तुः वाक्यम्॥ १५॥

योषां प्रति वदत्येव त्वं गच्छ तस्य सन्निधिम्।
इदं वाक्यं च सा श्रुत्वा भीता प्रोवाच तं पतिम्॥१६॥

अथ स क्लीबः बलात्कारेण स्वयोषाम् अवकीर्णिनः सद्मनि प्रेषयतीत्याह–योषामिति। हे योषे त्वम् अस्यां निशीथिन्यां तस्य पूर्वोक्तस्य त्वदीयजारस्य सद्मनि सर्वथैव गच्छ। 'मया अनुमताऽसि' इदं वाक्यं स्वपतेः सकाशात् श्रुत्वा भयभीता सती तं पतिं प्रति प्रोवाच वक्ष्यमाणां जगाद॥ १६॥

मातरं प्रेषयस्वाशु भगिनीं वा तथा सुताम्।
अहं तु नैव गच्छामि प्राणत्यागं करोमि वै॥ १७॥

किमुवाचेत्याह–मातरमिति। हे धव त्वं द्रव्यार्जनार्थं मातरं स्वकीयां जननीम् आशु शीघ्रमेव तस्य सन्निधौ प्रेषयस्व, मातृशरी-

रेणैव तव द्रव्यार्जनमुचिततरं, न तु मच्छरीरेण: तथा भगिन्याः शरीरेण सुतायाः वा शरीरेणैव द्रव्यार्जनस्य प्राशस्त्यात्। योषायाः शरीरेणैव द्रव्यार्जनस्य उपहासजनकत्वात्। अहं तु तस्य सन्निधौ नैव गच्छामि वै इति निश्चयेन। बलात्कारेण त्वं मां तस्य सन्निधौ नेष्यसि चेत् प्राणत्यागं करोमि। अस्मिन् विषये संशयो नास्तीत्यर्थः। प्राणोत्क्रमणमेव मम सुखजनकं तस्य सन्निधौ गमनं तु मम अतीव दुःखजनकमिति भावः ॥ १७ ॥

त्वं तु क्लीवे अतिश्रेष्ठो मत्कार्यात्तु विनिर्गतः।
अधिक्षेपे बहुश्रेष्ठः स्त्रीणां कोपप्रवर्धकः ॥ १८ ॥

अथ एकेन श्लोकेन क्लीबगुणेन युक्तं धवं निन्दति—त्वं त्विति। हे प्रिय त्वं माम् एतादृशे कुत्सिते नियोजयसि अत एव त्वं क्लीवे अतिश्रेष्ठोसि नपुंसकजनसमूहेषु अग्रणीरिति यावत्। अत एव मत्कार्यात् मदीयं यत्कार्यं मदीयशरीरे विद्यमानस्य पञ्चशरस्य शमनरूपं तस्मात्त्वं विनिर्गतः मदीयकामशमने तव सामर्थ्यस्य लेशोपि नास्तीत्यर्थः। अत एव अधिक्षेपे मत्कृततिरस्कारे बहु-श्रेष्ठः श्रेष्ठतरः। मदीयतिरस्कारस्य ग्रहणं पुष्पाञ्जलेरिव निर-न्तरमेव ग्रहणं करोषीत्यर्थः। कुतः ? स्वशरीरे सामर्थ्याभावात्। सामर्थ्यञ्चेन्मां पराभवितुं शक्नोषीत्यर्थः। अत एव मदीयतिर-स्कारस्य ग्रहणमुचिततरम्। किञ्च स्त्रीणां कोपप्रवर्धकः कोपं प्रवर्धयतीति कोपप्रवर्धकः कोपनिदानमिति यावत्। 'स्त्रीणां पण्ढस्य दर्शनमात्रेणैव कोपः प्रादुर्भवति' इति चिरन्तनोक्तिः। 'स्त्रीभिः पंढः परित्यज्यत' इति न्यायात् ॥ १८ ॥

इति वाक्येन तं क्लीवं भर्त्सयित्वाऽतिकोपना।
सर्वासां सन्निधावेव रोदनं च चकार सा ॥ १९ ॥

इति पूर्वोक्तेन वाक्येन तं क्लीवं भर्त्सयित्वा तुच्छीकृत्य

अतिकोपना क्रोधार्णवे निमग्ना सा सर्वासां श्वश्रूप्रभृतीनां स्त्रीणां सन्निधावेव रोदनं दीनस्वरेण उत्क्रोशं चकार ॥ १९ ॥

तस्यास्तद्रोदनं दृष्ट्वा तां हन्तुं च समुत्सुकाः।
श्वश्रूप्रभृतयः सर्वा भर्त्सयन्ति च तां प्रियाम् ॥ २० ॥

तस्या इति। तस्याः योषायास्तद्दीनस्वरयुक्तं रोदनं दृष्ट्वा तां हन्तुं ताडितुं समुत्सुकाः उत्कण्ठिताः श्वश्रूप्रभृतयः सर्वेपि जनाः भर्त्सयन्ति। दुर्वाक्यपरम्परया अतीवदुःखं ददतीत्यर्थः ॥ २० ॥

अस्यास्तच्चरितं दृष्ट्वा कोपेन विकृताननाः।
रात्रौ तु तां ताडयन्त्यः कोपेनातीव वर्चसा ॥ २१ ॥

अस्या इति। अस्यास्तच्चरितम् अलीकचारित्र्यं दृष्ट्वा कोपेन हेतुना विकृताननाः विकृतं पूर्वप्रकृतेः सकाशाद्विकृतान्तरमापादितम् आननं यासां तास्तथोक्ताः। ताः श्वश्रूप्रभृतयः अतीववर्चसा महद्वेगतरेण कोपेन रात्रौ निशीथे जायमानेपि तां प्रियां ताडयन्त्यः रशनायाः धारणं कृत्वा सर्वशरीरेषु प्रहारं कुर्वन्त्यः ॥ २१ ॥

सा बाला क्लीबधविका शरीरेणातिदुर्बला।
कामभोगेन रहिता कुचभारेण पीडिता ॥ २२ ॥

अस्याः शरीरस्य क्षीणदशामाह—सेति। क्लीबधविका क्लीबः धवो यस्याः सा तथोक्ता, "प्रत्ययस्थादि"तीत्वम्। सा बाला अत्यन्तम् आधौ निमग्ना इति शेषः। कीदृशी सा शरीरेण अतिदुर्बला अस्थिमात्रावशिष्टा। अत एव कामभोगेन मनसिजतापशमनरूपेण सुखैश्वर्येण रहिता। अत एव कुचभारेण स्तनधारणरूपेणायासेन पीडिता। स्तनधारणेपि सामर्थ्यं नास्तीति भावः। विशेषणत्रयेण अस्याः शरीरे स्थितस्य आधेः अत्याधिक्यं सूचितम् ॥ २२ ॥

स्त्रीशरीरं विक्रयिणा स्त्रीजनेनोपजीविना ।
स्त्र्यर्जितेन च द्रव्येण उपलान् परिगृह्णता ॥ २३ ॥

अथ द्वाभ्यां क्लीबस्य व्यवसायाधिक्यमाह—स्त्रीशरीरेति । स्त्रियः शरीरं स्त्रीशरीरं विक्रयिणा विक्रीणातीति विक्रयी तेन विक्रयिणा स्त्रीशरीरम् अन्यस्मै प्रदाय द्रव्यसञ्चयं कुर्वता । पुनः कथंभूतेन स्त्रीजनेन उपजीविना । स्त्रीजनमात्रेणैव स्वकीयानुजीविनाम् उदरपोषणं कुर्वतेत्यर्थः । पुनः कीदृशेन स्त्रिया करणेन अर्जितेन संपादितेन द्रव्येण उपलान् मणीन् परिगृह्णता, परिगृह्णातीति परिगृह्णन् तेन परिगृह्णता । स्वकीयस्त्रीशरीरं पुरुषान्तरसात्कृत्वा यद्द्रव्यजातम् उपार्जितं गणिकाधववत् । तेन द्रव्यजातेन सितोपलानां सञ्चयं कुर्वतेति भावः । गणिकाधवोपि स्वकीयां स्त्रियम् आदरपूर्वकमन्यस्मै प्रदाय महद्द्रव्यस्य सञ्चयं कुरुते । गणिकाधवस्य या वृत्तिः तां वृत्तिमवलंबितवानित्यर्थः ॥ २३ ॥

तेनोपलेन रचितालङ्काराः कारिता भृशम् ।
मात्रे भगिन्यै दत्त्वा तान् कृतकृत्योऽभिजायते ॥ २४ ॥

तेनेति । तेन पूर्वोक्तेन उपलेन मणिना रचिताः प्रतिबद्धाः अलङ्काराः वलयादयः भृशं कारिताः तान् अलङ्कारान् मात्रे भगिन्यै दत्वा कृतकृत्यः कृतं कृत्यं येन सः कृतकृत्यः अभिजायते । अद्य संसारार्णवात् जितवानस्मीति मनस्यवधार्यत इति भावः ॥ २४ ॥

एवं कुर्वन् वालिशोऽपि सर्वज्ञ इति मन्यते ।
तस्य साधकभूता ये तेऽपि वालिशपुङ्गवाः ॥ २५ ॥

एवमिति । एवं कुर्वन् इत्थमनेन प्रकारेण कुत्सितकर्मणा द्रव्यार्जनं कुर्वन्नित्यर्थः । वालिशोपि मूर्खोपि सर्वज्ञ इति मन्यते । अस्मज्ज्ञातिसमुदाये अहं सर्वोपरि भवामीति मनस्यवधार्यत इति

भावः । तस्येति । तस्य बालिशस्य साधकभूताः सहायभूताः ये बालिशाः तेन क्रियमाणस्य कुत्सितकर्मणः अनुमोदनकर्तार इति यावत् । तेपि बालिशपुङ्गवाः मूर्खश्रेष्ठाः यथा क्लीवः अधमतरः तथा तेपि अधमतरा इति भावः ॥ २५ ॥

अवकीर्णी द्विजद्रोही खरद्वेपीति मत्सरी ।
स्त्रीजनेन प्रहर्पी च श्वपाकसदृशो मुनिः ॥ २६ ॥

अथ एकेन वनजं निन्दति—अवकीर्णीति । कीदृशः अलीकमुनिरित्याह । प्रथमाश्रमे विद्यमानः सन् द्वितीयाश्रमविहितं कर्म स्त्रीणां सहसंभापणादिकं करोतीति अवकीर्णी । "कतिधाव-कीर्णी प्रविशति चतुर्धेत्याहुरि"ति श्रुतेः । पुनः कीदृशः । द्विजद्रो-ही द्विजान् ब्राह्मणान् स्वकीयाज्ञाम् अकारयत् इति शेपः । द्रोहयतीति द्रोही । कारणं विनैव श्रुताध्ययनसंपन्नानां ब्राह्मणानां द्वेपकर्तेति यावत् । पुनः कीदृशः । खरद्वेपी गर्दभपशोः आलम्भने अधि-कारवानित्यर्थः । 'यो ब्रह्मचारी स्त्रियमुपेयात्स गर्दभं पशुमाल-भेते'ति आपस्तम्बकल्पोक्तेः । गर्दभपशोः आलम्भने अधिकारस-द्भावात् गर्दभपशोः कीनाशसदृश इत्यर्थः । अत एव अति-मत्सरी । अत्यन्तं मत्सरो विद्यते अस्य असौ अतिमत्सरी । निष्कारणमेव क्रोधाब्धौ निमज्ज्य स्थीयत इति भावः । स्त्रीजना-नां सन्निधिमात्रेणैव प्रहर्पते असौ प्रहर्पी । स्त्रीजनानां मुखनलि-नदर्शनमात्रेणैव क्रोधं नाशयतीत्यर्थः । अत एव श्वपाकसदृशः । शुनः पाकः श्वपाकः श्वपाकं कुर्वन्ति ते श्वपाकाः वंशपात्रकर्तारः । श्वपाकैस्तुल्यः श्वपाकसदृशः मुनिरिति शेपः, अत्यन्तं पाककर्मणि अभिरतो मुनिवेपधारीत्यर्थः ॥ २६ ॥

कुर्वन्त्येते तस्य सेवां कुलाचारेण विच्युताः ।
मुखभञ्जनमेतेपां कर्त्ता कोपि न विद्यते ॥ २७ ॥

अथ एकेन श्लोकेन तेषां मुखभञ्जने उपयांतराभावमाह—कुर्वन्तीति। एते पूर्वोक्ताः बालिशाधमाः तस्य सेवां निरन्तरं कुर्वन्ति। अत एव कुलाचारेण कुलपरम्परागतेन सदाचारेण विच्युताः प्रभ्रष्टाः। सदाचारेणेत्यत्र पञ्चम्यर्थे तृतीया सदाचारादिति यावत्। ननु सदाचारात् प्रभ्रष्टाः ये पुरुषाः ते दुष्कर्मणि प्रवृत्तानां बालिशापत्यानां मुखभञ्जनं किमर्थं न कुर्युरित्याह—मुखभञ्जनमिति। एतेषां बालिशापत्यानामिति यावत्। मुखभञ्जनकर्ता मुखकान्तेः नाशकर्ता कोपि न विद्यते॥

पठिष्यन्ति रहस्यं चेत्ते करिष्यन्ति निश्चितम्।
उपानद्भ्यां प्रहरणं करिष्यन्ति न संशयः॥ २८॥

एतेषां मुखभञ्जने युक्त्यन्तरमाह—पठिष्यन्तीति। इदं रहस्यं रहस्यप्रबन्धं पठिष्यन्ति चेत्ते एतेषां पूर्वोक्तबालिशापत्यानां मुखभञ्जनं मुखकान्तेः नाशनं करिष्यन्ति ध्रुवम्। अत्यन्तमेव दुर्दशां विधास्यन्तीत्याह—उपानद्भ्यामिति। हे बालिशाधमौरसाः यूयं ईदृग्दुष्कर्मणि प्रवृत्तिं कुरुथ अतः कारणाद् वः उपानद्भ्यां प्रहरणं कुर्मः। युष्माकं प्रहरणे उपानह्व्यतिरिक्तं न किंचिदायुधान्तरमस्तीति भावः। कुतः कुत्सितकर्मणः अत्याधिक्यात्। उदासीनजनाः एतस्य ग्रन्थस्य अवलोकनं करिष्यन्ति चेत्ते इत्थमेव वदिष्यन्ति। न तु एतत्कर्म साध्विति वदिष्यन्तीति भावः॥ २८॥

बालिशस्य तनुरोमहर्षणः स्त्रीजनस्य सुखदायक एव।
कामतन्त्र इति नाम ततोऽभूद्वर्धको मनसिजस्य स तंत्रः॥२९॥

इति श्रीदैवज्ञसूर्यवर्यविरचिते कामतन्त्राख्ये काव्ये
प्रथमः सर्गः समाप्तः॥

उपसंहरति—बालिशस्येति। ततः नाम तत्तस्मात्कारणात् एतस्य ग्रन्थस्य कामतन्त्र इति नाम अभूत्। एतन्नामधेये कारणमाह—सः तन्त्रः नाम कामतन्त्रः मनसिजस्य कामस्य वर्धकः वर्धनकर्त्ता। अत एव स्त्रीजनस्य स्त्रीसमूहस्य तदाश्रयीभूतस्येति यावत्। सुखदायकः सुखोद्बोधकर्तेति यावत्। एवकारः निश्चयार्थकः। स्त्रीसमूहस्येत्यत्र जात्यभिप्रायत्वादेकवचनम्। स्त्रीजनानामिति यावत्। कीदृशः कामतन्त्रः बालिशस्य तनुरोमहर्षणः। तनुषु रोमाणि तनुरोमाणि तनुरोमाणि हर्षयतीति तनुरोमहर्षणः। क्लीबस्य एतस्य रहस्यस्य श्रवणमात्रेणैव कृत्स्नशरीरेषु वेपथुः प्रादुर्भवति इत्यर्थः। एतस्य निबन्धस्य तस्य कर्णशष्कुल्यां प्रवेशनमात्रेणैव स्वकुत्सितकर्मश्रवणाल्लज्जासरित्पतौ निमज्ज्य स्थीयत इति भावः॥ २९॥

इति श्रीपदवाक्यप्रमाणपारावारपारीणमहोपाध्याय-
दैवज्ञसूर्यवर्यविरचिते कामतंत्रकाव्यव्याख्याने
प्रथमः सर्गः समाप्तः।

## अथ द्वितीयः सर्गः

सार्धद्वयाङ्गुलमिता ऊर्वोर्मध्येतिविश्रुता ।
तस्या दानेन पूर्वोक्तां प्राप्ता बालिशपुङ्गवाः ॥ १ ॥

झषकेतुं नमस्कृत्य विश्वस्य सुखबोधकम् ।
शम्भलीनां विनोदार्थं तत्र व्याख्यां करोम्यहम् ॥

क्लीबस्य क्लीबयोषाया आदिसर्गे निरूपणम् ।
कृतं द्वितीयसर्गे तु शम्भलीनां निरूपणम् ॥

क्रियतेऽल्पप्रयासेन मुनेः संतोषहेतवे ।
अवलोच्य बहून् ग्रन्थान् स्वयुक्त्या सुपरिष्कृतान् ॥

पूर्वस्मिन्सर्गे अवकीर्णिनः तस्य दूतस्य तस्य योषायाश्च निरूपणं कृतम् । षष्टिहायनयुक्तानां स्त्रीणां सुखाविर्भावार्थं द्वितीयं सर्गमारभते । तिस्रोतसधरप्रभृतयः शंभलीनाम् औरसाः सूक्ष्मकार्तस्वरतन्तुमिश्रितां महतीं बृहतिकाम् अवकीर्णिनः सकाशात् कथं प्राप्ता इत्यत आह—सार्धद्वयेति । सार्धद्वयाङ्गुलपरिमिता या ज्या सक्थ्नोः मध्यभागे स्थितेति यावत् । अत्र ज्याशब्दवाच्यं स्त्रीणां कामसद्म लक्ष्यते । तस्याः ज्यायाः अवकीर्णिनि स्वायत्तीकरणेन सर्वेपि महतीं बृहतिकां लब्धाः अन्यथा अवकीर्णिनि तस्याः ज्यायाः स्वायत्तीकरणाभावे एतेषां बालिशानां पूर्वोक्तं बहुमूल्यं पञ्चाशन्मुद्राभिः विक्रीतां महतीं बृहतिकां स्वप्नेपि दुर्लभतरामित्यर्थः । धनाशया सर्वेपि बालिशाः स्वकीयां योषां तस्मै नृसिंहाय अर्पयामासुरिति भावः । "द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथे"त्यमरः । "क्षोणी ज्या काश्यपी क्षितिरि"त्यमरः ॥ १ ॥

शंभल्यस्ता अनाहूता गच्छन्त्यस्तस्य सन्निधिम् ।
उरोजं धारयित्वा तु याचन्ते परमं वसु ॥ २ ॥

अवकीर्णिनः आश्रयीभूताः सर्वा अपि वृद्धस्त्रियः अवकी-र्णिनः आकारणं विनैव धनवञ्चतृष्णया स्वपुटभेदनकार्यं त्यक्त्वा तस्य सद्मनि जग्मुरित्याह—शंभल्य इति । तस्य सन्निधिं गच्छन्त्यः अनाहूताः दूतीनां आकारणेन रहिताः ताः शंभल्यः उरोजं उरसि जातः उरोजः तं उरोजं स्तनं धारयित्वा तस्य हस्तेन स्वस्तनयोः धारणं कारयित्वेत्यर्थः । स्वकीयस्तनोपरि तस्य सत्तायाः उत्पादनं कृत्वेति यावत् । परमं उत्कृष्टं वसु रत्नादिकं याचन्ते । उत्कृष्टवस्तुनः अभिलापया सर्वापि स्तनदा-नरूपे दुष्कर्मणि प्रवृत्ता जातेत्यर्थः ॥ २ ॥

तथा चोष्ठं तु दत्त्वा च बाहुभ्यां वेष्टयन्ति तम् ।
एवं कृतेपि सर्वाभिः सोपि किञ्चिन्न यच्छति ॥ ३ ॥

पूर्ववस्तुनः तृष्णयैव स्वकीयं ओष्ठपल्लवं तस्मै अर्पयामा-सुरित्याह—तथेति । तु पुनः ओष्ठं नाम ओष्ठपल्लवं तथा दत्त्वा यथा स्तनान् तदधीनतां चक्रुः तथा ओष्ठपल्लवस्यापि तदधी-नतां कारयित्वेत्यर्थः । बाहुभ्यां स्वकीयबाहुलताभ्यां तं वेष्टयन्ति तदीयशिरोधरायां गाढनिगूढतां कुर्वन्ति । धनतृष्णया स्वकीयस्त-नौ तस्य हृदि निधाय अतिकोमलबाहुभ्यां स्वकीयजारस्य गाढा-लिङ्गनं कुर्वन्तीत्यर्थः । एवमिति । किञ्च सर्वाभिः स्त्रीभिः एवं-कृतेपि इत्थंकृतेपि धनेच्छया इत्थं कुत्सितकर्मणि प्रवृत्तेपि सोपि जारोपि आसां स्त्रीणां किंचिद्वराटकमात्रमपि धनं न यच्छति न ददाति । दाण्-धातोः यच्छादेशः । अकुप्यमये वसुनि सतृष्णा-नां प्रमदानां मृदुवचसा मनीषायाः आहरणं कृत्वा स्वकीयका-र्यानंतरं तूष्णीमेव बहिस्तां निष्कासयतीत्यर्थः । स्वमुष्टिबंधनेन स्वलोभप्राबल्येन सोत्सुकाः स्त्रियः निरुत्सुकाः कारयित्वेति भावः ॥ ३ ॥

तथा स्वरूपहानिं च अभूत्तासां च सर्वतः ।
ज्ञातीनां नाम मुष्णँस्ता विराजन्ते पतिव्रताः ॥ ४ ॥

पांसुलावृत्तिं अवलंबितवतीनां कुलस्त्रीणां स्वकीयज्ञातिमध्ये अत्यन्तं दुर्दशा जातेत्याह—तथेति । तासां कुलस्त्रीणां च सर्वतः सर्वस्मिन् इति सर्वतः सप्तम्यास्तसिल् तथा स्वरूपहानिर्नाम स्वरूपनाशोऽभूत् । यथा पञ्चहायनात्मकाः शिशवः आसां निर्भर्त्सनां करिष्यंति तथेत्यर्थः । निर्दोषाणां कुलाङ्गनानां नामधेयानि मुष्णन् सर्वत्र चरन्तीत्याह—ज्ञातीनामिति । ताः ज्ञातीनां स्वकीयज्ञातौ विद्यमानानां कुलाङ्गनानामिति यावत् । नाम मुष्णन् नाशयन् पातिव्रत्यगुणयुक्तानां कुलस्त्रीणां इमाः पांसुलाः एतद्रूपन्नामधेयमापादयन्नित्यर्थः । विराजन्ते अतीव शोभन्ते । अवकीर्णिनः परिचारकाः वयमेव शुद्धतराः एतस्य अनुसरणं याः न करिष्यन्ति ता एव अधमतराः इत्थं परस्परं प्रजल्पंत्य इति भावः । मुष-स्तेये इत्यस्माद्धातोः शतृप्रत्ययः ॥

इत्थं प्रकृतिभूताभिः स्त्रीभिः सङ्गोतिदुःखदः ।
तेषां तु नामग्रहणं ग्रहीतव्यं कदाचन ॥ ५ ॥

एकेन श्लोकेन कविः स्वाशयं वदति—इत्थमिति । इत्थं प्रकृतिभूताभिः एतत्प्रकृतिकाभिः वारस्त्रीणां वृत्तिषु अनुरक्ताभिः स्त्रीभिः सह सङ्गः संबन्धः अतिदुःखदः अत्यन्तं दुःखजनक इति यावत् । पञ्चमश्लोकस्य उत्तरार्द्धे तुशब्दो निषेधार्थः । किञ्च तासान्नामग्रहणं कदाचन न ग्रहीतव्यं तु इति निश्चयेन । अये अनुरक्तस्य कस्यचित् पुरुषस्य आसां स्मरणं वा आहोस्वित् नामग्रहणं वा अत्यन्तं कस्यचित् विनिपातस्य निदानमित्यर्थः । "अयः शुभावहो विधिरि"त्यमरः ॥ ५ ॥

षष्टिहायनसंयुक्ताः श्वेतकेशेन सङ्गताः ।
जीर्णौ स्तनौ च धारिण्यः सौन्दर्येण विनिर्गताः ॥ ६ ॥

अथ आसां स्वरूपस्य कुत्सितचिह्नान्याह—षष्टीति। कीदृश्यः पूर्वोक्ताः स्त्रियः षष्टिहायनसंयुक्ताः षष्टिसंख्याप्रपूरकाश्च ते हायनाश्च षष्टिहायनास्तैः संयुक्ताः षष्टिहायनसंयुक्ताः। षष्टिवार्षिका इत्यर्थः। वार्धिकदशामनुभूयंत्य[1] इति भावः। अत एव श्वेतकेशेन पलितमूर्धजेन संगताः युक्ताः षष्टिशरदनन्तरं स्त्रीणां केशाः स्वयमेव श्वेततराः भवन्ति। अत एव जीर्णौ स्थानात् च्युतौ अतिलम्बायमानाविति यावत्। स्तनौ धारिण्यः धारयन्त्यः अतएव लम्बमानस्तनयोः धारणेनैव सौन्दर्येण षोडशशरदि शरीरे विद्यमानं यत्सौन्दर्यं तेन विनिर्गताः रहिताः षष्टिशरत्सु विद्यमानानां प्रमदानां षोडशशरदः सम्बन्धिसौन्दर्यस्य प्राप्तिस्तु अतीव कठिनतरेत्यर्थः ॥ ६ ॥

तस्योपरि रताः सर्वा लुण्ठने ह्यतिकोविदाः ।
शिशूंस्तत्र प्रेषयन्त्यस्तथा स्त्रीबालिका अपि ॥ ७ ॥

षष्टिहायनप्रभृतयः सर्वा अपि योषितः धवविषयिणीं स्नेहपरम्परां विहाय स्वकीयजारशरीरे एव सतृष्णाः अभवन्नित्याह—तस्येति। सर्वाः पूर्वोक्ताः स्त्रियः षष्टिहायनप्रभृतय इति यावत्। तस्य पूर्वोक्तस्य स्वकीयजारस्य उपरिरताः अनुरक्ताः जारस्य अभिलाषायाः परिपूरणे समर्थतराः, यस्य यस्य अङ्गस्य उपरि सतृष्णोऽभिजायते जारः तं तं अङ्गं तदधीनतां कुर्वन्त्य इति भावः। निरीक्षणप्रभृतिविलासानां अतिकुशलतयैव तस्य सद्मनि विद्यमानं सर्वं वसु आत्मसादकुर्वन्नित्याह—लुण्ठने-इति।

---

(१) अनुभवन्त्य इति युक्तः पाठः।

लुण्ठने सर्वस्वापहरणे हि अतिकोविदाः अत्यन्तं चतुराः। पूर्वदिनापेक्षया तस्मिन् दिने तस्य अधिकतरां वारुणीं पाययित्वा सन्निधौ विद्यमानं पात्रादिकं सर्वं वस्तुजातं शिशुद्वारा स्वसद्मनि विभागेन प्रापणं कुर्वन्त्य इत्यर्थः। किञ्च शिशून् दशशरद्भिः युक्तान् तत्र तस्य सन्निधौ प्रेषयन्त्यः अध्ययनं संपरित्याज्य सम्यक् परित्यागं कारयित्वेत्यर्थः। भो शिशवः अध्ययने परिश्रमं मा कुरुत। किंतु एतस्य परिचर्यां कुरुत। तथा स्त्रीबालिकाः स्त्रीलाञ्छनेन स्तनोद्भवरूपेण लाञ्छनेनेति यावत्। युक्ताः स्त्रीबालिका अपि प्रेषयन्त्य इति शेषः॥ ७॥

पतिं प्रतार्य ताः सर्वा गच्छन्त्यस्तस्य सद्मनि।
रात्रौ तेन सह क्रीडां कुर्वन्त्यः पतिविस्मृताः॥ ८॥

तत्पक्षपातिन्यः सर्वा अपि जरतीप्रभृतयो योषितः केनचिद्व्याजेन स्वपतिं प्रतार्य तेन सह नर्मकर्म कर्तुं तस्य सद्मनि जग्मुरित्याह—पतिमिति। ताः सर्वाः स्त्रियः तस्य जारस्य सद्मनि स्वशरीरे विद्यमानस्य उपपतेः निःसारणार्थं गच्छन्त्यः। किं कृत्वा पतिं प्रतार्य। छलनचातुर्येण स्वपतिधिषणायाः उद्भवः, अन्धकूपे निमज्ज्येत्यर्थः। ननु स्वपतेः उपलब्धेः पङ्के अवसादनरूपं दुष्कर्म कृत्वा किमर्थं तत्र अगमन्नित्याह—रात्राविति। तेन जारेण सह रात्रौ निशीथे जायमानेपि क्रीडां सुरतचेष्टापरम्परां कुर्वन्त्यः। कथंभूतास्ताः पतिं विस्मृताः पतिविस्मृताः। जारेण सह क्रियमाणस्य नर्मकर्मणः रसाधिक्यवशात् पतिषु विद्यमानं स्नेहसमूहं विस्मृता इति भावः। 'अनिरुद्ध उपापति'-रित्यमरः। 'क्रीडा खेला च नर्म चे'त्यमरः॥ ८॥

---

(१) झषकेतोरित्यत्र पाठो युक्तः।

प्रत्यूषे जायमानेपि गच्छन्त्यो निजमंदिरम् ।
पृष्टे भर्तरि ता योषा भर्तृछद्मनि तत्पराः ।
अन्यथैव प्रजल्पन्त्यः भर्तृकोपनिवारकाः ॥ ९ ॥

ननु जारसद्मनः सकाशात् निर्भयेन स्वसद्मनि कथं प्राप्नुवन्तीत्याह—प्रत्यूषे इति । प्रत्यूषे जायमानेपि अनूरोः प्रादुर्भावे सत्त्वेपि निजमन्दिरं गच्छन्त्यः । स्वगृहगमनानन्तरं भर्तरि पृष्टे सति किमूचुरित्याह—पृष्ट इति । भर्त्तरि पृष्टे सति हे प्रिये पञ्चशरव्यथया अतीव पीडितं मां विहाय क्व गतासि इति वाक्ये निगदिते सतीति शेषः । ताः योषाः अन्यथैव प्रजल्पन्त्यः । यत्रपृष्टवाक्यस्य विरुद्धवाक्यं वदन्त्यः, कीदृश्यस्ताः भर्तृछद्मनि तत्पराः । छलनचातुर्येण पत्याकांक्षितस्य वाक्यस्य निराकरणं कुर्वन्त्यः, अतएव पत्याकांक्षितस्य वाच्यस्य निराकरणादेव भर्तृकोपनिवारिकाः उपशमनकर्त्र्य इति यावत् ॥ ९ ॥

भर्तृषु ज्ञायमानेषु चाननं नमनीकृतः ।
उपानद्भ्यां प्रहरणं स्वीकुर्वन्त्योतिदुःखिता ॥ १० ॥

ननु योषाभिः प्रयुक्तं छलनवाक्यं यदा एते अजानन् तदा आसां कीदृशी अवस्था जातेत्यत आह—भर्तृष्विति । भर्तृषु ज्ञायमानेषु छलनकर्मसमूहं ज्ञातेषु सत्सु आननं स्वकीयमुखं नमनीकृतः । प्रह्वीकृतः । अभूततद्भावे च्विप्रत्ययः । अत एव स्वकीयकुत्सितकर्मभर्तृश्रोतृपथगमनादेव उपानद्भ्यां प्रहरणं कृत्स्नं शरीरोपरि ताडनं स्वीकुर्वन्त्यः । अत एव अतिदुःखिताः । दुःखिपङ्कनिम्नगायां निमग्नाः ॥ १० ॥

तथा पादप्रहरणं हस्तयोर्बन्धनं तथा ।
दुर्दशामनुभूयंत्यः पतीनां गर्वनाशकाः ॥ ११ ॥

तथेति । किंच तथा पादप्रहरणं ताडनं हस्तयोर्बन्धनं रज्-

तस्य उदंजि धारयन्त्यः, अर्थात् स्वकीयहस्तेनेति शेषः। तेन शिश्नेन उदंजिना तोषिताः संतुष्टाः 'उदंजेः' अतिदीर्घतरत्वात्। विशेषान्तरमाह—परस्परमिति। परस्परं अन्योन्यं प्रजल्पन्त्यः, किं प्रजल्पन्त्य इत्यत आह—मैथुन इति। अयं मैथुने सुदृढः दृढतरः ॥ १६ ॥

अस्माकं कामशमने सामर्थ्यं बहु दृश्यते।
कामस्य तु प्रशान्त्यर्थमागच्छामो निरन्तरम् ॥ १७ ॥

वचनान्तरमाह—अस्माकमिति। अस्माकं कामशमने बहु सामर्थ्यं दृश्यते। द्रव्याभिलाषां पुरस्कृत्य एतस्य सन्निधौ न आगमिष्यामः किन्तु अस्मदीयकुसुमपञ्चकशमनार्थमेव आगमिष्यामः इति वदन्नाह—कामस्य त्विति। तु इति निश्चयेन ॥१७॥

कामप्रशमने दक्षो मैथुने ह्यतिकोविदः।
चुम्बने ह्यतिमूर्खश्च धारणे स्तनयोस्तथा ॥ १८ ॥

पूर्वस्मिन् श्लोके 'अयं मैथुने सुदृढ' इत्युक्तं सुदृढत्वमेव वर्णयन्नाह—कामप्रशमने इति। दक्षः दृढतरः, अतिकोविदः। अतीवचतुरः। कामप्रशमने दक्षः, 'मैथुने ह्यतिकोविद' इतिचरणद्वयेन आसां जारस्य आभ्यन्तररतविषये चातुर्याधिक्यमुक्तम्। उत्तरचरणद्वयेन बाह्यरतविषये मूर्खत्वाधिक्यं वर्णयन्नाह—'चुम्बने' इति कस्माद्धेतोः अतिमूर्खत्वमित्याकांक्षायां मुखोपरि पलितश्मश्रूणामत्याधिक्यत्वात् नखानामतिदीर्घतरत्वात् कनककलशसदृशानां कुचानां धारणे मूर्खतर इत्यर्थः ॥ १८ ॥

मुखे स्थितानि श्मश्रूणि अतिश्वेततराणि च।
तस्य तन्द्रौ जायमाने कुर्वन्त्यग्नेश्च योजनम् ॥ १९ ॥

अथ काश्चन योषाः मददोषस्य अत्याधिक्याच्छरीरोपरि अनुसन्धानाभावात् कूपीटयोनेः शलाकया कृत्वा तस्य मुखसं-

ग्रन्थिनः केशानप्लुपन्नित्याह—मुख इति। तंद्रौ जायमाने तन्द्रि-शब्देन अल्पनिद्रायाः ग्रहणं, अग्नेः संयोजनं कुर्वन्ति ॥ १९ ॥

अग्निना दह्यमानानि तस्य श्मश्रूणि सर्वतः।
तथा कृत्स्नं शरीरं च भस्मीभूतं च सर्वतः ॥ २० ॥

अग्निनेति। अग्निना दह्यमानानि दहंति, सर्वतः सर्वप्रान्ते तस्य श्मश्रूणि अग्निसंयोगेन कृत्स्नं शरीरं अत्यन्तं अदहदित्याह–तथेति। एकः चकारः पादपूरणार्थः एकः आनन्तर्यार्थः ॥ २० ॥

प्रबुद्धस्तु ततः सोऽपि शरीरेण प्रपीडितः।
सर्वमग्निं शान्तयित्वा शीतलेन ऋणेन च ॥ २१ ॥

उपर्युधस्य शलाकया श्मश्रुषु संयोजनानन्तरं तस्य शरीरस्य कीदृगवस्था जातेत्याह—प्रबुद्ध इति। मदाविर्भावस्य पञ्चमाव स्थायां प्राप्तायां प्रबुद्धः अपहतमदरागः सन्निति यावत्। प्रपीडितः अतीव दुःखितः सन्निति शेषः। किंच शीतलतरेण ऋणेन जलेन सर्वमग्निं शान्तयित्वा ॥ २१ ॥

महद् महद्व्रणं तस्य शरीरे समुपस्थितम्।
तेन व्रणेन च भृशं दुःखमध्येऽवसीदति ॥ २२ ॥

शरीरे जलसेचनानन्तरं किमुत्पन्नमत आह—महदिति। महद्व्यथाद्योतनार्थं वीप्साग्रहणम्। व्रणं स्फोटमिति यावत्। समुपस्थितं उत्पन्नम्। तेन व्रणेन च भृशं निर्भरं दुःखमध्ये दुःखसद्मनि अवसीदति तिष्ठति ॥ २२ ॥

वानीरेण प्रहारं च तस्याः पृष्ठे ददाति सः।
तस्यै रात्र्यां तु यद्दत्तं सौवर्णं वसनं तथा ॥ २३ ॥

---

(१) पञ्चावस्थास्तु वात्स्यायनस्मृतौ प्रतिपादितास्तदुक्तं—
स्वीकारादुद्भवो ज्ञेयः पश्चात्तु तदधीनता।
आत्यन्तिको विस्मयश्च सुप्रुप्तिश्च यथा क्रमात्।
पञ्चावस्था इमा प्रोक्ता वात्स्यायनमुनीरिता इति।

गतासि त्वं प्रिये कुत्र तथ्यं ब्रूहि ममाग्रतः ।
अन्यथा त्वां हनिष्यामि तव त्यागं करोमि वै ॥ ३० ॥

त्यक्त्वेति। मां त्यक्त्वा हे प्रिये कुत्र गतासि त्वं, ममाग्रतः मत्सन्निधौ तथ्यं ब्रूहि । 'सत्यं तथ्यमृतं सम्यगि'त्यमरः ॥३०॥

एवं पृष्टा च सा योषा अन्यथैव प्रजल्पति ।
तस्या दुष्टतरं वाक्यं श्रुत्वा कोपेन विह्वलः ।
भृशं तां ताडयामास मुखे पृष्ठे च सर्वतः ॥ ३१ ॥

सत्यकथनाभावे शासनप्रदानमाह—अन्यथेति । अन्यथा सत्यकथनाभावे त्वां हनिष्यामि ताडयिष्यामि। अन्यद्विशेषमाह—तवेति । वै इति निश्चयेन तव त्यागमेव करोमि न तु तव परिग्रहं करोमीत्यर्थः । एवं भर्त्तरि पृष्टे सति छलनचातुर्ये एव तत्पराभूत् नतु तथ्यकथने इत्यत आह—एवमिति । एवं पृष्टा सा योषा-भर्त्रेति शेषः । प्रश्नस्य वाक्यस्य विपरीतमेव वदति न तु प्रश्नानुरूपं वदति । पूर्वस्मिन् श्लोके 'त्वां ताडयिष्यामी'त्युक्तं ताडनमेवाह—तस्या इति प्रश्नानुरूपकथनादेव कोपेन विह्वलः सन् तस्याः दुष्टतरं छलनप्रधानं वाक्यं श्रुत्वा मुखे पृष्ठे सर्वतः सर्वस्मिन्प्रदेशे च भृशं तां ताडयामास कशयेति शेषः ॥ ३१ ॥

खट्वायाः पातयित्वा च नर्मगेहाद्बहिः कृता ।
तत्र स्थित्वा रुदन्ती च शरीराघातविह्वला ॥ ३२ ॥

शासनान्तरमाह—खट्वाया इति । खट्वासकाशात्स्वहस्ताभ्यां अधः पातयित्वेत्यर्थः । कामसद्मनः सकाशात् बहिः कृता बहिः निष्कासिता इति सर्गसमाप्तिपर्यन्तं तस्याः कर्मण एव प्रशंसा-माह—तत्रेति । नर्मगेहसंबन्धिनि अलिन्दे स्थित्वा रुदन्ती रोदनं कुर्वन्ती । कीदृशी शरीरोपरि आघातः भर्तृताडनजन्यः तेन

विह्वला पीडिता । 'प्रघाणः प्रघणालिन्दबहिर्द्वारप्रकोष्ठके'-इत्यमरः ॥ ३२ ॥

अनेन कर्मणा सा च पतिप्रीतेर्विनिर्गता ।
पतिभोगेन रहिता पत्या भाषणविच्युता ॥ ३३ ॥

अनेनेति । अनेन छलनचातुर्यरूपेण कर्मणा सा च पतिप्रीतेः सकाशात् विनिर्गता प्रभ्रष्टा । भर्तुः प्रीतिरहिता इत्यर्थः । निर्लज्जितायाः तस्याः अनिर्वचनीयव्यवसायाधिक्यमाह—पतिभोगेनेति । पतिसंबन्धी यो भोगः यभनक्रियारूपः तेन रहिता । आभाषणं संभाषणं तेन विच्युता । संभाषणरहितेत्यर्थः ॥ ३३ ॥

पतिक्रोधं क्रूरतरं दृष्ट्वा सा मदविच्युता ।
पतिं त्यक्त्वा सुहृष्टा सा तस्य गेहं जगाम सा ॥ ३४ ॥

पतीति । क्रूरतरं अतीवनिष्ठुरं पतिक्रोधं दृष्ट्वा मदेन स्खलिता सती सा पूर्वोक्तगुणविशिष्टं पतिं त्यक्त्वा सुहृष्टा पुनः मदोद्बोधेन विह्वला सती तस्य जारस्य गेहं जगाम अगच्छत् ॥ ३४ ॥

स्त्रिया प्रहर्षिणा तेन सङ्गता मदविह्वला ।
बाहुवल्ल्या वेष्टयन्ती तं मुनिं स्त्रीविहर्षिणम् ॥ ३५ ॥

पुनः तस्य गेहं गत्वा किं कृतवतीत्याह—स्त्रियेति । तेन उपपतिना सङ्गता सम्मिलिता कीदृशेन तेन स्त्रिया स्त्रीजातिमात्रेण प्रहर्षिणा प्रहर्षवता । तदीयहर्षस्य उपादानकारणं स्त्रीसमूह एव । कीदृशी इयं मदविह्वला मदपीडया अतीवविवशा । सुरतक्रियायाः उपक्रमं अप्रेरितैव स्वयमेव प्रारब्धवतीत्याह—बाहुल्येति । स्त्रिभिः विहर्षः अस्य अस्तीति स्त्रीविहर्षी तं स्त्रीविहर्षिणं तं मुनिं बाहुवल्ल्या बाहुलतया वेष्टयन्ती ॥ ३५ ॥

चण्डालसदृशः सोपि तां धृत्वाऽतीवहर्षितः ।
तस्या उत्थाप्य जंघे च योन्यां शिश्नं समाविशत् ॥ ३६ ॥

अनया प्रबोधितस्य तस्य नर्मक्रिया प्रादुरभूदित्याह—चण्डालेति। तस्याः धारणं कृत्वा अतीवहर्षितः सन् तस्याः जङ्घे उत्थाप्य योनौ उपस्थे शिश्नं समाविशत् प्रावेशयत्। कीदृशः चण्डालेन ईषन्न्यूनः चण्डालकल्पः, ईषदर्थे कल्पप्प्रत्ययः। नच बहुजनानां पोषकस्य कथं चण्डालत्वमुपपन्नमिति वाच्यम्। पोषणकर्तृत्वे समर्थोपि बलात्कारेण शिशूनां आकर्षणाद्धेतोः आकर्षणजन्यं चण्डालत्वं एतस्य उपपन्नं न तु तज्जातिसंबन्धित्वं, ते यथा शुनां आकर्षणे निष्ठुरतराः तथा अयं योषाणां आकर्षणे निष्ठुरतर इत्यभिप्रायेणोक्तमलं पल्लवितेन। ग्रन्थविस्तरभिया बहु नोच्यते ॥ ३६ ॥

उरोजयोः धारणं च तथा वक्त्रस्य चुम्बनम्।
उपस्थस्योपरि भृशमाघातं कामनाशकम्।
करोति सुतरामेव तस्याः सन्तोषहेतवे ॥ ३७ ॥

तस्याः योनौ उदंजेः प्रवेशनानन्तरं साकल्येन सुरतक्रियां प्रारब्धवानित्याह—उरोजयोरिति। स्तनयोः धारणं वक्त्रस्य चुम्बनं भृशं दृढतरं कामनाशकं कामगर्वनाशकं आघातं ताडनं सुतरामेव अत्यन्तमेव करोति, तस्याः सन्तोषप्रादुर्भावार्थं। साकल्यशब्देन एककालावच्छेदेन अङ्गजातविशिष्टस्य सुरतस्य अनुष्ठानं ध्वन्यते। कुचधारणादिकं अङ्गं दीर्घतमस्य प्रवेशनं प्रधानम् ॥

सा योषा वर्णिसुहृदा नर्मदानेऽतिकोविदा।
धवत्यागे सुहृष्टा च आघातेन प्रियंवदा ॥ ३८ ॥

अर्धश्लोकेन तेन संयुक्तायास्तस्याः मणितविलासमाह—सेति। वर्णिनः सुहृदा असुसमा। अत एव नर्मदाने सुरतानुमतौ अतिकोविदा चतुरतरा। धवत्यागे स्वकीयपतित्यागे सुहृष्टा च। आह्लादोदधौ निमग्ना अत एव आघातेन तेन क्रिय-

माणेन प्रियंवदा प्रियं वाक्यं ब्रुवाणा। विशेषणचतुष्टयेन तस्याः भणितविलासमुक्तम् ॥ ३८ ॥

हस्ताभ्यां ताडयन्ती च तं जारं वर्णिलिङ्गिनम् ।
जारस्य नामग्रहणं गृहीत्वा तं जगाद सा ॥ ३९ ॥

उत्तरश्लोकेन भणितविलासस्यैवान्तरविलासमाह—हस्ताभ्यामिति। वर्णिलिंगिनं वर्णिवेषधारिणं तं जारं हस्ताभ्यां ताडयन्ती प्रहारं कुर्वती, स्वार्थे णिच्। णिजन्तात् ङीप्। नामग्रहणं नामधेयं गृहीत्वा तं जगाद ॥ ३९ ॥

हे नृसिंह क्लीवरूप मा कुरुष्व परिश्रमम् ।
त्वत्स्वरूपं मया ज्ञातं वृथा तव परिश्रमः ॥ ४० ॥

किञ्जगादेत्याह—हे नृसिंहेति। क्लीवरूप क्लीवसदृश परिश्रमं सुरतविषयकं मा कुरुष्व न कर्त्तव्यम्। ननु त्वदनुरूपया नायिकया सह क्षणमात्रसंबन्धोपि दुर्लभतरः किमर्थं सुरतविषयकं परिश्रमं न कुर्या इत्युक्तं चेत्सत्यं, इन्द्रियस्य कनिष्ठिकाङ्गुलेः पर्वतुल्यत्वात् परिश्रमस्य व्यर्थत्वं ध्वनयन्नाह—त्वत्स्वरूपमिति ॥

तव शिश्नस्याल्पतया नपुंसक इति श्रुतः ॥ ४१ ॥
तवेति 'नपुंसकः संदली स्यादिति'ति हैमः ।
मद्देहं त्यज उत्तिष्ठ गच्छ स्थाने स्थिरो भव ।
लघुत्वात्तव शिश्नस्य तव दोषो न विद्यते ॥ ४२ ॥

तिरस्कारपूर्वकं वाक्यमाह—मद्देहमिति। मदीयं शरीरं त्यज त्यागं कुरु। उत्तिष्ठ। आलिङ्गनं त्यक्त्वा स्थलान्तरे गच्छ। कुत्र गन्तव्यमित्यपेक्षायां काष्ठमयचतुष्के स्थाने स्थिरो भव। ननु कामुकोहं कथं तव देहन्त्यजामीत्याकांक्षायामाह—लघुत्वादिति। स्पष्टम् ॥ ४१-४२ ॥

इति वाक्येन तं क्लीवं भर्त्सयित्वा पुनः पुनः ।
खट्वायाः शयनं त्यक्त्वा वसनं परिधाय च ॥ ४३ ॥

उपसंहरति—इतीति । इति पूर्वोक्तवाक्येन तं क्लीवं पुनः पुनः भर्त्सयित्वा तुच्छीकृत्य तेन सह खट्वायां शयनं त्यक्त्वा सुरतकर्मणि विस्रंसितं वसनं परिधाय ॥ ४३ ॥

कूर्पासकं बन्धयित्वा कुचयोर्भूषणं महत् ।
तेन दत्ता रौप्यमुद्रा स्वर्णमुद्रास्तथा अपि ॥ ४४ ॥

पुनः किं कृतवती इत्याशंक्याह—कूर्पासकमिति । कुचयोः महत् भूषणं कूर्पासकं स्तनबन्धवसनं बन्धयित्वा बन्धनं कृत्वा तेन जारेण दत्ताः रौप्यमुद्राः तथा स्वर्णमुद्रा अपि दृढतरं बन्धनं कृत्वेति शेषः ॥ ४४ ॥

नवं नवं तथा वासो जाम्बूनदमयं महत् ।
सर्वेषां बन्धनं कृत्वा वस्तुजातं सुगोप्य च ॥ ४५ ॥

नवं नवमिति । सुवर्णमयं नवं नवं वासः सर्वेषां पूर्वोक्तादीनां वस्तुजातादीनां बन्धनं कृत्वा अन्यदप्यनिर्वचनीयं वस्तुजातं सुगोप्य च ॥ ४५ ॥

पुनः क्लीवं समालिंग्य निष्पीड्य वृषणं तथा ।
तं क्लीवं सहसा त्यक्त्वा स्वगृहं प्राप सा क्षणात् ॥ ४६ ॥

पुनरिति । पश्चात् पुनः क्लीवं समालिंग्य तदीयोरसा स्वकीयं उरः संयोज्य तथा वृषणं हस्तेन निष्पीड्य सा तं क्लीवं सहसा त्यक्त्वा यदा वृषणनिष्पीडनजन्यया व्यथया पीडितः सन् विह्वलो जातः तस्मिन् क्षणे झटिति तं त्यक्त्वा क्षणमात्रेणैव स्वगृहं प्राप ॥ ४६ ॥

धवादीनां पोषणं तु कुरुते वर्णिनः प्रिया ।
तेन द्रव्येण मुदिता सुखीभूत्वा चरन्ति हि ॥ ४७ ॥

स्वगृहगमनानन्तरं तेन द्रव्येण किमुपयोगः कृतवतीत्याह—धवादीनामिति । धवादीनां पोषणं उदरभरणं तेन द्रव्येण वर्णिनः प्रिया कुरुते । अनेन वाक्येन अस्याः पतेः स्वकीयव्यवसायेन धनप्राप्तेरभावः सूचितः किञ्च तेन द्रव्येण तस्य द्रव्यस्य भक्षणेनेतियावत् । मुदिताः सन्तः हर्षयुक्ताः सन्तः सुखीभूत्वा चरन्ति हि । 'चरगति भक्षणयोरि'ति धातुः ॥ ४७ ॥

उपहासं च सर्वेषां ते कुर्वन्ति निरन्तरम् ।
वर्णिनस्तु पृथग्भूता ये विद्वांसः सुहृज्जनाः ॥
सह तेषां वैरभावं धारयन्ति निरन्तरम् ॥ ४८ ॥

ननु उपस्थदानतः प्राप्तस्य धनस्यैव अवलम्बनं कृत्वा कथं उज्वलस्वरूपेण सर्वत्र गच्छन्तीत्याह—उपहासमिति । सर्वेषां उपस्थदानजन्यद्रव्यपरिग्रहे । अतिनिष्ठुराणां सर्वेषां ज्ञातीनां उपहास्यं निरन्तरमेव कुर्वंति । व्यवसायप्रतियोगिकत्वेन स्वकीयजठरानलस्य उपशान्त्योपलब्धेः सर्वेषां सह वैरभावमपि धारयन्तीत्याह—वर्णिन इति पृथग्भूताः तस्याऽनुपजीविनः । निरन्तरं अविच्छिन्नमेव ॥ ४८ ॥

क्लीबस्योपस्थदानाच्च महद्गर्वेण सङ्गताः ।
महद्धासं धारयन्तः सुखिनः सन्तु सर्वदा ॥ ४९ ॥

आशीर्वादपूर्वकं एतेषां गुणाधिक्यमाह—क्लीबस्येति । चतुर्थ्यर्थे षष्ठी । उपस्थदानात् स्वसत्तानिवृत्तिपरत्तोत्पादकत्वाद्धेतोः महद्गर्वेण अहंकाराधिक्येन सङ्गताः । गर्वस्य चिह्नान्याह—महदिति । महद्धासं बहुमौल्येन विक्रीतं । सुखरूपेण तिष्ठन्तु-'ष्ठागतिनिवृत्तावि'त्यस्माद्धातोः कर्त्तरि लोट् परस्मैपदप्रथमपुरुषबहुवचनान्तं पदम् ॥ ४९ ॥

क्लीबस्य नरसिंहस्य क्रोधहेतुं विनाशकम् ।
नारायणस्य दूतस्य मुखदीप्तेर्विनाशकम् ॥ ५० ॥

इतिश्रीकामतन्त्रे द्वितीयः सर्गः ॥

ननु एतस्य प्रबन्धस्य रचनायां किं प्रयोजनं इत्याशंक्य प्रयोजनद्वयमनुवदति—क्लीबस्येति । नुः सिः नृसिः हि— नस्तीति नृसिंहः लिङ्गद्वयशून्य इदं काव्यं क्रोधहेतुकं क्रोधनिदानं स्वकीयकुत्सितचारित्र्यस्य विवरणरूपत्वात् । विनाशनं । क्रोध- नाशकम् । स्वकीयचारित्र्यस्यैव अस्मिन् शास्त्रे प्राधान्येनवर्णि- तत्वात् । प्रमदाहर्त्तुः तस्य दूतस्य मुखदीप्तेः मुखकान्तेः विनाशकं नाशजनकम् । एतस्य ग्रन्थस्य अन्यमुखाच्छ्रवणमात्रेणैव तस्य मुखकान्तेः नाशो भवतीत्यर्थः ॥

इति दैवज्ञसूर्यविरचिते कामतन्त्रकाव्ये द्वितीयः सर्गः

समाप्तश्चाऽयं ग्रन्थः

—❧—